### २९५. स्वतन्त्रः कर्त्ता ॥ ५४ ॥ (५५९)

'स्वतन्त्रः' इति प्रधानभूत उच्यते। अगुणभूतो यः क्रियासिद्धौ स्वातन्त्र्येण विवक्ष्यते तत्कारकं कर्तृसंज्ञं भवति। देवदत्तः पचति। स्थाली पचति।

कर्तृप्रदेशाः – कर्तृकरणयोस्तृतीया (२.३.१८) इत्येवमादयः ॥

### २९६. तत्प्रयोजको हेतुश्च ॥ ५५ ॥ (२५७५)

'तत्' इति अनन्तरः कर्ता परामृश्यते। तस्य प्रयोजकः तत्प्रयोजकः। निपातनात् समासः स्वतन्त्रस्य प्रयोजको योऽर्थः तत्कारकं हेतुसंज्ञं भवति, चकारात् कर्तृसंज्ञं च।

संज्ञासमावेशार्थश्चकारः। कुर्वाणं प्रयुङ्क्ते, कारयति हारयति। हेतुत्वाद् णिचो निमित्तं कर्तृत्वाच्च कर्तृप्रत्ययेनोच्यते।

हेतुप्रदेशाः – 'हेतुमति च' (३.१.२६) इत्येवमादयः ॥

### २९७. प्राग्रीश्वरान्निपाताः ॥ ५६ ॥ (१९)

'अधिरीश्वरे' (१.४.९७) इति वक्ष्यति। प्रागेतस्मादवधेर्यानित ऊर्ध्वमनुक्रमिष्यामः, निपातसंज्ञास्ते वेदितव्याः। वक्ष्यति – 'चादयोऽसत्त्वे' (१.४.५७) च, वा, ह, अह।

प्राग्वचनं संज्ञासमावेशार्थम्। गत्युपसर्गकर्मप्रवचनीयसंज्ञाभिस्सह निपातसंज्ञा समाविशति।

रेफोच्चारणम् 'ईश्वरे तोसुन्कसुनौ' (३.४.१३) इत्ययमवधिर्मा विज्ञायीति ॥

रीश्वराद्वीश्वरान्मा भूत्, कृन्मेजन्तः परोऽपि सः।
समासेष्वव्ययीभावो, लौकिकं चातिवर्तते ॥ (म.भा.१.४.५६ वा०१–४)

### २९८. चादयोऽसत्त्वे ॥ ५७ ॥ (२०)

चादयो निपातसंज्ञा भवन्ति, न चेत्सत्त्वे वर्तन्ते। प्रसज्यप्रतिषेधोऽयम्। 'सत्त्वम्' इति द्रव्यमुच्यते।

च। वा। ह। अह। एव। एवम्। नूनम्। शश्वत्। युगपत्। सूपत्।

कूपत्। कुवित् । नेत् । चेत् । चण् । कच्चित् । यत्र । नह । हन्त । माकिम् । नकिम् । माङ्। माङो ङकारो विशेषणार्थः – माङि लुङ् (३.३.१७५) इति, इह न भवति – मा भवतु, मा भविष्यति । नञ् । यावत् । तावत् । त्वा । त्वै। द्वै । रै । श्रौषट् । वौषट्। स्वाहा । वषट् । स्वाधा । ओम् । किल । तथा । अथ। सु । स्म । अस्मि । अ । इ। उ । ऋ । लृ । ए । ऐ । ओ । औ । अम् । तक्। उञ् । उकञ् । वेलायाम् । मात्रायाम्। यथा । यत् । यम् । तत् । किम् । पुरा। अद्धा । धिक् । हाहा । हे । है। प्याट् । पाट् । थाट् । अहो । उताहो । हो । तुम्। तथाहि । खलु । आम् । आहो। अथो । ननु । मन्ये । मिथ्या । असि । ब्रूहि । तु । नु । इति । इव । वत् । चन । बत। इह। आम् । शम् । कम्, । अनुकम्। नहिकम् । हिकम् सुकम् सत्यम् ऋतम् श्रद्धा [अद्धा] इद्धा । मुधा । नोचेत्। नचेत् । नहि । जातु । कथम् । कुतः । कुत्र । अव। अनु । हाहौ । हैहा । ईहा। आहोस्वित् । छम्बट् । खम् । दिष्ट्या । पशु । वट् । सह ‍। आनुषक् । अङ्ग । फट् । ताजक् । अये । अरे । चटु । बाट् । कुम्। खुम् । घुम् । हुम् । आईम्। शीम् । सीम् । वै ।

उपसर्गविभिक्तिस्वरप्रतिरूपकाश्च निपाताः (ग० सू० १६) ।

उपसर्गप्रतिरूपकाः –

अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥

‘ अच उपसर्गात्तः ’ (७.४.४७) इति तत्त्वं न भवति । दुर्नीतम् । दुर्नयः दुर्निर्णयः । उपसर्गात् (८.४.१४) इति णत्वं न भवति ।

असत्त्व इति किम्? पशुर्वै पुरुषः । पशुः पुरोडाशः ॥

निपातप्रदेशाः– स्वरादिनिपातमव्ययम् (१.१.३७) इत्येवमादयः ॥

**२९९. प्रादयः ॥ ५८ ॥ (२१)**

प्रादयोऽसत्त्वे निपातसंज्ञा भवन्ति ।

प्र । परा । अप । सम् । अनु । अव । निस् । निर् । दुस् । दुर् । वि । आङ् । नि । अधि । अपि । अति । सु । उत् । अभि । प्रति । परि । उप ।

पृथग्योगकरणमुत्तरसंज्ञाविशेषणार्थम् । ‘उपसर्गाः क्रियायोगे ’ (१.४.५९)

इति चादीनामुपसर्गसंज्ञा मा भूत् । असत्त्वे इत्येव – पराजयन्ति सेनाः ॥

## ३००. उपसर्गाः क्रियायोगे ॥ ५९ ॥ (२२)

प्रादयः क्रियायोगे उपसर्गसंज्ञा भवन्ति । प्रणयति, परिणयति । प्रणायकः, परिणायकः । क्रियायोग इति किम्? प्रगतो नायकोऽस्माद्देशात् प्रनायको देशः ।

मरुच्छब्दस्य चोपसंख्यानं कर्तव्यम् (म० भा० १.४.५९ । वा० २) । मरुद्भिर्दत्तो मरुत्तः । संज्ञाविधानसामर्थ्यादनजन्तत्वेऽपि ' अच उपसर्गात्तः ' (७.४.४७) इति तत्त्वं भवति । श्रच्छब्दस्योपसंख्यानम् (म० भा० १.४.५९ वा० ३) । ' आतश्चोपसर्गे' (३.३.१०६) इत्यङ् भवति – श्रद्धा ।
उपसर्गप्रदेशाः– ' उपसर्गे घोः किः ' (३.३.९३) इत्येवमादयः ॥

## ३०१. गतिश्च ॥ ६० ॥ (२३)

गतिसंज्ञकाश्च प्रादयो भवन्ति क्रियायोगे । प्रकृत्य (२.२.१८) । प्रकृतम् (६.२.४९)। यत्प्रकरोति (८.१.४९) ।

योगविभाग उत्तरार्थः । उत्तरत्र गतिसंज्ञैव यथा स्यात्, उपसर्गसंज्ञा मा भूत् । ऊरीस्यादित्यत्र ' उपसर्गप्रादुर्भ्यामिस्तिर्यच्परः ' (८.३.८७) इति षत्वं प्रसज्येत ।

चकारः संज्ञासमावेशार्थः । प्रणीतम् । अभिषिक्तम् । ' गतिरनन्तरः ' (६.२.४९) इति स्वरः, ' उपसर्गात् ' (८.४.१४, ८.३.६५) इति णत्वषत्वे च भवतः ।

कारिकाशब्दस्योपसंख्यानम् (म० भा० १.४ ६० । वा० १) । कारिकाकृत्य । कारिकाकृतम् । यत्कारिकाकरोति ।

पुनश्चनसौ छन्दसि गतिसंज्ञौ भवत इति वक्तव्यम् (म. भा. १.४.६० वा. २) । पुनरुत्स्यूतं वासो देयम् (मै० १.७.२) । गतिर्गतौ (८.१.७०) इति निघातो भवति । (उशिग्दूतः) चनोहितः (ऋ० ३.११.२) । गतिरनन्तरः (६.२.४९) इति स्वरः।

गतिप्रदेशाः –' कुगतिप्रादयः ' (२.२.१८) इत्येवमादयः ।

## ३०२. ऊर्यादिच्विडाचश्च ॥ ६१ ॥

ऊर्यादयः शब्दा च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञा भवन्ति। च्विडाचोः कृभ्वस्तियोगे विधानम्, तत्साहचर्यादूर्यादीनामपि तैरेव योगे गतिसंज्ञा विधीयते ।

ऊरीउररीशब्दावङ्गीकरणे विस्तारे च (ग० सू० १३६) । ऊरीकृत्य, ऊरीकृतम्, यदूरीकरोति । उररीकृत्य, उररीकृतम्, यदुररीकरोति ।

पापी । ताली । आताली । वेताली । धूसी । शकला । संशकला । ध्वंसकला। भ्रंशकला । एते शकलादयो हिंसायाम् (ग० सू० १३६)। शकलाकृत्य । संशकलाकृत्य। ध्वंसकलाकृत्य । भ्रंशकलाकृत्य गुलुगु धा पीडार्थे (ग0 सू0 १३६) । गुलुगुधाकृत्य । सजूः सहार्थे (ग० सू० १६७) । सजूःकृत्य । फलू, फली, विक्ली, आक्ली – इति विकारे (ग० सू० १३७)। फलूकृत्य । फलीकृत्य । विक्लीकृत्य । आक्लीकृत्य । आलोष्टी, कराली, केवाली शेवाली, वर्षाली, मस्मसा, मसमसा – एते हिंसायाम्। वषट् । वौषट्। श्रौषट् । स्वाहा । स्वधा । बन्धा । प्रादुस् । श्रुत् । आविस् ।

च्व्यन्ताः खल्वपि – शुक्लीकृत्य । शुक्लीकृतम् । यच्छुल्कीकरोति ।

डाच् – पटपटाकृत्य । पटपटाकृतम् । यत्पटपटाकरोति ॥

## ३०३. अनुकरणं चानितिपरम् ॥ ६२ ॥ (७६३)

इतिः परो यस्मादिति बहुव्रीहिः । अनुकरणमनितिपरं क्रियायोगे गतिसंज्ञं भवति । खाट्कृत्य । खाट्कृतम् । यत्खाट्करोति ।

अनितिपरमिति किम्? ‘ खाडिति कृत्वा निरष्ठीवत् ’ ॥

## ३०४. आदरानादरयोः सदसती ॥ ६३ ॥ (७६४)

प्रीतिसम्भ्रमः आदरः । परिभवौदासीन्यम् अनादरः । आदरानादरयोर्यथाक्रमं सदसच्छब्दौ गतिसंज्ञौ भवतः । सत्कृत्य, सत्कृतम्, यत्सत्करोति । असत्कृत्य, असत्कृतम्, यदसत्करोति ।

आदरानादरयोरिति किम्? सत्कृत्वा काण्डं गतः । असत्कृत्वा काण्डं गतः॥

### ३०५. भूषणेऽलम् ॥ ६४ ॥ (७६६)

अलम् इति प्रतिषेधे, सामर्थ्ये, पर्याप्तौ भूषणे चेति विशेषणमुपादीयते। भूषणे योऽलंशब्दः स गतिसंज्ञो भवति । अलंकृत्य, अलंकृतम्, यदलंकरोति।

भूषण इति किम्? अलं भुक्त्वा ओदनं गतः॥

### ३०६. अन्तरपरिग्रहे ॥ ६५ ॥ (७६६)

अन्तःशब्दोऽपरिग्रहेऽर्थेगतिसंज्ञो भवति । परिग्रहः स्वीकरणम्, तदभावे गतिसंज्ञा विधीयते । अन्तर्हत्य, अन्तर्हतम्, यदन्तर्हन्ति ।

अपरिग्रह इति किम्? अन्तर्हत्वा मूषिकां श्येनो गतः । परिगृह्य गत इत्यर्थः।

अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गसंज्ञा वक्तव्या (म० भा० १.४.६१ वा० १) । आङ् – अन्तर्द्धा (३.३.१०६) । कविधिः – अन्तर्द्धिः (३.३.९२) । णत्वम् – अन्तर्णयति (८.४.६४) ॥

### ३०७. कणेमनसी श्रद्धाप्रतीघाते ॥ ६६ ॥ (७६७)

कणेशब्दो मनस्शब्दश्च श्रद्धाप्रतीघाते गतिसंज्ञौ भवतः । कणेहत्य पयः पिबति। मनोहत्य पयः पिबति । तावत्पिबति यावदस्याभिलाषो निवृत्तः । श्रद्धा प्रतिहता इत्यर्थः ।

श्रद्धाप्रतीघाते इति किम्? कणे हत्वा गतः । मनो हत्वा गतः ॥

### ३०८. पुरोऽव्ययम् ॥ ६७ ॥ (७६८)

असिप्रत्ययान्तः पुरःशब्दोव्ययम् । स गतिसंज्ञो भवति । समासस्वरोपचाराः (८.३.४०) प्रयोजनम् । पुरस्कृत्य, पुरस्कृतम्, यत्पुरस्करोति ।

अव्ययमिति किम् ? पूः पुरौ, पुरः कृत्वा काण्डं गतः ॥

### ३०९. अस्तं च ॥ ६८ ॥ (७६९)

अस्तंशब्दो मकारान्तोऽव्ययमनुपलब्धौ वर्त्तते । स गतिसंज्ञो भवति । अस्तंगत्य सविता पुनरुदेति । अस्तंगतानि धनानि । यदस्तंगच्छति । अव्ययमित्येव – अस्तं काण्डम् । क्षिप्तमित्यर्थः ॥

## ३१०. अच्छ गत्यर्थवदेषु ॥ ६९ ॥ (७७०)

अच्छशब्दोऽव्ययमभिशब्दस्यार्थे वर्त्तते । स गत्यर्थेषु धातुषु वदतौ च गतिसंज्ञो भवति । अच्छगत्य, अच्छगतम्, यदच्छगच्छति । वदतौ – अच्छोद्य, अच्छोदितम्, यदच्छवदति । अव्ययमित्येव – उदकमच्छं गच्छति ॥

## ३११. अदोऽनुपदेशे ॥ ७० ॥ (७७१)

अदःशब्दस्त्यदादिषु पठ्यते, सोऽनुपदेशे गतिसंज्ञो भवति । उपदेशः परार्थः प्रयोगः । स्वयमेव तु यदा बुद्ध्या परामृशति तदा नास्त्युपदेश इति सोऽस्य विषयः। अदःकृत्य, अदःकृतम्, यददःकरोति ।

अनुपदेश इति किम्? अदः कृत्वा काण्डं गत इति परस्य कथयति ॥

## ३१२. तिरोऽन्तर्द्धौ ॥ ७१ ॥ (७७२)

अन्तर्द्धिः व्यवधानम् । तत्र तिरःशब्दो गतिसंज्ञो भवति । तिरोभूय, तिरोभूतम्, यत् तिरोभवति । अन्तर्द्धाविति किम्? तिरो भूत्वा स्थितः । पार्श्वतो भूत्वेत्यर्थः ॥

## ३१३. विभाषा कृञि ॥ ७२ ॥ (७७३)

' अन्तर्द्धौ ' इति वर्त्तते । प्राप्तविभाषेयम् । तिरःशब्दः करोतौ परतो विभाषा गतिसंज्ञो भवति । तिरःकृत्य, तिरस्कृत्य (८.३.४२) । तिरस्कृतम् । यत्तिरस्करोति। तिरःकृत्वा । तिरस्कृत्वा । अन्तर्द्धावित्येव तिरः कृत्वा काष्ठं तिष्ठति ॥

## ३१३. उपाजेऽन्वाजे ॥ ७३ ॥ (७७४)

' विभाषा कृञि ' इति वर्त्तते । उपाजेऽन्वाजेशब्दौ विभक्तिप्रतिरूपकौ निपातौ दुर्बलस्य सामर्थ्याधाने वर्त्तेते । तौ कृञि विभाषा गतिसंज्ञौ भवतः । उपाजेकृत्य, उपाजे कृत्वा । अन्वाजेकृत्य, अन्वाजे कृत्वा ॥

## ३१५. साक्षात्प्रभृतीनि च ॥ ७४ ॥ (७७५)

‘ विभाषा कृञि ’ इति वर्त्तते । साक्षात्प्रभृतीनि शब्दरूपाणि कृञि विभाषा गतिसंज्ञानि भवन्ति ।

साक्षात्प्रभृतिषु च्व्यर्थवचनम् (म० भा० १.४.७४ वा० १) । साक्षात् कृत्य, साक्षात्कृत्वा । मिथ्याकृत्य, मिथ्या कृत्वा । साक्षात् । मिथ्या । चिन्ता। भद्रा । लोचना । विभाषा । संपत्का । आस्था । अम । श्रद्धा । प्रजर्या । प्राजरुहा । वीजर्या। वीजरुहा । संसर्या । अर्थे । लवणम् । उष्णम् । शीतम्। उदकम् । आर्द्रम् । गतिसंज्ञासंनियोगेन लवणादीनां मकारान्तत्वं निपात्यते । अग्नौ । वशे । विकम्पने। विहसने । प्रहसने । प्रादुस् । नमस् । आविस् ॥

## ३१६. अनत्याधान उरसिमनसी ॥ ७५ ॥ (७७६)

‘ विभाषा कृञि ’ इति वर्त्तते । अत्याधानम् उपश्लेषणम्, तदभावेऽनत्याधाने उरसिमनसी शब्दौ विभाषा कृञि गतिसंज्ञौ भवतः । उरसिकृत्य, उरसि कृत्वा । मनसिकृत्य, मनसि कृत्वा ।

अनत्याधान इति किम् ? उरसि कृत्वा पाणिं शेते ॥

## ३१७. मध्ये पदे निवचने च ॥ ७६ ॥ (७७७)

‘ विभाषा कृञि ’ इति वर्त्तते । चकाराद् ‘ अनत्याधने ’ इति च । मध्ये, पदे, निवचने – इत्येते शब्दा अनत्याधाने विभाषा कृञि गतिसंज्ञा भवन्ति । मध्येकृत्य मध्ये कृत्वा । पदेकृत्य, पदे कृत्वा । निवचनम् वचनाभावः । निवचनेकृत्य, निवचने कृत्वा । वाचं नियम्येत्यर्थः । अनत्याधान इत्येवह – स्तिनः पदे कृत्वा शिरः शेते ॥

## ३१८. नित्यं हस्ते पाणावुपयमने ॥ ७७ ॥ (७७८)

‘ कृञि ’ इति वर्त्तते । ‘ हस्ते पाणौ ’ इत्येतौ शब्दौ कृञि नित्यं गतिसंज्ञौ भवत उपयमने । उपयमनम् दारकर्म । हस्तेकृत्य । पाणौकृत्य । दारकर्म कृत्वेत्यर्थः।

उपयमने इति किम्? हस्ते कृत्वा कार्षापणं गतः ॥

### ३१९. प्राध्वं बन्धने ॥ ७८ ॥ (७७९)

'कृञि' इति वर्त्तते। 'प्राध्वम्' इति मकारान्तमव्ययमानुकूल्ये वर्त्तते, तदानुकूल्यं बन्धनहेतुकं यदा भवति तदा प्राध्वंशब्दः कृञि नित्यं गतिसंज्ञो भवति। प्राध्वंकृत्य। बन्धन इति किम्? प्राध्वं कृत्वा शकटं गतः ॥

### ३२०. जीविकोपनिषदावौपम्ये ॥ ७९ ॥ (७८०)

'कृञि' इति वर्त्तते। जीविका, उपनिषत् – इत्येतौ शब्दौ औपम्ये विषये कृञि गतिसंज्ञौ भवतः। जीविकाकृत्य। उपनिषत्कृत्य।

औपम्य इति किम्? जीविकां कृत्वा गतः ॥

### ३२१. ते प्राग् धातोः ॥ ८० ॥ (२२३०)

ते गत्युपसर्गसंज्ञकाः धातोः प्राक् प्रयोक्तव्याः। तथा चैवोदाहृताः। 'ते' ग्रहणमुपसर्गार्थम्। गतयो ह्यनन्तराः ॥

### ३२२. छन्दसि परेऽपि ॥ ८१ ॥ (३३९१)

प्राक् प्रयोगे प्राप्ते छन्दसि परेभ्यनुज्ञायन्ते। छन्दसि विषये गत्युपसर्गसंज्ञकाः परेऽपि पूर्वेऽपि प्रयोक्तव्याः। न च परेषां प्रयुज्यमानानां संज्ञाकार्यं किञ्चिदस्ति। केवलं परप्रयोगेऽपि क्रियायोग एषामस्तीति ज्ञाप्यते। याति नि हस्तिना। नियाति हस्तिना। हन्ति नि मुष्टिना। निहन्ति मुष्टिना ॥

### ३२३. व्यवहिताश्च ॥ ८२ ॥ (३३९२)

व्यवहिताश्च गत्युपसर्गसंज्ञकाः छन्दसि दृश्यन्ते। 'आ मन्द्रैरिन्द्र हरिभिर्याहि मयुररोमभिः' (ऋ० ३.४५.१)। आयाहि (ऋ० ६.१६.१०)।

### ३२४. कर्मप्रवचनीयाः ॥ ८३ ॥ (५४६)

'कर्मप्रवचनीयाः' इत्यधिकारो वेदितव्यः। यानित ऊर्ध्वमनुक्रमिष्यामः कर्मप्रवचनीयसंज्ञास्ते वेदितव्याः। 'अधिरीश्वरे' (१.४.९७) इति यावद्वक्ष्यति।

कर्मप्रवचनीयप्रदेशाः–'कर्मप्रवचनीययुक्ते द्वितीया' (२.३.८) इत्येवमादयः ॥

## ३२५. अनुर्लक्षणे ॥ ८४ ॥ (५४७)

अनुशब्दो लक्षणे द्योत्ये कर्मप्रवचनीयसंज्ञो भवति। शाकल्यस्य संहितामनु (निशम्य देवः) प्रावर्षत् (म० भा० १.४.८३) । अनुडुद्यज्ञमन्वसिञ्चत् । अगस्त्यमन्वसिञ्चन्प्रजाः ।

किमर्थमिदमुच्यते, यावता 'लक्षणेत्थम्भूताख्यान' (१.४.९०) इति सिद्धैवानोः कर्मप्रवचनीयसंज्ञा ? हेत्वर्थं तु वचनम् (म० भा० १.४.८३ वा० २), हेतुतृतीयां बाधित्वा द्वितीयैव यथा स्यात् ॥

## ३२६. तृतीयार्थे ॥ ८५ ॥ (५४९)

अनुशब्दस्तृतीयार्थे द्योत्ये कर्मप्रवचनीयसंज्ञो भवति । नदीमन्ववसिता सेना । पर्वतमन्ववसिता सेना । पर्वतेन सम्बद्धेत्यर्थः ॥

## ३२७. हीने ॥ ८६ ॥ (५५०)

'हीन' इति न्यून उच्यते, स चोत्कृष्टापेक्षः । तेनेयं हीनोत्कृष्टसंबन्धे संज्ञा विज्ञायते। हीने द्योत्येऽयमनुः कर्मप्रवचनीयसंज्ञो भवति। अनुशाकटायनं वैयाकरणाः। अन्वर्जुनं योद्धारः ॥

## ३२८. उपोऽधिके च ॥ ८७ ॥ (५५१)

उपशब्दः अधिके हीने च द्योत्ये कर्मप्रवचनीयसंज्ञो भवति । उपखार्याः (२.३.९) द्रोणः । उपनिष्के कार्षापणम् । हीने – उपशाकटायनं वैयाकरणाः॥

## ३२९. अपपरी वर्जने ॥ ८८ ॥ (५९६)

अप–परी – शब्दौ वर्जने द्योत्ये कर्मप्रवचनीयसंजौ भवतः । प्रकृतेन सम्बन्धिना कस्यचिदनभिसम्बन्धः वर्जनम् । अप त्रिगर्त्तेभ्यो (२.३.१०) वृष्टो देवः। परि परि (८.१.५) त्रिगर्त्तेभ्यो वृष्टो देवः । वर्जन इति किम्? ओदनं परिषिञ्चति ॥

**३३०. आङ् मर्यादावचने ॥ ८९ ॥ (५९७)**

'आङ्' इत्येष शब्दो मर्यादावचने कर्मप्रवचनीयसंज्ञो भवति । अवधिः – मर्यादा । वचनग्रहणादभिविधिरपि गृह्यये । आ पाटलिपुत्राद् (२.३.१०) वृष्टो देवः । आकुमारं यशः पाणिनेः (म० भा० १.४.८८ वा० १) । आ सांकाश्यात् । आ मथुरायाः । मर्यादावचने इति किम्? ईषदर्थे क्रियायोगे च मा भूत् ॥

**३३१. लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः ॥ ९० ॥ (५५२)**

लक्षणे, इत्थंभूताख्याने, भागे, वीप्सायां च विषयभूतायाम् – प्रति, परि, अनु – इत्येते कर्मप्रवचनीयसंज्ञा भवन्ति । लक्षणे तावत् – वृक्षं प्रति विद्योतते विद्युत् । वृक्षं परि । वृक्षमनु । इत्थम्भूताख्याने – साधुर्देवदत्तो मातरं प्रति। मातरं परि । मातरमनु । भागे – यदत्र मां प्रति स्यात् । मां परि स्यात् । मामनु स्यात् । वीप्सायाम् – वृक्षं वृक्षं प्रति सिञ्चति, परि सिञ्चति, अनु सिञ्चति । लक्षणादिष्विति किम्? ओदनं परिषिञ्चति । अथ परिशब्दयोगे पञ्चमी कस्मान्न भवति – 'पञ्चम्यपाङ्परिभिः' (२.३.१०) इति? वर्जनविषये सा विधीयते, अपशब्दसाहचर्यात् ।

**३३२. अभिरभागे ॥ ९१ ॥ (५५३)**

लक्षणादिष्वेव भागवर्जितेष्वभिः कर्मप्रवचनीयसंज्ञो भवति । वृक्षमभि विद्योतते विद्युत् । साधु र्देवदत्तो मातरमभि । वृक्षं वृक्षमभि सिञ्चति । अभागे इति किम्? भागः स्वीक्रियमाणोंऽशः । यदत्र ममाभिष्यात् तद्दीयताम्। यदत्र मम भवति तद्दीयतामित्यर्थः ॥

**३३३. प्रतिः प्रतिनिधिप्रतिदानयोः ॥ ९२ ॥ (४९९)**

मुख्यसदृशः – प्रतिनिधिः । दत्तस्य प्रतिनिर्यातनम् प्रतिदानम् । प्रतिनिधिविषये प्रतिदानविषये च प्रतिः कर्मप्रवचनीयसंज्ञो भवति । अभिमन्युरर्जुनतः प्रति । माषानस्मै तिलेभ्यः (२.३.११) प्रति यच्छति ॥

**३३४. अधिपरी अनर्थकौ ॥ ९३ ॥ (५५४)**

अधिपरी शब्दौ अनर्थकौ अनर्थान्तरवाचिनौ कर्मप्रवचनीयसंज्ञौ भवतः। कुतोऽध्यागच्छति । कुतः पर्यागच्छति ।

गत्युपसर्गसंज्ञाबाधनार्था कर्मप्रवचनीयसंज्ञा विधीयते ॥

## ३३५. सुः पूजायाम् ॥ ९४ ॥ (५५५)

सुशब्दः पूजायामर्थे कर्मप्रवचनीयसंज्ञो भवति । सुसिक्तं भवता । सु स्तुतं भवता । धात्वर्थः स्तूयते । उपसर्गसंज्ञाश्रयं षत्वं न भवति ।

पूजायामिति किम्? सुषिक्तं किं तवात्र ॥

## ३३६. अतिरतिक्रमणे च ॥ ९५ ॥ (५५६)

अतिशब्दः अतिक्रमणे चकारात्पूजायां च कर्मप्रवचनीयसंज्ञो भवति । निष्पन्नेऽपि वस्तुनि क्रिया प्रवृत्तिः अतिक्रमणम् । अति सिक्तमेव भवता, अति स्तुतमेव भवता । पूजायाम् – अति सिक्तं भवता । अति स्तुतं भवता । शोभनं कृतमित्यर्थः ।

## ३३७. अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु ॥९६॥ (५५७)

पदार्थे, संभावने, अन्ववसर्गे, गर्हायाम्, समुच्चये च वर्तमानः अपिः कर्मप्रवचनीयसंज्ञो भवति ।

पदान्तरस्याप्रयुज्यमानस्यार्थः पदार्थः । सर्पिषोऽपि स्यात् । मधुनोऽपि स्यात् । मात्रा, बिन्दुः; स्तोकमित्यस्यार्थेऽपिशब्दो वर्त्तते । संभावनम् अधिकार्थवचनेन शक्तेरप्रतिघाताविष्करणम् । अपि सिञ्चेन् मूलकसहस्रम् । अपि स्तुयाद् राजानम्। अन्ववसर्गः = कामचाराभ्यनुज्ञानम्–अपि सिञ्च, अपि स्तुहि । गर्हा निन्दा – धिग् जाल्मं देवदत्तम् अपि सिञ्चेत्पलाण्डुम्, (नि० १.४.१२) अपि स्तुयाद् वृषलम्। समुच्चये – अपि सिञ्च अपि स्तुहि। सिञ्च च स्तुहि च । उपसर्गसंज्ञाबाधनात् षत्वं न भवति ॥

## ३३८. अधिरीश्वरे ॥ ९७ ॥ (६४४)

ईश्वरः स्वामी, स च स्वमपेक्षते । तदयं स्वस्वामिसम्बन्धे अधिः कर्मप्रवचनीयसंज्ञो भवति । तत्र कदाचित् स्वामिनः कर्मप्रवचनीयविभक्तिः

सप्तमी भवति कदाचित् स्वात् । अधि ब्रह्मदत्ते पञ्चालाः । अधि पञ्चालेषु ब्रह्मदत्तः ॥

## ३३९. विभाषा कृञि ॥ ९८ ॥ (६४६)

अधिः करोतौ विभाषा कर्मप्रवचनीयसंज्ञो भवति । यदत्र मामधिकरिष्यति। कर्मप्रवचनीयसंज्ञापक्षे गतिसंज्ञाबाधनात् तिङि चोदात्तवति (८.१.७१) इति निघातो न भवति ॥

## ३४०. लः परस्मैपदम् ॥ ९९ ॥ (२१५५)

'लः' इति षष्ठी आदेशापेक्षा । लादेशाः परस्मैपदसंज्ञा भवन्ति । तिप्, तस्, झि । सिप् , थस्, थ । मिप्, वस्, मस्। शतृक्वसू च ।

परस्मैपदप्रदेशाः– 'सिचि वृद्धिः परस्मैपदेषु' (७.२.१) इत्येवमादयः॥

## ३४१. तङानावात्मनेपदम् ॥ १०० ॥ (२१५६)

'तङ्' इति प्रत्याहारो नवानां वचनानाम् । 'आन' इति शानच्कानचोर्ग्रहणम्। पूर्वेण परस्मैपदसंज्ञायां प्राप्तायां तङानयोरात्मनेपदसंज्ञा विधीयते । त, आताम्, झ । थास्, आथाम्, ध्वम् । इट्, वहि, महिङ् । आनः खल्वपि – शानच्कानचौ। 'लः' इत्येव – कतीह निघ्नानाः (३.२.१२९) ।

आत्मनेपदप्रदेशाः – 'अनुदात्तङित आत्मनेपदम्' (१.३.१२) इत्येवमादयः ॥

## ३४२. तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ॥ १०१ ॥ (२१६०)

तिङोऽष्टादश प्रत्ययाः – नव परस्मैपदसंज्ञकाः, नवात्मनेपदसंज्ञकाः । तत्र परस्मैपदेषु त्रयस्त्रिकाः यथाक्रमं प्रथममध्यमोत्तमसंज्ञा भवन्ति । आत्मनेपदेष्वपि त्रयस्त्रिकाः प्रथममध्यमोत्तमसंज्ञा भवन्ति ।

तिप्, तस्, झि – इति प्रथमः । सिप्, थस्,थ – इति मध्यमः । मिप्, वस्, मस् – इत्युत्तमः ।

आत्मनेपदेषु – त, आताम्, झ – इति प्रथमः । थास्, आथाम्, ध्वम् – इति मध्यमः । इट्, वहि, महिङ् – इत्युत्तमः ।

प्रथममध्यमोत्तमप्रदेशाः – शेषे प्रथमः (१.४.१०८) इत्येवमादयः ॥

**३४३. तान्येकवचनद्विवचनबहुवचनान्येकशः ॥ १०२ ॥ (२१३१)**

तान्येकवचनद्विवचनबहुवचनसंज्ञानि भवन्ति । एकशः एकैकं पदम् । 'तिप्' इत्येकवचनम् । तस् इति द्विवचनम् । झि इति बहुवचनम् । एवं सर्वत्र । एकवचनद्विवचनबहुवचनप्रदेशाः – 'बहुषु बहुवचनम्' (१.५.२१) इत्येवमादयः ॥

**३४४. सुपः ॥ १०३ ॥ (१८५)**

तिडां त्रिकेष्वेकवचनादिसंज्ञा विहिताः, संप्रति सुपां त्रिकेषु विधीयन्ते । सुपश्च त्रीणि त्रीणि पदानि एकश एकवचनद्विवचनबहुवचनसंज्ञानि भवन्ति ।

'सु' इत्येकवचनम् । 'औ' इति द्विवचनम् । 'जस्' इति बहुवचनम्। एवं सर्वत्र॥

**३४५. विभक्तिश्च ॥ १०४ ॥ (१८४)**

'त्रीणि त्रीणि' इत्यनुवर्त्तते । त्रीणि त्रीणि विभक्तिसंज्ञाश्च भवन्ति सुपस्तिङश्च।

विभक्तिप्रदेशाः – अष्टन आ विभक्तौ (७.२.८४) इत्येवमादयः ॥

**३४६. युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ॥ १०५ ॥ (२१६२)**

लस्य (३.४.७७) इत्यधिकृत्य सामान्येन तिबादयो विहिताः, तेषामयं पुरुषनियमः क्रियते –

युष्मद्युपपदे सति व्यवहिते चाव्यवहिते सति समानाधिकरणे समानाभिधेये तुल्यकारके स्थानिनि प्रयुज्यमानेऽप्यप्रयुज्यमानेऽपि मध्यमपुरुषो भवति । त्वं पचसि, युवां पचथः, यूयं पचथ। अप्रयुज्यमानेऽपि – पचसि, पचथः, पचथ॥

**३४७. प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ॥ १०६ ॥ (२१६३)**

प्रहासः परिहासः क्रीडा । प्रहासे गम्यमाने मन्योपपदे धातोर्मध्यमपुरुषो भवति, मन्यतेश्चोत्तमः, स चैकवद्भवति । एहि मन्ये ओदनं भोक्ष्यसे इति नहि

भोक्ष्यसे, भुक्तः सोऽतिथिभिः । एहि मन्ये रथेन यास्यसि, न हि यास्यसि, यातस्तेन ते पिता । मध्यमोत्तमयोः प्राप्तयोः उत्तममध्यमौ विधीयेते । प्रहासे इति किम्? एहि मन्यसे ओदनं भोक्ष्ये इति । सुष्ठु मन्यसे, साधु मन्यसे ॥

### ३४८. अस्मद्युत्तमः ॥ १०७ ॥ (२१६४)

उत्तमपुरुषो नियम्यते । अस्मद्युपपदे समानाभिधेये प्रयुज्यमानेऽप्यप्रयुज्यमानेऽपि उत्तमपुरुषो भवति । अहं पचामि । आवां पचावः। वयं पचामः । अप्रयुज्यमानेऽपि – पचामि । पचावः । पचामः ॥

### ३४९. शेषे प्रथमः ॥ १०८ ॥ (२१६५)

'शेषे' इति मध्यमोत्तमविषयादन्य उच्यते । यत्र युष्मदस्मदी समानाधिकरणे उपपदे न स्तः, तत्र शेषे प्रथमपुरुषो भवति । पचति । पचतः । पचन्ति ॥

### ३५०. परः संनिकर्षः संहिता ॥ १०९ ॥ (२८)

परशब्दोऽतिशये वर्त्तते । संनिकर्षः प्रत्यासत्तिः । परो यः संनिकर्षः वर्णानामर्धमात्राकालव्यवधानम्, स संहितासंज्ञो भवति । दध्यत्र । मध्वत्र ।

संहिताप्रदेशाः – संहितायाम् (६.१.७२) इत्येवमादयः ॥

### ३५१. विरामोऽवसानम् ॥ ११० ॥ (२७)

विरतिः विरामः, विरम्यतेऽनेनेति वा विरामः । सोऽवसानसंज्ञो भवति । दधि । मधुँ (८.४.५७) । वृक्षः । प्लक्षः (८.३.१५) ।
अवसानप्रदेशाः – 'खरवसानयोर्विसर्जनीयः' (८.३.१५) इत्येवमादयः ॥

## ॥ इति श्रीजयादित्यविरचितायां काशिकावृत्तौ प्रथमाध्यायस्य चतुर्थः पादः ॥

## ॥ समाप्तश्चायं प्रथमाध्यायः ॥

॥ श्री गणेशाय नमः ॥

## पाणिनीयाष्टाध्यायीसूत्रवृत्तिः

# काशिका

## न्यास–पदमञ्जरी–भावबोधिनीसहिता

# अथ द्वितीयाध्याये प्रथमः पादः

### ३५२. समर्थः पदविधिः ॥ १ ॥ (६४७)

परिभाषेयम् । यः कश्चिद् इह शास्त्रे पदविधिः श्रूयते स सर्वः समर्थो वेदितव्यः । विधीयत इति विधिः, पदानां विधिः पदविधिः । स पुनः समासादिः। समर्थः शक्तः । विग्रहवाक्यार्थाभिधाने यः शक्तः स समर्थो वेदितव्यः ।

अथवा समर्थपदाश्रयत्वात् समर्थः । समर्थानां पदानां सम्बद्धार्थानां संसृष्टार्थानां विधिर्वेदितव्यः । वक्ष्यति–'द्वितीया श्रितातीतपतित–गतात्यस्तप्राप्तापन्नैः' (२.१.२४) – कष्टं श्रितः कष्टश्रितः ।
समर्थग्रहणं किम्? पश्य देवदत्त कष्टम्, श्रितो विष्णुमित्रो गुरुकुलम् । (म.भा. २.१.१) ' तृतीयातत्कृतार्थेन गुणवचनेन ' (२.१.३०) – शङ्कुलया खण्डः शङ्कुलाखण्डः। समर्थग्रहणं किम्? किं त्वं करिष्यसि शङ्कुलया, खण्डो देवदत्त उपलेन । ' चतुथी तदर्थार्थबलिहितसुखरक्षितैः ' (२.१.३६) – युपाय दारु युपदारु । समर्थग्रहणं किम्? गच्छ त्वं युपाय, दारु देवदत्तस्य गेहे । 'पञ्चमी भयेन ' (२.१.३७) – वृकेभ्यो भयं वृकभयम् । समर्थग्रहणं किम्? गच्छ त्वं मा वृकेभ्यः, भयं देवदत्तस्य यज्ञदत्तात् (म० भा० २.१.१) । ' षष्ठी ' (२.२.८) राज्ञः पुरुषो राजपुरुषः । समर्थग्रहणं किम्? भार्या राज्ञः, पुरुषो देवदत्तस्य (म0 भा0) । ' सप्तमी शौण्डैः ' (२.१.४०) – अक्षेषु शौण्डः अक्षशौण्डैः । समहर्तग्रहणं किम्? शक्तस्त्वमक्षेषु, शौष्ङः पिबति पानागारे (म0 भा0 ) ।

पदग्रहणं किम्? वर्णविधौ समर्थपरिभाषा मा भूत् । तिष्ठतु दध्यशान त्वं

शाकेन । तिष्ठतु कुमारीच्छत्रं हर देवदत्तात् (म0 भा0 ) । यणादेशो (३.१.७७) नित्यश्च तुग् (६.१.७५) भवति ॥

### ३५३. सुबामन्त्रिते पराङ्गवत्स्वरे ॥ २ ॥ (३६५३)

सुबन्तमामन्त्रिते परतः परस्याङ्गवद्भवति, स्वरे स्वरलक्षणे कर्तव्ये । तादात्म्यातिदेशोऽयम् ।

सुबन्तमामन्त्रितमनुप्रविशति । वक्ष्यति – 'आमन्त्रितस्य च ' (६.१.१९८), आमन्त्रितस्यादिरुदात्तो भवति । स ससुप्कस्यापि यथा स्यात् । कुण्डेनाटन् । परशुना वृश्चन् । मद्राणां राजन् । कश्मीराणां राजन् । सुबिति किम् ? पीड्ये पीड्यमान । आमन्त्रित इति किम्? गेहे गार्ग्यः । परग्रहणं किम्? पूर्वस्य मा भूत् – देवदत्त कुंडेनाटन् ।

अङ्गग्रहणं किम्? यथा मृत्पिण्डीभूतः स्वरं लभेत । उभयोराद्युदात्तत्वं मा भूत् ।

वत्करणं किम्? स्वाश्रयमपि कार्यं यथा स्यात् । आम् कुण्डेनाटन्। ' आम एकान्तरमामन्त्रितमनन्तिके ' (८.१.९५) इत्येकान्तरता भवति ।

स्वर इति किम्? कूपे सिञ्चन् । चर्म नमन् । षत्वणत्वे (८.३.१११) (८.४.१) प्रति पराङ्गवन्न भवति ।

सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्योपसंख्यानमनन्तरत्वात् (म० भा० २.१.२ वा० ४) । तीक्ष्णया सूच्या सीव्यन् । तीक्ष्णेन परशुना वृश्चन् (म० भा०) ।

अव्ययानां प्रतिषेधो वक्तव्यः । उच्चैरधीयान (म० भा० , वा० ६) । नीचैरधीयान ॥

### ३५४. प्राक्कडारात् समासः ॥ ३ ॥ (६४८)

कडारसंशब्दनात् (२.२.३८) प्राग् यानित ऊर्ध्वमनुक्रमिष्यामः, ते समाससंज्ञा वेदितव्याः । वक्ष्यति – 'यथाऽसादृश्ये ' (२.१.७), यथावृद्धं ब्राह्मणानामन्त्रयस्व । प्राग्वचनं संज्ञासमावेशार्थम् (म0 भा0 ) ।

समासप्रदेशाः – 'तृतीयासमासे ' (१.१.३०) इत्येवमादयः ॥

## ३५५. सह सुपा ॥ ४ ॥ (६४९)

' सुप् ' इति वर्त्तते ' सह ' इति ' सुपा ' इति च त्रयमप्यधिकृतं वेदितव्यम्। यदित ऊर्ध्वमनुक्रमिष्यामस्तत्रेदमुपस्थितं द्रष्टव्यम् । वक्ष्यति – ' द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ' (२.१.१४) इति, द्वितीयान्तं श्रितादिभिः सह समस्यते; कष्टं श्रितः कष्टश्रितः ।

सहग्रहणं योगविभागार्थम्, तिङापि सह यथा स्यात् – अनुव्यचलत्, अनुप्रावर्षत् ॥

## ३५६. अव्ययीभावः ॥ ५ ॥ (६५१)

'अव्ययीभावः' इत्यधिकरो वेदितव्यः। यानित ऊर्ध्वमनुक्रमिष्या-मोऽव्ययीभावसंज्ञास्ते वेदितव्याः ।

वक्ष्यति – ' यथाऽसादृश्ये ' (२.१.७), यथावृद्धं ब्राह्मणानामन्त्रयस्व ।

अन्वर्थसंज्ञा चेयं महती तेन पूर्वपदार्थप्राधान्यमव्ययीभावस्य दर्शयति ।

अव्ययीभावप्रदेशाः – ' अव्ययीभावश्च ' (२.४.१८) इत्येवमादयः ।

## ३५७.अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्यया-सम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्ति-साकल्यान्तवचनेषु ॥ ६ ॥ (६५२)

' सुप्' ' सुपा' इति च वर्त्तते । विभाक्त्यादिष्वर्थेषु यदव्ययं वर्त्तते तत्समर्थेन सुबन्तेन सह समस्यते, अव्ययीभावश्च समासो भवति । वचनग्रहणं प्रत्येकमभिसम्बद्ध्यते ।

(१) विभक्तिवचने तावत् – स्त्रीष्वधिकृत्य कथा प्रवर्तते अधिस्त्रि, अधिकुमारि । सप्तम्यर्थे यदव्ययं तद् विभक्तिवचनम् ।

(२) समीपवचने – कुम्भस्य समीपम् उपकुम्भम् । उपमणिकम् ।

(३) समृद्धिः ऋद्धेराधिक्यम् । समृद्धिर्मद्राणाम् सुमद्रम्, सुमगधं वर्त्तते।

(४) व्यृद्धिः ऋद्धेरभावः । गवदिकानामृद्धेरभावः दुर्गवदिकम्, दुर्यवनं वर्तते।

(५) अर्थाभावः वस्तुनोऽभावः । अभावो मक्षिकाणाम् निर्मक्षिकम्, निर्मशकं वर्त्तते ।

(६) अत्ययः [अ] भूतत्वम्, अतिक्रमः । अतीतानि हिमानि निर्हिमम्, निःशीतं वर्तते ।

(७) असंप्रति उपभोगस्य वर्तमानकालप्रतिषेधः । अतितैसृकम् । तैसृकम् आच्छादनम्, तस्यायमुपभोगकालो न भवतीत्यर्थः ।

(८) शब्दप्रादुर्भावः प्रकाशता शब्दस्य – इति पाणिनि । तत्पाणिनि । पाणिनिशब्दो लोके प्रकाशत इत्यर्थः ।

(९) पश्चात् – अनुरथं पादातम् । रथानां पश्चात् इत्यर्थः ।

(१०) यथा यथार्थे यदव्ययं वर्तते तत्समस्यते ।

योग्यता, वीप्सा, पदार्थानतिवृत्तिः सादृश्यं चेति यथार्थाः। योग्यतायाम् – अनुरूपम् । रूपयोग्यं भवतीत्यर्थः । वीप्सायाम् – अर्थमर्थं प्रति प्रत्यर्थम्। पदार्थानतिवृत्तौ – यथाशक्ति ।

(११) आनुपूर्व्यम् अनुक्रमः । अनुज्येष्ठं प्रविशन्तु भवन्तः । ज्येष्ठानुपूर्व्येण भवन्तः प्रविशन्त्वित्यर्थः ।

(१२) यौगपद्यम् एककालता । सचक्रं धेहि । युगपच्चक्रं धेहीत्यर्थः ।

(१३) सादृश्यम् तुल्यता । किमर्थमिदमुच्यते, यथार्थ इत्येव सिद्धम्? गुणभूतेऽपि सादृश्ये यथा स्यात् – सदृशः किख्या सकिखि ।

(१४) सम्पत्तिः अनुरूप आत्मभावः, समृद्धेरन्यः । सब्रह्म बाभ्रवाणाम्। सक्षत्रं शालङ्कायनानाम् ।

(१५) साकल्यम् – अशेषता । सतृणमभ्यवहरति, सबुसम् । न किञ्चिदभ्यवहार्यं परित्यजतीत्ययमर्थोऽधिकार्थवचनेन प्रतिपाद्यते ।

(१६) अन्तवचने – ‘ अन्त ’ इति परिग्रहापेक्षया समाप्तिरुच्यते । साग्न्यधीते। सेष्टिपशुबन्धम् । पशुबन्धान्तमधीत इत्यर्थः । इयं समाप्तिरसकलेऽप्यध्ययने भवतीति साकल्यात् पृथगुच्यते ॥

## ३५८. यथाऽसादृश्ये ॥ ८ ॥ (६६१)

‘ यथा ’ इत्येतदव्ययमसादृश्ये वर्तमानं सुपा सह समस्यते, अव्ययीभावश्च समासो भवति । यथावृद्धं ब्राह्मणानामन्त्रयस्व । ये ये वृद्धाः यथावृद्धम् । यथाध्यापकम्।

असादृश्ये इति किम्? यथा देवदत्तस्तथा यज्ञदत्तः (म0 भा0) । यथार्थे

यदव्ययमिति पूर्वेणैव सिद्धे समासे वचनमिदं सादृश्यप्रतिषेधार्थम् ॥

## ३५९. यावदवधारणे ॥ ८ ॥ (६६२)

'यावत्' इत्येतदव्ययमवधारणे वर्तमानं सुपा सह समस्यते, अव्ययीभावश्च समासो भवति । अवधारणम् इयत्तापरिच्छेदः यावदमत्रं ब्राह्मणानामन्त्रयस्व । यावन्ति पात्राणि संभवन्ति, पञ्च षड् वा, तावत् आमन्त्रयस्व ।

अवधारण इति किम्? यावद्दत्तं तावद् भुक्तम् । नावधारयामि कियन्मया भुक्तमिति ॥

## ३६०. सुप् प्रतिना मात्रार्थे ॥ ९ ॥ (६६३)

मात्रा, बिन्दुः, स्तोकम्, अल्पमिति पर्यायाः । मात्रार्थे वर्तमानेन प्रतिना सह सुबन्तं समस्यते, अव्ययीभावश्च समासो भवति । अस्त्यत्र किञ्चित् शाकं शाकप्रति। सूपप्रति ।

मात्रार्थ इति किम्? वृक्षं प्रति विद्योतते विद्युत् सुबिति वर्तमाने पुनः सुब्ग्रहणमव्ययनिवृत्त्यर्थम् ।

## ३६१. अक्षशलाकासङ्ख्याः परिणा ॥ १० ॥ (६६४)

अक्षशब्दः, शलाकाशब्दः, संख्याशब्दाश्च परिणा सह समस्यन्ते, अव्ययीभावश्च समासो भवति । कितवव्यवहारे समासोऽयमिष्यते । पञ्चिका नाम द्यूतं पञ्चभिरक्षैः शलाकाभिर्वा भवति । तत्र यदा सर्वे उत्तानाः पतन्ति, अवाञ्चो वा तदा पातयिता जयति, तस्यैवैतस्य विपातोऽन्यथा पाते सति जायते । अक्षेणेदं न तथा वृत्तं यथा पूर्वं जये (म० भा०) – अक्षपरि, शलाकापरि एकपरि, द्विपरि, त्रिपरि । परेण चतुष्परि ।

पञ्चसु त्वेकरूपासु जय एव भविष्यति ।
अक्षादयस्तृतीयान्ताः पूर्वोक्तस्य यथा न तत् ।
कितवव्यवहारे च एकत्वेऽक्षशलाकयोः ॥ (म० भा० २.१.१०)

## ३६२. विभाषा ॥ ११ ॥ (६६५)

'विभाषा' इत्ययमधिकारो वेदितव्यः(म.भा.)। यदित

ऊर्ध्वमनुक्रमिष्यामस्तद्विभाषा भवति । वक्ष्यति – अपपरिबहिरञ्चवः पञ्चम्या (२.१.१२), अपत्रिगर्तं वृष्टो देवः, अप त्रिगर्तेभ्यः ॥

## ३६३. अपपरिबहिरञ्चवः पञ्चम्या ॥ १२ ॥ (६६६)

अप, परि, बहिस्, अञ्चु – इत्येते सुबन्ताः पञ्चम्यन्तेन सह विभाषा समस्यन्ते, अव्ययीभावश्च समासो भवति । अपत्रिगर्त्तं वृष्टो देवः, अप त्रिगर्तेभ्यः। परित्रिगर्तम्, परि त्रिगर्तेभ्यः । बहिर्ग्रामम्, बहिर्ग्रामात् । प्राग्ग्रामम्, प्राग्ग्रामात् । बहिःशब्दयोगे पञ्चमीभावस्यैतदेव ज्ञापकम् ॥

## ३६४. आङ् मर्यादाभिविध्योः ॥ १३ ॥ (६६७)

'आङ्' इत्येतन्मर्यादायामभिविधौ च वर्तमानं पञ्चम्यन्तेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति । आपाटलिपुत्रं वृष्टो देवः, आ पाटलिपुत्रात् । अभिविधौ – आकुमारं यशः पाणिनेः, आकुमारेभ्यः ॥

## ३६५. लक्षणेनाभिप्रती आभिमुख्ये ॥ १४ ॥ (६६८)

लक्षणम् चिह्नम्, तद्वाचिना सुबन्तेन सहाभिप्रती शब्दावाभिमुख्ये वर्तमानौ विभाषा समस्येते, अव्ययीभावश्च समासो भवति । अभ्यग्नि शलभाः पतन्ति, अग्निमभि । प्रत्यग्नि, अग्निं प्रति । अग्निं लक्ष्यीकृत्य अभिमुखं पतन्तीत्यर्थः।

लक्षणेनेति किम्? स्रुघ्नं प्रति गतः । प्रतिनिवृत्य स्रुघ्नमेवाभिमुखं गतः। अभिप्रती इति किम्? येनाग्निस्तेन गतः । आभिमुख्य इति किम्? अभ्यङ्का गावः, प्रत्यङ्का गावः । नवाङ्का इत्यर्थः ॥

## ३६६. अनुर्यत्समया ॥ १५ ॥ (६६९)

समया समीपम् । अनुर्यस्य समीपवाची तेन लक्षणभूतेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति । अनुवनमशनिर्गतः ।

अनुरिति किम्? वनं समया । यत्समयेति किम्? वृक्षमनु विद्योतते विद्युत् । 'अव्ययं' विभक्तिसमीप (२.१.६) इत्येव सिद्धे पुनर्वचनं विभाषार्थम्॥

### ३६७. यस्य चायामः ॥ १६ ॥ (६७०)

'लक्षणेन' इति वर्तते । आयामः दैर्घ्यम् । अनुर्यस्यायामवाची तेन लक्षणभूतेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति । अनुगङ्गं वाराणसी (म. मा.) । अनुयमुनं मथुरा । यमुनाऽऽयामेन मथुराऽऽयामो लक्ष्यते।

आयाम इति किम्? वृक्षमनु विद्योतते विद्युत् ॥

### ३६८. तिष्ठद्गुप्रभृतीनि च ॥ १७ ॥ (६७१)

तिष्ठद्ग्वादयः समुदाया एव निपात्यन्ते । तिष्ठद्गुप्रभृतीनि शब्दरूपाणि अव्ययीभावसंज्ञकानि भवन्ति । तिष्ठद्गु कालविशेषः (म0 भा0) । तिष्ठन्ति गावो यस्मिन्काले दोहनाय स तिष्ठद्गु कालः । खलेयवादीनि प्रथमान्तानि विभक्त्यन्तरेण न संबध्यन्ते, अन्यपदार्थे च काले वर्तन्ते । चकारोऽवधारणार्थः अपरः समासो न भवति – परमतिष्ठद्ग्विति ।

तिष्ठद्गु । वहद्गु । आयतीगवम् । खलेयवम् । खलेबुसम् । लूनयवम्। लूयमानयवम् । पूतयवम् । पूयमानयवम् । संहृतयवम् । संह्रियमाणयवम् । संहृतबुसम्। संह्रियमाणबुसम् । एते कालशब्दाः ।

समभूमि । समपदाति । सुषमम् । विषमम् । निष्षमम् । दुष्षमम् । अपरसमम्। आयतीसमम् । प्राह्णम् । प्ररथम् । प्रमृगम् । पदक्षिणम् । अपरदक्षिणम् । सम्प्रति। असम्प्रति । पापसमम् । पुण्यसमम् । 'इच् कर्मव्यतीहारे' (५.४.१२७) – दण्डादण्डि। मुसलामुसलि ॥

### ३६९. पारे मध्ये षष्ठ्या वा ॥ १८ ॥ (६७२)

षष्ठीसमासे प्राप्ते तदपवादोऽव्ययीभाव आरभ्यते । वावचनाच्च षष्ठीसमासोऽपि पक्षेऽभ्यनुज्ञायते । पारमध्यशब्दौ षष्ठ्यन्तेन सह विभाषा समस्येते, अव्ययीभावश्च समासो भवति । तत्सन्नियोगेन चानयोरेकारान्तत्वं निपात्यते । पारं गङ्गायाः पारेगङ्गम् । मध्यं गङ्गायाः मध्येगङ्गम् । षष्ठीसमासपक्षे – गङ्गापारम्, गङ्गामध्यम् । महाविभाषया वाक्यविकल्पः क्रियते ॥

### ३७०. संख्या वंश्येन ॥ १९ ॥ (६७३)

विद्यया जन्मना वा प्राणिनामेकलक्षणसंतानो वंश इत्यभिधीयते । तत्र

भवो वंश्यः । तद्वाचिना सुबन्तेन सह संख्या समस्यते, अव्ययीभावश्च समासो भवति। द्वौ मुनी व्याकरणस्य वंश्यौ द्विमुनि व्याकरणस्य । त्रिमुनि व्याकरणस्य ।

यदा तु विद्यया तद्वतामभेदविवक्षा तदा सामानाधिकरण्यं भवति – द्विमुनि व्याकरणम्, त्रिमुनि व्याकरणमिति । जन्मना – एकविंशति भारद्वाजम् ॥

### ३७१. नदीभिश्च ॥ २० ॥ (६७४)

' संख्या ' इत्यनुवर्तते । नदीवचनैः शब्दैः सह संख्या समस्यते, अव्ययीभावश्च समासो भवति । समाहारे चायमिष्यते । सप्तगङ्गम् । द्वियमुनम्। पञ्चनदम् । सप्तगोदावरम् ॥

### ३७२. अन्यपदार्थे च संज्ञायाम् ॥ २१ ॥ (६७५)

' संख्या ' इति निवृत्तम्, नदीग्रहणमनुवर्तते । नदिभिः सह सुबन्तमन्यपदार्थे वर्त्तमानं संज्ञायां विषये समस्यते, अव्ययीभावश्च समासो भवति । विभाषाधिकारेऽपि नित्यसमास एवायम् । न हि वाक्येन संज्ञा गम्यते । उन्मत्तगङ्गं नाम देशः । लोहितगङ्गम् । कृष्णगङ्गम् । शनैर्गङ्गम् ।

अन्यपदार्थ इति किम्? कृष्णवेण्णा । संज्ञायामिति किम्? शीघ्रगङ्गो देशः ॥

### ३७३. तत्पुरुषः ॥ २२ ॥ (६८४)

' तत्पुरुषः ' इति संज्ञाऽधिक्रियते प्राग्बहुव्रीहेः (२.२.२३) । यानित ऊर्ध्वमनुक्रमिष्यामस्तत्पुरुषसंज्ञास्ते वेदितव्याः । वक्ष्यति – ' द्वितीयाश्रितातीतपतित' (२.१.२४) इति, कष्टश्रितः । पूर्वाचार्यसंज्ञा चेयं महती, तदङ्गीकरणमुपाधेरपि तदीयस्य परिग्रहार्थम् – ' उत्तरपदार्थप्रधानस्तत्पुरुषः' (म0 भा0) इति ।

तत्पुरुषप्रदेशाः – ' तत्पुरुषे कृति बहुलम् ' (३.३.१४) इत्येवमादयः॥

### ३७४. द्विगुश्च ॥ २३ ॥ (६८५)

द्विगुश्च समासस्तत्पुरुषसंज्ञो भवति । द्विगोस्तत्पुरुषत्वे समासान्ताः प्रयोजनम् (म0 भा0) । पञ्चराजी, दशराजी । द्व्यहः, त्र्यहः । पञ्चगवम्,

दशगवम् ॥

**३७५. द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ॥ २४ ॥ (६८६)**

'सुप्' 'सुपा' इति वर्तते, तस्य विशेषणमेतद् द्वितीया । द्वितीयान्तं सुबन्तं श्रितादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति । कष्टं श्रितः कष्टश्रितः। नरकश्रितः । अतीत – कान्तारमतीतः कान्तारातीतः ।
पतित – नरकं पतितः नरकपतितः । गत – ग्रामं गतः ग्रामगतः । अत्यस्त – तरङ्गानत्यस्तः तरङ्गात्यस्तः । तुहिनात्यस्तः । प्राप्त – सुखं प्राप्तः सुखप्राप्तः। आपन्न – सुखमापन्नः सुखापन्नः । दुःखापन्नः ।

श्रितादिषु गमिगाम्यादीनामुपसंख्यानम् (म० भा० २.१.२४ वा० १) । ग्रामं गमी ग्रामगमी । ग्रामं गामी ग्रामगामी । ओदनं बुभुक्षुः ओदनबुभुक्षुः ॥

**३७६. स्वयं क्तेन ॥ २५ ॥ (६८७)**

'स्वयम्' एतदव्ययमात्मनेत्यस्यार्थे वर्त्तते, तस्य द्वितीयया सह सम्बन्धो नोपपद्यत इति द्वितीयाग्रहणमुत्तरार्थमनुवर्त्तते । स्वयम् इत्येतत्सुबन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति । स्वयंधौतौ पादौ । स्वयं विलीनमाज्यम्। ऐकपद्यमैकस्वर्यं च समासत्वाद्भवति ॥

**३७७. खट्वा क्षेपे ॥ २६ ॥ (६८८)**

खट्वाशब्दो द्वितीयान्तः क्तान्तेन सह क्षेपे गम्यमाने समस्यते, तत्पुरुषश्च समासो भवति । क्षेपः निन्दा, स च समासार्थ एव, तेन विभाषाधिकारेऽपि नित्यसमास एवायम् । न हि वाक्येन क्षेपो गम्यते । खट्वारोहणं चेह विमार्गप्रस्थानस्योपलक्षणम् । सर्व एवाविनीतः खट्वारूढ इत्युच्यते । खट्वारूढो जाल्मः । खट्वाप्लुतः । अपथप्रस्थित इत्यर्थः ।

क्षेप इति किम्? खट्वामारूढः ॥

**३७८. सामि ॥ २७ ॥ (६८९)**

'सामि' इत्येतदव्ययमर्द्धशब्दपर्यायः, तस्यासत्त्ववाचित्वाद् द्वितीयया नास्ति सम्बन्धः । तत् सुबन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो

भवति । सामिकृतम्। सामिपीतम् । सामिभुक्तम् । ऐकपद्या मैकस्वर्यं च समासत्वाद्भवति ॥

### ३७९. कालाः ॥ २८ ॥ (६९०)

'द्वितीया' 'क्तेन' इति वर्तते । कालवाचिनः शब्दा द्वितीयान्ताः क्तान्तेन सह समस्यन्ते विभाषा, तत्पुरुषश्च समासो भवति । अनत्यन्तसंयोगार्थं वचनम्। कालाः इति न स्वरूपविधिः । षण्मुहूर्त्ताश्चराचराः, ते कदाचिदहर्गच्छन्ति, कदाचिद्रात्रिम् (म0 भा0) । अहरतिसृता मुहूर्त्ताः अहस्संक्रान्ताः । रात्र्यतिसृता मुहूर्त्ताः रात्रिसंक्रान्ताः। मासप्रमितश्चन्द्रमाः । मासं प्रमातुमारब्धः प्रतिपच्चन्द्रमा इत्यर्थः ॥

### ३८०. अत्यन्तसंयोगे च ॥ २९ ॥ (६९१)

'कालाः' इति वर्तते, 'क्तेन' इति निवृत्तम् । अत्यन्तसंयोगः कृत्स्नसंयोगः कालस्य स्वेन सम्बन्धिना व्याप्तिः । कालवाचिनः शब्दा द्वितीयान्ता अत्यन्तसंयोगे गम्यमाने सुपा सह समस्यन्ते विभाषा, तत्पुरुषश्च समासो भवति । मुहूर्त्तं सुखम् । मुहूर्त्तसुखम् । सर्वरात्रकल्याणी । सर्वरात्रशोभना ॥

### ३८१. तृतीया तत्कृतार्थेन गुणवचनेन ॥ ३० ॥ (६९२)

'सुप्' 'सुपा' इति वर्तते, तस्य विशेषणमेतत्तृतीया । तृतीयान्तं सुबन्तं गुणवचनेनार्थशब्देन च सह समस्यते, तत्पुरुषश्च समासो भवति ।

कीदृशेन गुणवचनेन? तत्कृतेन तदर्थकृतेन; तृतीयान्तार्थकृतेनेति यावत् । शङ्कुलया खण्डः शङ्कुलाखण्डः । कितिकाणः । किरिकाणः । अर्थशब्देन – धान्येनार्थः, धान्यार्थः।

तत्कृतेनेति किम्? अक्ष्णा काणः । गुणवचनेति किम्? गोभिर्वपावान् (म0 भा0)॥

### ३८२. पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ॥ ३१ ॥ (६९३)

पूर्व, सदृश, सम, ऊनार्थ, कलह, निपुण, मिश्र, श्लक्ष्ण – एतैः सह तृतीयान्तं समस्यते, तत्पुरुषश्च समासो भवति । अस्मादेव वचनात् पूर्वादिभिर्योगे

तृतीया भवति, हेतौ वा द्रष्टव्या । पूर्व – मासेन पूर्वः मासपूर्वः, संवत्सरपूर्वः। सदृश – मातृसदृशः, पितृसदृशः। सम – मातृसमः, पितृसमः । ऊनार्थ – माषोनम्, कार्षापणोनम् । माषविकलम्, कार्षापणविकलम् । कलह – असिकलहः, वाक्कलहः । निपुण – वाग्निपुणः, आचारनिपुणः । मिश्र – गुडमिश्रः, तिलमिश्रः। श्लक्ष्ण – आचारश्लक्ष्णः ॥

पूर्वादिष्ववरस्योपसंख्यानम् (म० भा० २.१.३० वा० १) । मासेनावरः मासावरः। संवत्सरावरः ॥

## ३८३. कर्तृकरणे कृता बहुलम् ॥ ३२ ॥ (६९४)

'तृतीया' इति वर्तते । कर्तरि च या तृतीया तदन्तं कृदन्तेन सह समस्यते बहुलम्, तत्पुरुषश्च समासो भवति । सर्वोपाधिव्यभिचारार्थं बहुलग्रहणम्। कर्तरि – अहिना हतः अहिहतः । करणे – नखैर्निर्भिन्नो नखनिर्भिन्नः । परशुना छिन्नः परशुच्छिन्नः ।

कर्तृकरणे इति किम्? भिक्षाभिरुषितः । बहुलग्रहणं किम्? दात्रेण धान्यं लूनवान्, परशुना छिन्नवान् – इह समासो न भवति; पादहारकः, गलेचोपकः (म0 भा0) इति च भवति ॥

## ३८४. कृत्यैरधिकार्थवचने ॥ ३३ ॥ (६९५)

स्तुतिनिन्दाप्रयुक्तमध्यारोपितार्थवचनमधिकार्थवचनम् । कर्तृकरणयोर्या तृतीया तदन्तं सुबन्तं कृत्यैः सह समस्यतेऽधिकार्थवचने गम्यमाने विभाषा, तत्पुरुषश्च समासो भवति । कर्त्ता – काकपेया (३.१.९७) नदी । श्वलेह्यः (३.१.१२४) कूपः। करणम् – बाष्पच्छेद्यानि तृणानि । कण्टकसञ्चेय ओदनः। पूर्वस्यैवायं प्रपञ्चः।

कृत्यग्रहणे यण्ण्यतोर्ग्रहणं कर्त्तव्यम् । इह मा भूत् – काकैः पातव्या इति ।

## ३८५. अन्नेन व्यञ्जनम् ॥ ३४ ॥ (६९६)

'तृतीया' इति वर्तते । व्यञ्जनवाचि तृतीयान्तमन्नवाचिना सुबन्तेन सह समस्यते विभाषा, तत्पुरुषश्च समासो भवति । संस्कार्यमन्नम् संस्कारकं

व्यञ्जनम् । दध्ना उपसिक्त ओदनः दध्योदनः । क्षीरौदनः । वृत्तौ क्रियाया अन्तर्भावादन्नव्यञ्जनयोः सामर्थ्यम् ॥

### ३८६. भक्ष्येण मिश्रीकरणम् ॥ ३५ ॥ (६९७)

मिश्रीकरणवाचि तृतीयान्तं भक्ष्यवाचिना सुबन्तेन समस्यते, तत्पुरुषश्च समासो भवति । खरविशदमश्यवहार्यं भक्ष्यम्, तस्य संस्कारकं मिश्रीकरणम्। गुडेन मिश्रा धानाः गुडधानाः । गुडपृथुकाः । वृत्तौ क्रियाया अन्तर्भावात्पूर्वोत्तरपदयोः सामर्थ्यम् ॥

### ३८७. चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ॥ ३६ ॥ (६९८)

'सुप्' 'सुपा' इति वर्तते, तस्य विशेषणमेतच्चतुर्थी । 'तत्' इति सर्वनाम्ना चतुर्थ्यन्तस्यार्थः परामृश्यते । तस्मै इदं तदर्थम् । तदर्थ, अर्थ, बलि, हित, सुख, रक्षित – इत्येतैः सह चतुर्थ्यन्तं समस्यते, तत्पुरुषश्च समासो भवति । तदर्थेन प्रकृतिविकारभावे समासोऽयमिष्यते । यूपाय दारु युपदारु । कुण्डलाय हिरण्यम्, कुण्डलहिरण्यम् ।

इह न भवति – रन्धनाय स्थाली, अवहननायोलूखलमिति । चतुर्थी चास्मादेव ज्ञापकात्तादर्थ्ये भवति ॥

अर्थेन नित्यसमासवचनम्, सर्वलिङ्गता च वक्तव्या (म० भा० २ १ ३६ वा ४, ५) । ब्राह्मणार्थं पयः । ब्राह्मणार्था यवागूः (म0 भा0) । बलि – कुबेराय बलिः कुबेरबलिः । महाराजबलिः । हित गोहितम् । अश्वहितम् । सुख – गोसुखम् । अश्वसुखम् । रक्षित – गोरक्षितम् । अश्वरक्षितम् ॥

### ३८८. पञ्चमी भयेन ॥ ३७ ॥ (६९९)

'सुप्' 'सुपा' इति वर्त्तते, तस्य विशेषणमेतत्पञ्चमी । पञ्चम्यन्तं सुबन्तं भयशब्देन सुबन्तेन सह समस्यते विभाषा, तत्पुरुषश्च समासो भवति । वृकेभ्यो भयम् वृकभयम् । चौरभयम् । दस्युभयम् ।

भयभीतभीतिभीभिरिति वक्तव्यम् (म० भा० २.१.३६ वा० १) । वृकेभ्यो भीतः वृकभीतः । वृकभीतिः । वृकभीः । पूर्वस्यैवायं बहुलग्रहणस्य प्रपञ्चः। तथा च – ग्रामनिर्गतः, अधर्मजुगुप्सुरित्येवमादि सिद्धं भवति ॥

### ३८९. अपेतापोढमुक्तपतितापत्रस्तैरल्पशः ॥ ३८ ॥ (७००)

अपेत, अपोढ, मुक्त, पतित, अपत्रस्त – इत्येतैः सह पञ्चम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति । अपेत – सुखापेतः । अपोढ – कल्पनापोढः । मुक्त – चक्रमुक्तः । पतित – स्वर्गपतितः । अपत्रस्त – तरङ्गापत्रस्तः । ' अल्पशः ' इति समासस्याल्पविषयतामाचष्टे। अल्पा पञ्चमी समस्यते, न सर्वा । प्रासादात्पतितः, भोजनादपत्रस्तः – इत्येवमादौ न भवति। ' कर्तृकरणे कृता बहुलम् ' (२.१.३२) इत्यस्यैवायं प्रपञ्चः ॥

### ३९०. स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ॥ ३९ ॥ (७०१)

स्तोक, अन्तिक, दूर – इत्येवमर्थाः शब्दाः कृच्छ्रशब्दश्च पञ्चम्यन्ताः क्तान्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति । स्तोक – स्तोकान्मुक्तः। अन्तिक – अन्तिकादागतः । अभ्याशादागतः । दूरादागतः । विप्रकृष्टादागतः। कृच्छ्रान्मुक्तः । कृच्छ्राल्लब्धः । ' पञ्चम्याः स्तोकादिभ्यः' इत्यलुक् ॥

शतसहस्रौ परेणेति वक्तव्यम् । शतात्परे परश्शताः । सहस्रात्परे परस्सहस्राः। राजदन्तादित्वात् परनिपातः निपातनात् सुडागमः ॥

### ३९१. सप्तमी शौण्डैः ॥ ४० ॥ (७१७)

सप्तम्यन्तं शौण्डादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति । अक्षेषु शौण्डः अक्षशौण्डः । अक्षधूर्त्तः । अक्षकितवः ।

शौण्ड । धूर्त्त । कितव । व्याड । प्रवीण । संवीत । अन्तर् । अन्तःशब्दस्त्वत्राधिकरणप्रधान एव पठ्यते । अधिपटु । पण्डित । कुशल । चपल । निपुण । वृत्तौ प्रसक्तिक्रियाया अन्तर्भावादक्षादिषु अधिकरणे सप्तमी ॥

### ३९२. सिद्धशुष्कपक्वबन्धैश्च ॥ ४१ ॥ (७१८)

' सप्तमी ' इति वर्तते । सिद्ध, शुष्क, पक्व, बन्ध – इत्येतैः सह सप्तम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति । सांकाश्यसिद्धः । काम्पिल्यसिद्धः। शुष्क – आतपशुष्कः । छायाशुष्कः । पक्व – स्थालीपक्वः। कुम्भीपक्वः । बन्ध – चक्रबन्धः । बहुलग्रहणस्यैवायमुदाहरणप्रपञ्चः ॥

### ३९३. ध्वाङ्क्षेण क्षेपे ॥ ४२ ॥ (७१९)

' ध्वाङ्क्षेण ' इत्यर्थग्रहणम् । ध्वाङ्क्षवाचिना सह सप्तम्यन्तं सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति, क्षेपे गम्यमाने । तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः।

अनवस्थित इत्यर्थः । तीर्थकाकः । तीर्थवायसः ।

क्षेपे इति किम्? तीर्थे ध्वाङ्क्षस्तिष्ठति ॥

### ३९४. कृत्यैर्ऋणे ॥ ४३ ॥ (७२०)

' सप्तमी ' इति वर्तते । कृत्यप्रत्ययान्तैः सह सप्तम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति, ऋणे गम्यमाने । यत्प्रत्ययेनैवेष्यते । मासे देयमृणं मासदेयम् । संवत्सरदेयम् । त्र्यहदेयम् ।

ऋणग्रहणं नियोगोपलक्षणार्थम्, तेनेहापि समासो भवति – पूर्वाह्णे गेयं साम । प्रातरध्येयोऽनुवाकः ।

ऋण इति किम्? मासे देया भिक्षा ।

### ३९५. संज्ञायाम् ॥ ४४ ॥ (७२१)

सज्ञायां विषये सप्तम्यन्तं सुपा सह समस्यते, तत्पुरुषश्च समासो भवति । सज्ञां समुदायोपाधिः । तेन नित्यसमास एवायम्, न हि वाक्येन संज्ञा गम्यते। अरण्येतिलकाः । अरण्येमाषाः । वनेकिंशुकाः । वनेबिल्वकाः । कूपेपिशाचकाः। ' हलदन्तात्सप्तम्याः संज्ञायाम् ' इत्यलुक् ॥

### ३९६. क्तेनाहोरात्रावयवाः ॥ ४५ ॥ (७२२)

अहरवयवाः, रात्र्यवयवाश्च सप्तम्यन्ताः क्तान्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति । पूर्वाह्णकृतम् । अपराह्णकृतम् । पूर्वरात्रकृतम् । अपररात्रकृतम्।

अवयवग्रहणं किम्? एतत्तु ते दिवा वृत्तं रात्रौ वृत्तं च द्रक्ष्यसि । अहनि भुक्तम् । रात्रौ वृत्तम् । बहुलग्रहणाद् रात्रिवृत्तम् , संन्ध्यागर्जितमित्यादयः ॥

## ३९७. तत्र ॥ ४६ ॥ (७२३)

‘ तत्र ’ इत्येतत् सप्तम्यन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति । तत्रभुक्तम् । तत्रकृतम् । तत्रपीतम् । ऐकपद्यमैकस्वर्यं च समासत्वाद् भवति ॥

## ३९८. क्षेपे ॥ ४७ ॥ (७२४)

क्षेपः निन्दा । क्षेपे गम्यमाने सप्तम्यन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति । अवतप्तेनकुलस्थितं तवैतत् । चापलमेतत् । अनवस्थितत्वं तवैतदित्यर्थः । उदकेविशीर्णम् । प्रवाहेमूत्रितम् । भस्मनिहुतम् । निष्फलं यत्क्रियते तदेवमुच्यते । ‘ तत्पुरुषे कृति बहुलम् ’ (६.३.१४) इत्यलुक् ॥

## ३९९. पात्रेसमितादयश्च ॥ ४८ ॥ (७२५)

समुदाया एव निपात्यन्ते । पात्रेसमितादयः शब्दास्तत्पुरुषसंज्ञा भवन्ति, क्षेपे गम्यमाने । ये चात्र क्तान्तेन सह समासास्तेषां पूर्वेणैव सिद्धे पुनः पाठो युक्तारोह्यादिपरिग्रहार्थः – पूर्वपदाद्युदात्तत्वं यथा स्यादिति । युक्तारोह्यादिषु हि पात्रेसमिताः । पठ्यन्ते । पात्रेबहुलाः । अवधारणेन क्षेपो गम्यते – पात्रे एव समिता न पुनः क्वचित्कार्य इति । उदुम्बरमशकादिषु उपमया क्षेपः । मातरिपुरुष इति प्रतिषिद्धसेवनेन। पिण्डीशूरादिषु निरीहतया । अव्यक्तत्वाच्चाकृतिगणोऽयम्।

पात्रेसमिताः । पात्रेबहुलाः । उदुम्बरमशकाः । उदरक्रिमिः । कूपकच्छपः। कूपचूर्णकः । अवटकच्छपः । कूपमण्डूकः । कुम्भमण्डूकः । उदपानमण्डूकः। नगरकाकः । नगरवायसः । मातरिपुरुषः । पिण्डीशूरः । गेहेशूरः । गेहेनर्दी । गेहेक्ष्वेडी । गेहेविजिती । गेहेव्याडः । गेहेदृप्तः । गेहेधृष्टः । गर्भेतृप्तः । आखनिकबकः। गोष्ठेशूरः । गोष्ठेविजिती । गोष्ठेक्ष्वेडी । गेहेमेही । गोष्ठेपटुः । गोष्ठेपण्डितः । गोष्ठेप्रगल्भः । कर्णेटिट्टिभः । कर्णेचुरचुरा । चकारोऽवधारणार्थः, तेन समासान्तरं न भवति परमपात्रेसमिता इति ।

## ४००. पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ॥ ४९ ॥ (७२६)

‘ सुप् ’ ‘ सुपा ’ इति वर्त्तते, तस्य विशेषणमेतत् । पूर्वकाल, एक, सर्व,

जरत्, पूराण, नव, केवल इत्येते सुबन्ताः समानाधिकरणेन सुपा सह समस्यन्ते, तत्पुरुषश्च समासो भवति । भिन्नप्रवृत्तनिमित्तस्य शब्दस्यैकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्। ' पूर्वकाल ' इत्यर्थनिर्देशः, परिशिष्टानां स्वरूपग्रहणम् । पूर्वकालोऽपरकालेन समस्यते । स्नातानुलिप्तः । कृष्टसमीकृतम् । दग्धप्ररूढम्। एकशाटी । एकभिक्षा । सर्वदेवाः । सर्वमनुष्याः । जरद्धस्ती । जरद्गृष्टिः । जरद्वृत्तिः। पुराणान्नम् । पुराणावसथम् । नवान्नम् । नवावसथम् । केवलान्नम्।

समानाधिकरणेनेति किम्? एकस्याः शाटी ।

## ४०१. दिक्संख्ये संज्ञायाम् ॥ ५० ॥ (७२७)

' समानाधिकरणेन ' इत्यापादसमाप्तेरनुवर्त्तते । दिग्वाचिनः शब्दाः संख्या च समानाधिकरणेन सुबन्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति, संज्ञायां विषये । पूर्वेषुकामशमी । अपरेषुकामशमी । संख्या – पञ्चाम्राः । सप्तर्षयः।

संज्ञायामिति किम्? उत्तरा वृक्षाः । पञ्च ब्राह्मणाः ॥

## ४०२. तद्धितार्थोत्तरपदसमाहारे च ॥ ५१ ॥ (७२८)

' दिक्संख्ये ' इत्यनुवर्त्तते । तद्धितार्थे विषये उत्तरपदे च परतः समाहारे चाभिधेये दिक्संख्ये समानाधिकरणेन सुपा सह समस्येते, तत्पुरुषश्च समासो भवति ।

तद्धितार्थे तावत् – पूर्वस्यां शालायां भवः । ' दिक्पूर्वपदादसंज्ञायां ञः' [४/२/१०७], पौर्वशालः, आपरशालः । उत्तरपदे – पूर्वशालाप्रियः, अपरशालाप्रियः। समाहारे दिक्शब्दो न संभवति । संख्या, तद्धितार्थे पाञ्चनापितिः। उत्तरपदे पञ्चगवधनः, दशगवधनः ।

समाहारे – पञ्चपूली, दशपूली ।

पञ्चकुमारि, दशकुमारि । ' स नपुंसकम् ' [२/४/१७] इति नपुंसकत्वम्, ' ह्रस्वो नपुंसके प्रातिपदिकस्य ' [२/३/४७] इति ह्रस्वत्वम् ॥

## ४०३. संख्यापूर्वो द्विगुः ॥ ५२ ॥ (७३१)

' तद्धितार्थोत्तरपदसमाहारे च ' [२/१/५१] इत्यत्र यः संख्यापूर्वः समासः स द्विगुसंज्ञो भवति ।

तद्धितार्थे तावत् – पञ्चसु कपालेषु संस्कृतः पञ्चकपालः, दशकपालः। ‘संस्कृतं भक्षाः’ [४/२/१६] इतीहाण्, तस्य ‘द्विगोर्लुगनपत्ये’ [४/२/८८] इति लुक् ।

उत्तरपदे – पञ्चनावप्रियः । ‘नावो द्विगोः’ [५/४/९९] इति समासान्तो भवति ।

समाहारे – पञ्चमूली । ‘द्विगोः’ [४/१/२१] इति ङीब् भवति । द्विगुप्रदेशाः – ‘द्विगोः’ इत्येवमादयः ॥

## ४०४. कुत्सितानि कुत्सनैः ॥ ५३ ॥ (७३२)

कुत्सितवाचीनि सुबन्तानि कुत्सनवचनैः सुबन्तैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति । शब्दप्रवृत्तिनिमित्तकुत्सायामयं समास इष्यते । ‘विशेषणं विशेष्येण’ [२/१/५७] इति परनिपाते प्राप्ते विशेष्यस्य पूर्वनिपातार्थ आरम्भः। वैयाकरणखसूचिः । निष्प्रतिभ इत्यर्थः । याज्ञिककितवः । अयाज्ययाजनतृष्णापर उच्यते । मीमांसकदुर्दुरूढः । नास्तिकः ।

कुत्सितानीति किम्? वैयाकरणश्चौरः । न ह्यत्र वैयाकरणत्वं कुत्स्यते । कुत्सनैरिति किम्? कुत्सितो ब्राह्मणः ।

## ४०५. पापाणके कुत्सितैः ॥ २४ ॥ (७३३)

पापाणकशब्दौ कुत्सनाभिधायिनौ, तयोः पूर्वेण समासे परनिपातः प्राप्तः पूर्वनिपातार्थमिदमारभ्यते । पाप, अणक – एते सुबन्ते कुत्सितवचनैः सह समस्येते, तत्पुरुषश्च समासो भवति । पापनापितः, पापकुलालः । अणकनापितः, अणककुलालः॥

## ४०६. उपमानानि सामान्यवचनैः ॥ ५५ ॥ (७३४)

उपमीयतेऽनेनेत्युपमानम् । उपमानवाचीनि सुबन्तानि सामान्यवचनैः सुबन्तैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति । उपमानोपमेययोः साधारणो धर्मः सामान्यम्, तद्विशिष्टोपमेयवचनैरयं समासः । शस्त्रीव श्यामा शस्त्रीश्यामा देवदत्ता । कुमुदश्येनी । हंसगद्गदा । न्यग्रोधपरिमण्डला ।

उपमानानीति किम्? देवदत्ता श्यामा ।

सामान्यवचनैरिति किम्? फाला इव तण्डुलाः । पर्वता इव बलाहकाः ॥

**४०७. उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ॥ ५६ ॥ (७३५)**

उपमेयम् उपमितम्, तद्वाचि सुबन्तं व्याघ्रादिभिः सामर्थ्यादुपमानवचनैः सह समस्यते, तत्पुरुषश्च समासो भवति, न चेत्सामान्यवाची शब्दः प्रयुज्यते। 'विशेषणं विशेष्येण' [२/१/५७] इति परनिपाते प्राप्ते विशेष्यस्य पूर्वनिपातार्थ आरम्भः । पुरुषोऽयं व्याघ्र इव – पुरुषव्याघ्रः । पुरुषसिंहः ।

सामान्याप्रयोग इति किम्? पुरुषोऽयं व्याघ्र इव शूरः ।

व्याघ्र । सिंह । ऋक्ष । ऋषभ । चन्दन । वृक्ष । वृष । वराह । हस्तिन् । कुञ्जर । रुरु । पृषत । पुण्डरीक । बलाहक । आकृतिगणश्चायम् । तेनेदमपि भवति – मुखपद्मम्, मुखकमलम्, करकिशलयम्, पार्थिवचन्द्र इत्येवमादि ॥

**४०८. विशेषणं विशेष्येण बहुलम् ॥ ५७ ॥ (७३६)**

भेदकम् विशेषणम्, भेद्यम् विशेष्यम् । विशेषणवाचि सुबन्तं विशेष्यवाचिना समानाधिकरणेन सुबन्तेन सह बहुलं समस्यते, तत्पुरुषश्च समासो भवति । नीलोत्पलम्। रक्तोत्पलम् । बहुलवचनं व्यवस्थार्थम् । क्वचिन्नित्यसमास एव –कृष्णसर्पः, लोहितशालिः । क्वचिन्न भवत्येव – रामो जामदग्न्यः, अर्जुनः कार्त्तवीर्यः। क्वचिद्विकल्पः – नीलमुत्पलम्, नीलोत्पलम् ।

विशेषणमिति किम्? तक्षकः सर्पः । विशेष्येणेति किम्? लोहितस्तक्षकः॥

**४०९. पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च ॥ ५८ ॥ (७३७)**

पूर्व, अपर, प्रथम, चरम, जघन्य, समान, मध्य, मध्यम, वीर – इत्येते सुबन्ताः समानाधिकरणेन सुपा सह समस्यन्ते, तत्पुरुषश्च समासो भवति । पूर्वपुरुषः। अपरपुरुषः । प्रथमपुरुषः । चरमपुरुषः । जघन्यपुरुषः । समानपुरुषः। मध्यपुरुषः। मध्यमपुरुषः । वीरपुरुषः । पूर्वस्यैवायं प्रपञ्चः ।

**४१०. श्रेण्यादयः कृतादिभिः ॥ ५९ ॥ (७३८)**

श्रेण्यादयः सुबन्ताः कृताडिभिः समानधिकरणेः सह समस्यन्ते । तत्पुरुष

झ समासो भवति । श्रेण्यादिषु च्व्यर्थवचनं कर्तव्यम् (म.भा.२.१.५८ वा.१) । अश्रेणयः श्रेणयः कृता श्रेणिकृताः । एककृताः । श्रेण्यादयः पठ्यन्ते । कृतादिराकृतिगणः। च्व्यन्तानां तु 'कुगतिप्रादयः' इत्यनेन नित्यसमासः । श्रेणीकृताः ।

श्रेणि । एक । पूग । कुण्ड । राशि । विशिख । निचय । निधान । इन्द्र। देव । मुण्ड । भूत । श्रवण । वदान्य । अध्यापक । ब्राह्मण । क्षत्रिय । पटु । पण्डित । कुशल । चपल । निपुण । कृपण । इति श्रेण्यादिः ॥

कृत । मित । मत । भूत । उक्त । समाज्ञात । समाम्नात । समाख्यात । संभावित । अवधारित । निराकृत । अवकल्पित । उपकृत । उपाकृत । इति कृतादिः॥

## ४११. क्तेन नञ्विशिष्टेनानञ् ॥ ६० ॥ (७३९)

नञैव विशेषो यस्य सर्वमन्यत्प्रकृत्यादिकं तुल्यं तन्नञ्विशिष्टम्, तेन नञ्विशिष्टेन क्तान्तेन समानाधिकरणेन सह अनञ् क्तान्तं समस्यते, तत्पुरुषश्च समासो भवति । कृतं च तदकृतं च कृताकृतम् । भुक्ताभुक्तम् । पीतापीतम्। उदितानुदितम् । नुडिटौ तद्भक्तत्वान्नैव भेदकौ । अशितानशितेन जीवति । क्लिष्टाक्लिशितेन वर्त्तते।

कृतापकृतादीनामुपसंख्यानम् (म० भा० २.१.६० वा० ४)। कृतापकृतम्। भुक्तविभुक्तम् । पीतविपीतम् । गतप्रत्यागतम् । यातानुयातम् । क्रयाक्रयिका । पुटापुटिका। फलाफलिका । मानोन्मानिका ॥

समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च (म० भा० २.१.६९ वा० ६)। शाकप्रधानः पार्थिवः शाकपार्थिवः । कुतपसौश्रुतः। अजातौल्वलिः॥

## ४१२. सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ॥ ६१ ॥ (७४०)

सत्, महत्, परम, उत्तम, उत्कृष्ट – इत्यते पूज्यमानैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति । 'पूज्यमानैः' इति वचनात् पूजावचनाः सदादयो विज्ञायन्ते । सत्पुरुषः । महापुरुषः । परमपुरुषः । उत्तमपुरुषः । उत्कृष्टपुरुषः।

पूज्यमानैरिति किम्? उत्कृष्टा गौः कर्दमात् ॥

### ४१३. वृन्दारकनागकुञ्जरैः पूज्यमानम् ॥ ६२ ॥ (७४१)

वृन्दारक, नाग, कुञ्जर – इत्येतैः सह पूज्यमानवाचि सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति । 'पूज्यमानम्' इति वचनाद् वृन्दारकादयः पूजावचना गृह्यन्ते । गोवृन्दारकः, अश्ववृन्दारकः । गोनागः, अश्वनागः । गोकुञ्जरः, अश्वकुञ्जरः।

पूज्यमानमिति किम्? सुषीमो नागः ॥

### ४१४. कतरकतमौ जातिपरिप्रश्ने ॥ ६३ ॥ (७४२)

कतरकतमौ जातिपरिप्रश्ने वर्त्तमानौ समर्थेन सुपा सह समस्येते, तत्पुरुषश्च समासो भवति । कतरकठः । कतरकालापः । कतमकठः । कतमकालापः ।

ननु कतमशब्दस्तावज्जातिपरिप्रश्न एव व्युत्पादितः, कतरशब्दोऽपि साहचर्यात्तदर्थवृत्तिरेव ग्रहीष्यते, किं जातिपरिप्रश्नग्रहणेन? एवं तर्ह्येतज्ज्ञापयति – कतमशब्दोऽन्यत्रापि वर्त्तत इति । तथा च प्रत्युदाहरणम् – कतरो भवतोर्देवदत्तः। कतमो भवतां देवदत्तः ॥

### ४१५. किं क्षेपे ॥ ६४ ॥ (७४३)

'किम्' इत्येतत् क्षेपे गम्यमाने सुपा सह समस्यते, तत्पुरुषश्च समासो भवति । किंराजा, यो न रक्षति । किंसखा, योऽभिद्रुह्यति । किंगौः, यो न वहति। 'किमः क्षेपे' [४/५/७०] इति समासान्तो न भवति ।

क्षेपे इति किम्? को राजा पाटलिपुत्रे ॥

### ४१६. पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहब्दष्कयणी–प्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः ॥ ६५ ॥ (७४४)

उभयव्यञ्जना 'पोटा' इत्यभिधीयते । गृष्टिः एकवारप्रसूता । धेनुः प्रत्यग्रप्रसूता। वशा वन्ध्या । वेहद् गर्भपातिनी । बष्कयणी तरुणवत्सा । पोटादिभिः सह जातिवाचि सुबन्तं समस्यते, तत्पुरुषश्चसमासो भवति । इभपोटा । इभयुवतिः । अग्निस्तोकः। उदश्वित्कतिपयम् । गोगृष्टिः । गोधेनुः।

गोवशा । गोवेहत् । गोबष्कयणी । कठप्रवक्ता । कठश्रोत्रियः । कठाध्यापकः। कठधूर्त्तः । जातिरिति किम्? देवदत्तः प्रवक्ता । धूर्त्तग्रहणमकुत्सार्थम् ॥

### ४१७. प्रशंसावचनैश्च ॥ ६६ ॥ (७४७)

'जातिः' इति वर्त्तते । जातिवाचि सुबन्तं प्रशंसावचनैः सह समस्यते, तत्पुरुषश्च समासो भवति । रूढिशब्दाः प्रशंसावचना गृह्यन्ते मतल्लिकादयः, ते चाविष्टलिङ्गत्वादन्यलिङ्गेऽपि जातिशब्दे स्वलिङ्गोपादाना एव समानाधिकरणा भवन्ति । गोप्रकाण्डम् । अश्वप्रकाण्डम् । गोमतल्लिका । अश्वमतल्लिका । गोमचर्च्चिका । अश्वमचर्चिका । जातिरिति किम्? कुमारी मतल्लिका ॥

### ४१८. युवा खलतिपलितवलिनजरतीभिः ॥ ६७ ॥ (७८७)

खलत्यादिभिः समानाधिकरणैः सह युवशब्दः समस्यते, तत्पुरुषश्च समासो भावति । 'जरतीभिः' इति स्त्रीलिङ्गेन निर्देशः 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति ज्ञापनार्थः । युवा खलतिः युव खलतिः । युवतिः खलती युवखलती। युवा पलितः युवपलितः । युवतिः पलिता युवपलिता । युवा वलिनः युववलिनः । युवतिर्वलिना युववलिना । युवा जरन् युवजरन् । युवतिर्जरती युवजरती ॥

### ४१९. कृत्यतुल्याख्या अजात्या ॥ ६८ ॥ (७४९)

कृत्यप्रत्ययान्तास्तुल्यपर्यायाश्च सुबन्ता अजातिवचनेन समस्यन्ते, तत्पुरुषश्च समासो भवति भोज्योष्णम् । भोज्यलवणम् । पानीयशीतम् । तुल्याख्याः – तुल्यश्वेतः । तुल्यमहान् । सदृशश्वेतः । सदृशमहान् ।

अजात्येति किम्? भोज्य ओदनः ॥

### ४२०. वर्णो वर्णेन ॥ ६९ ॥ (७५०)

वर्णविशेषवाचि सुबन्तं वर्णविशेषवाचिना सुबन्तेन समानाधिकरणेन सह समस्यते, तत्पुरुषश्च समासो भवति । कृष्णसारङ्गः । लोहितसारङ्गः । कृष्णशबलः। लोहितशबलः । अवयवद्वारेण कृष्णशब्दः समुदाये वर्त्तमानः समानाधिकरणो भवति ॥

### ४२१. कुमारः श्रमणादिभिः ॥ ७० ॥ (७५२)

कुमारशब्दः श्रमणादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति । येऽत्र स्त्रीलिङ्गाः पठ्यन्ते – श्रमणा प्रव्रजिता कुलटेत्येवमादयस्तैः सह स्त्रीलिङ्गः एव कुमारशब्दः समस्यते । ये तु पुँल्लिङ्गा अध्यापकोऽभिरूपकः पण्डित इति, तैरुभयथा; 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' (व्या0 परि0 २५) इति । कुमारी श्रमणा कुमारश्रमणा ।

श्रमणा । प्रव्रजिता । कुलटा । गर्भीणी । तापसी । दासी । बन्धकी । अध्यापक । अभिरूपक । पण्डित । पटु । मृदु । कुशल । चपल । निपुण ॥

### ४२२. चतुष्पादो गर्भिण्या ॥ ७१ ॥ (७५३)

चतुष्पाद्वाचिनः सुबन्ता गर्भिणीशब्देन समस्यन्ते, तत्पुरुषश्च समासो भवति। गोगर्भिणी । अजागर्भिणी ॥

चतुष्पाज्जातिरिति वक्तव्यम् (म0 भा0 २.१.७० वा0 १) । इह मा भूत् – कालाक्षी गर्भिणी । स्वस्तिमती गर्भिणी । चतुष्पाद इति किम् ? ब्राह्मणी गर्भिणी॥

### ४२३. मयूरव्यंसकादयश्च ॥ ७२ ॥ (७५४)

समुदाया एव निपात्यन्ते । मयूरव्यंसकादयः शब्दास्तत्पुरुषसंज्ञा भवन्ति। चकारोऽवधारणार्थः परममयूरव्यंसक इति समासान्तरं न भवति । मयूरव्यंसकः। छात्रव्यंसकः । काम्बोजमुण्डः । यवनमुण्डः । छन्दसि – हस्तेगृह्य । पादेगृह्य । लाङ्गलेगृह्य। पुनर्दाय ॥

एहीडादयोऽन्यपदार्थे । एहीडम्, एहियवं वर्त्तते । एहिवाणिजा क्रिया । अपेहिवाणिजा, प्रेहिवाणिजा । एहिस्वागता, अपेहिस्वागता, प्रेहिस्वागता । एहिद्वितीया, अपेहिद्वितीया । इहवितर्का । प्रोहकटा, अपोहकटा । प्रोहकर्दमा, अपोहकर्दमा । उद्धरचूडा । आहरचेला । आहरवसना । आहरवनिता । कृन्त विचक्षणा । उद्धरोत्सृजा । उद्धमविधमा । उत्पचविपचा । उत्पतनिपता । उच्चावचम्। उच्चनीचम् । अचितोपचितम् । अवचितपराचितम् । निश्चप्रचम् । अकिञ्चनम्.। स्नात्वाकालकः । पीत्वास्थिरक । भुक्त्वासुहितः। प्रोष्यपापीयान् । उत्पत्यपाकला.। निपत्यरुहिणी । निषाण्णश्यामा । अपेहिप्रसवा । इहपञ्चमी । इहद्वितीया ।

जहि कर्मणा बहुलमाभिक्ष्ण्ये कर्त्तारं चाभिदधाति । जहिजोडः । उज्जहिजोडः। जहिस्तम्बः । उज्जहिस्तम्बः ॥

आख्यातमाख्यातेन क्रियासातत्ये । अश्नीतपिबता । पचतभृज्जता । खादतमोदता। खादताचमता ।

आहरनिवपा । आवपनिष्किरा । उत्पचविपचा । भिन्धिलवणा । छिन्धिविचक्षणा । पचलवणा । पचप्रकूटा । अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्यः॥

**॥ इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ द्वितीयाध्यायस्य प्रथमः पादः ॥**

# अथ द्वितीयाध्याये द्वितीयः पादः

## ४२४. पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ॥ १ ॥ (७१२)

एकदेशोऽस्यास्तीत्येकदेशी अवयवी, तद्वाचिना सुबन्तेन सह पूर्व, अपर, अधर, उत्तरशब्दाः सामर्थ्यादेकदेशवचना समस्यन्ते, तत्पुरुषश्च समासो भवति । एकाधिकरणग्रहणमेकदेशिनो विशेषणम् । एकं चेदधिकरण- मेकद्रव्यमेकदेशि भवति । षष्ठोसमासापवादोऽयं योगः । पूर्वं कायस्य पूर्वकायः। अपरकायः । अधरकायः । उत्तरकायः ।

एकदेशिनेति किम्? पूर्वं नाभेः कायस्य । एकाधिकरण इति किम्? पूर्वं छात्राणामामन्त्रय । कथं मध्याह्नः, सायाह्न इति? 'संख्याविसायपूर्वस्याह्नस्य' इति ज्ञापकात् सर्वेणैकदेशशब्देनाह्नः समासो भवति ॥

## ४२५. अर्द्धं नपुंसकम् ॥ २ ॥ (७१३)

'एकदेशिनैकाधिकरणे' इति वर्त्तते । समप्रविभागेऽर्धशब्दो नपुंसकमाविष्टलिङ्गः, तस्येदं ग्रहणम्। 'अर्द्धम्' इत्येताद् नपुंसकमेकदेशिनैकाधिकरणेन समस्यते, तत्पुरुषश्च समासो भवति ।

षष्ठीसमासापवादोऽयं योगः । अर्द्धं पिप्पल्याः अर्द्धपिप्पली । अर्द्धकोशातकी ।

नपुंसकमिति किम्? ग्रामार्द्धः । नगरार्द्धः । एकदेशिनेत्येव – अर्द्धं पशोर्देवदत्तस्य देवदत्तेन सह समासो न भवति । 'एकाधिकरणे' इत्येव – अर्द्धं पिप्पलीनाम् ॥

## ४२६. द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ॥ ३ ॥ (७१४)

'एकदेशिनैकाधिकरणे' इति वर्त्तते । षष्ठीसमासापवादोऽयं योगः । अन्यतरस्यांग्रहणात् सोऽपि षष्ठीसमासो भवति । 'पूरणगुण' (२.२.११) इति प्रतिषेधश्चात एवान्यतरस्यांग्रहणसामर्थ्यान्न प्रवर्त्तते । द्वितीयादीनि शब्दरूपाणि एकदेशिनैकाधिकरणेन सहान्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति । द्वितीयं भिक्षायाः द्वितीयभिक्षा । षष्ठीसमासपक्षे – भिक्षाद्वितीयं वा । तृतीयं भिक्षायाः तृतीयभिक्षा । भिक्षातृतीयं वा । चतुर्थं भिक्षायाः चतुर्थभिक्षा । भिक्षाचतुर्थं वा । तुर्यं भिक्षायाः तुर्यभिक्षा । भिक्षातुर्यं वा ।

तुरीयशब्दस्यापीष्यते । तुरीयं भिक्षायाः तुरीयभिक्षा । भिक्षातुरीयं वा ।

एकदेशिनेत्येव – द्वितीयं भिक्षाया भिक्षुकस्य । एकाधिकरण इत्येव – द्वितीयं भिक्षाणाम् ।

## ४२७. प्राप्तापन्ने च द्वितीयया ॥ ४ ॥ (७१५)

एकदेशिनैकाधिकरणे इति निवृत्तम् । द्वितीयासमासे प्राप्ते वचनमिदम् । समासविधानात्सोऽपि भवति । प्राप्त, आपन्न – इत्येतौ द्वितीयान्तेन सह समस्येते, तत्पुरुषश्च समासो भवति । प्राप्तो जीविकां प्राप्तजीविकः, जीविकाप्राप्त इति वा । आपन्नो जीविकाम् आपन्नजीविकः, जीविकापन्न इति वा ।

## ४२८. कालाः परिमाणिना ॥ ५ ॥ (७१६)

परिमाणमस्यास्तीति परिमाणी, तद्वाचिना सुबन्तेन सह सामर्थ्यात्परि–माणवचनाः कालशब्दाः समस्यन्ते, तत्पुरुषश्च समासो भवति । षष्ठीसमासविषये योगारम्भः । मासो जातस्य मासजातः । संवत्सरजातः । द्व्यहजातः । त्र्यहजातः॥

## ४२९. नञ् ॥ ६ ॥ (७५६)

नञ् समर्थेन सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति । न ब्राह्मणः – अब्राह्मणः । अवृषलः ।

नञो नलोपस्तिङि क्षेपे । अपचसि त्वं जाल्म ॥

## ४३०. ईषदकृता ॥ ७ ॥ (७५५)

' ईषत् ' इत्ययं शब्दोऽकृदन्तेन सुपा सह समस्यते, तत्पुरुषश्च समासो भवति ।

ईषद् गुणवचनेनेति वक्तव्यम् (म० भा० २.२.७ वा० १) । ईषत्कडारः। ईषत्पिङ्गलः । ईषद्विकटः । ईषदुन्नतः । ईषत्पीतम् । ईषद्रक्तम् ।

गुणवचनेनेति किम्? इह न भवति – ईषद् गार्ग्यः ॥

## ४३१. षष्ठी ॥ ८ ॥ (७०२)

षष्ठ्यन्तं सुबन्तं समर्थेन सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति । राज्ञः पुरुषो राजपुरुषः । ब्राह्मणकम्बलः ।

कृद्योगा च षष्ठी समस्यत इति वक्तव्यम् (म० भा० २.२.८ वा० १) । इध्मप्रव्रश्चनः । पलाशशातनः किमर्थमिदमुच्यते? ' प्रतिपदविधाना च षष्ठी न समस्यते ' इति वक्ष्यति, तस्यायं पुरस्तादपकर्षः ॥

## ४३२. याजकादिभिश्च ॥ ९ ॥ (७०३)

पूर्वेण समासः सिद्ध एव, तस्य ' कर्तरि च ' (२/२/१६) इति प्रतिषेधे प्राप्ते वचनमिदमारभ्यते प्रतिप्रसवार्थम् । याजकादिभिः सह षष्ठी समस्यते, तत्पुरुषश्च समासो भवति । ब्राह्मणयाजकः । क्षत्त्रिययाजकः ।

याजक । पूजक । परिचारक । परिषेचक । स्नातक । अध्यापक । उत्सादक । उद्वर्त्तक । होतृ । पोतृ । भर्तृ । रथगणक । पत्तिगणक । तत्स्थैश्च गुणैः षष्ठी समस्यत इति वक्तव्यम् (म० भा० २.२.९ वा० २) । चन्दनगन्धः। कपित्थरसः ।

गुणात्तरेण तरलोपश्चेति वक्तव्यम् । सर्वेषां श्वेततरः सर्वश्वेतः, सर्वेषां महत्तरः सर्वमहान्; ‘ न निधरिणे ’ (२/२/१०) इति प्रतिषेधे प्राप्ते वचनमिदम् । सर्वशुक्ला गौः ॥

## ४३३. न निर्धारणे ॥ १० ॥ (७०४)

पूर्वेण समासे प्राप्ते प्रतिषेध आरभ्यते । निर्धरणे या षष्ठी सा न समस्यते.। जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणम् । क्षत्रियो मनुष्याणां शूरतमः । कृष्णा गवां सम्पन्नक्षीरतमा । धावन्नध्वगानां शीघ्रतमः ।

प्रतिपदविधाना च षष्ठी न समस्यत इति वक्तव्यम् (म० भा० २.२.१० वा० १)। सर्पिषो ज्ञानम् । मधुनो ज्ञानम् ॥

## ४३४. पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ॥ ११ ॥ (७०५)

पूरण, गुण, सुहितार्थ, सद्, अव्यय, तव्य, समानाधिकरण – इत्येतैः सह षष्ठी न समस्यते । अर्थशब्दः प्रत्येकमभिसंबध्यते, तेन स्वरूपविधिर्न भवति । पूरणार्थे – छात्राणां पञ्चमः । छात्राणां दशमः । गुण – बलाकायाः शौक्ल्यम् । काकस्य कार्ष्ण्यम् । सुहितार्थाः तृप्त्यर्थाः । फलानां सुहितः । फलानां तृप्तः । सत् – ब्राह्मणस्य कुर्वन् । ब्राह्मणस्य कुर्वाणः । अव्यय – ब्राह्मणस्य कृत्वा । ब्राह्मणस्य हृत्वा । तव्य – ब्राह्मणस्य कर्तव्यम् ।

तव्यता सानुबन्धकेन समासो भवत्येव – ब्राह्मणकर्त्तव्यम् । समानाधिकरण – शुकस्य माराविदस्य, राज्ञः पाटलिपुत्रकस्य, पाणिनेः सूत्रकारस्य । किं च स्यात्? पूर्वनिपातस्यानियमः स्यात् । अनन्तरायां तु प्राप्तौ प्रतिषिद्धायां विशेषणं विशेष्येण (२/१/५७) इति भवत्येव समासः । पूर्वनिपातश्च तदा नियोगतो विशेषणस्यैव ॥

## ४३५. क्तेन च पूजायाम् ॥ १२ ॥ (७०६)

‘ मतिबुद्धिपूजार्थेभ्यश्च ’ (२/३/१८८) इति वक्ष्यति, तस्येदं ग्रहणम् । पुजाग्रहणमुपलक्षणार्थम् । क्तो यः पूजायां विहितस्तेन षष्ठी न समस्यते । राज्ञां मतः । राज्ञां बुद्धः । राज्ञां पूजितः ।

पूजायामिति किम्? छात्रस्य हसितं छात्रहसितम् ॥

### ४३६. अधिकरणवाचिना च ॥ १३ ॥ (७०७)

'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (३/४/७६) इति वक्ष्यति, तस्येदं ग्रहणम् । अधिकरणवाचिना क्तेन षष्ठी न समस्यते । इदमेषामासितम्। इदमेषां यातम् । इदमेषां भुक्तम् ॥

### ४३७. कर्मणि च ॥ १४ ॥ (७०८)

'क्तेन' इति निवृत्तम् । कर्मग्रहणं षष्ठीविशेषणम् । कर्मणि च या षष्ठी सा न समस्यते । 'उभयप्राप्तौ कर्मणि' (२/३/८) इति षष्ठ्या इदं ग्रहणम्। आश्चर्यो गवां दोहोऽगोपालकेन । रोचते ओदनस्य भोजनं देवदत्तेन । साधु खलु पयसः पानं देवदत्तेन । विचित्रा सूत्रस्य कृतिः पाणिनिना ॥

### ४३८. तृजकाभ्यां कर्तरि ॥ १५ ॥ (७०९)

कर्तृग्रहणं षष्ठीविशेषणम् । कर्त्तरि या षष्ठी सा तृचाऽकेन च सह न समस्यते। भवतः शायिका । भवत आसिका । भवतोऽग्रगामिका । तृच् कर्त्तर्येव विधीयते, तत्प्रयोगे कर्तरि षष्ठी नास्ति । तस्मात्तृज्ग्रहणमुत्तरार्थम् । कर्तरीति किम्? इक्षुभक्षिकां मे धारयसि ॥

### ४३९. कर्त्तरि च ॥ १६ ॥ (७१०)

कर्त्तरि च यौ तृजकौ ताभ्यां सह षष्ठी न समस्यते । सामर्थ्यादकस्य विषेषणार्थं कर्तृग्रहणमितरत्र व्यभिचाराभावात् । अपां स्रष्टा । पुरां भेत्ता । वज्रस्य भर्त्ता । ननु च भर्तृशब्दो ह्ययं याजकादिषु पठ्यते ? संबन्धिशब्दस्य पतिपर्यायस्य तत्र ग्रहणम् । अकः खल्वपि – ओदनस्य भोजकः । सक्तूनां पायकः ॥

### ४४०. नित्यं क्रीडाजीविकयोः ॥ १७ ॥ (७११)

'न' इति निवृत्तम्, न तृजकौ । नित्यं समासो विधीयते । क्रीडायां जीविकायां च नित्यं षष्ठी समस्यते, तत्पुरुषश्च समासो भवति । तृच्

क्रीडाजीविकयोर्नास्तीत्यक एवोदाह्रियते – उद्दाल्कपुष्पभञ्जिका । वारणपुष्पप्रचायिका । जीविकायाम् – दन्तलेखकः, नखलेखकः ।

क्रीडाजीविकयोरिति किम्? ओदनस्य भोजकः ॥

## ४४१. कुगतिप्रादयः ॥ १८ ॥ (७६१)

' नित्यम् ' इति वर्त्तते । कुशब्दोऽव्ययं परिगृह्यते, गत्यादिभिः साहचर्यात्, न द्रव्यवचनः । कुगतिप्रादयः समर्थेन शब्दान्तरेण सह नित्यं समस्यन्ते, तत्पुरुषश्च समासो भवति । कुः पापार्थे – कुपुरुषः । गति–उररीकृतम्, यदूरीकरोति । प्रादयः – दुर्निन्दायाम्, दुष्पुरुषः । स्वती पूजायाम्, सुपुरुषः, अतिपुरुषः । आपिङ्गलः ।

प्रायिकं चैतदुपाधिवचनम् । अन्यत्रापि हि समासो दृश्यते । कोष्णम्, कवोष्णम्, कदुष्णम् । दुष्कृतम् । [सुष्टुतम्] अतिस्तुतम् । आबद्धम् [आबद्धम्] इति।

प्रादयो गताद्यर्थे प्रथमया (म० भा० २.२ १८. वा० ५) । प्रगत आचार्यः प्राचार्यः । प्रान्तेवासी । अत्यादयः क्रान्ताद्यर्थे द्वितीयया (म० भा० वा० ३) । अतिक्रान्तः खट्वाम् अतिखट्वः । अतिमालः । अवादयः क्रुष्टाद्यर्थे तृतीयया (म० भा० वा० ८) । अवक्रुष्टः कोकिलया अवकोकिलः । पर्यादयो ग्लानाद्यर्थे चतुर्थ्या (म० भा० वा० ८) । परिग्लानोऽध्ययनाय पर्यध्ययनः । अलं कुमार्यै अलंकुमारिः।

निरादयः क्रान्ताद्यर्थे पञ्चम्या । (म० भा० वा० ९) । निष्क्रान्तः कौशाम्ब्याः, निष्कौशाम्बिः । निर्वाराणसिः ।

इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् । (म० भा० वा० ६) । वाससीइव ।

प्रादिप्रसङ्गे कर्मप्रवचनीयानां प्रतिषेधो वक्तव्यः । वृक्षं प्रति विद्योतते विद्युत् । साधुर्देवदत्तो मातरं प्रति ॥

## ४४२. उपपदमतिङ् ॥ १९ ॥ (७१२)

' नित्यम् ' इति वर्तते । उपपदमतिङन्तं समर्थेन शब्दान्तरेण सह समस्यते नित्यम्, तत्पुरुषश्च समासो भवति । कुम्भकारः । नगरकारः ।

अतिङिति किम्? एधानाहारको व्रजति ।

ननु च 'सुप् सुपा' इति वर्त्तते, तत्र कुतस्तिङन्तेन सह समासप्रसङ्गः? एतज्ज्ञापयति – 'एतयोर्योगयोः सुप् सुपेति न संबध्यते' इति । तेन 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः' इत्येतदुपपन्नं भवति। अश्वक्रीती । धनक्रीती ॥

## ४४३. अमैवाव्ययेन ॥ २० ॥ (७८३)

पूर्वेणैव समासे सिद्धे नियमार्थं वचनम् । अव्ययेनोपपदस्य यः समासः सोऽमैव भवति, नान्येन । स्वादुङ्कारं भुङ्क्ते । संपन्नङ्कारं भुङ्क्ते । लवणङ्कारं भुङ्क्ते ।

अमैवेति किम्? 'कालसमयवेलासु तुमुन्' [३/३/६७] – कालो भोक्तुम् ।

एवकारकरणमुपपदविशेषणार्थम् – अमैव यत्तुल्यविधानमुपपदं तस्य समासो यथा स्यात्, अमा चान्येन च यत्तुल्यविधानं तस्य मा भूत् – अग्रे भोजम् ॥

## ४४४. तृतीयाप्रभृतीन्यन्यतरस्याम् ॥ २१ ॥ (७८४)

अमैव इत्यनुवर्त्तते । उपदंशस्तृतीयायाम् [३/४/४७] इत्यतः प्रभृति यान्युपपदानि तान्यमैवाव्ययेन सहान्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति ।

उभयत्रविभाषेयम् । यदमैव तुल्यविधानमुपपदं तस्य प्राप्ते, यथा – उपदंशस्तृतीयायाम् इति । यत्पुनरमा चान्येन च तुल्यविधानं तस्याप्राप्ते, यथा – अव्यये यथाभिप्रेताख्याने कृञः क्त्वाणमुलौ [३/४/६९] इति, मूलकोपदंशं भुङ्क्ते, मूलकेनोपदंशं भुङ्क्ते । उच्चैःकारमाचष्टे । उच्चैःकारम् ।

अमैवेत्येव – 'पर्याप्तिवचनेष्वलमर्थेषु' पर्याप्तो भोक्तुम् । प्रभुर्भोक्तुम् ॥

## ४४५. क्त्वा च ॥ २२ ॥ (७८५)

'अमैव' इति पूर्वयोगेऽनुवृत्तम्, तेनान्यत्र न प्राप्नोतीति वचनमारभ्यते ।

क्त्वाप्रत्ययेन सह तृतीयाप्रभृतीन्युपपदानि अन्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति । उच्चैः कृत्य । उच्चैः कृत्वा । ' अव्यये यथाभिप्रेताख्याने ' [३/४/५९] इति क्त्वाप्रत्ययः । समासपक्षे ल्यबेव । तृतीयाप्रभृतीनीत्येव – अलं कृत्वा । खलु कृत्वा ॥

## ४४६. शेषो बहुव्रीहिः ॥ २३ ॥ (८२९)

उपयुक्तादन्यः शेषः । शेषः समासो बहुव्रीहिसंज्ञो भवति । कश्च शेषः? यत्रान्यः समासो नोक्तः । वक्ष्यति – ' अनेकमन्यपदार्थे ' [२/२/२४] । चित्रगुः । शबलगुः । कृष्णोत्तरासङ्गः । शेष इति किम्? उन्मत्तगङ्गम्, लोहितगङ्गम् । बहुव्रीहिप्रदेशाः – ' न बहुव्रीहौ ' [१/१/२९] इत्येवमादयः॥

## ४४७. अनेकमन्यपदार्थे ॥ २४ ॥ (८३०)

अनेकं सुबन्तमन्यपदार्थे वर्तमानं सह समस्यते, बहुव्रीहिश्च समासो भवति । प्रथमार्थमेकं वर्जयित्वा सर्वेषु विभक्त्यर्थेषु बहुव्रीहिर्भवति । प्राप्तमुदकं यं ग्रामं प्राप्तोदको ग्रामः । ऊढरथोऽनड्वान् । उपहृतपशुरुद्रः । उद्धृतौदना स्थाली । चित्रगुर्देवदत्तः । वीरपुरुषको ग्रामः ।

प्रथमार्थे तु न भवति । वृष्टे देवे गतः । अनेकग्रहणं किम्?

बहूनामपि यथा स्यात् –

**सुसूक्ष्मजटकेशेन सुगजाजिनवाससा ।**
**समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिध्यति ॥** (म० भा० २.२ २४)

बहुव्रीहिः समानाधिकरणानामिति वक्तव्यम् (म.भा. २.२.२४ वा. ७) । व्यधिकरणानां मा भूत् – पञ्चभिर्भुक्तमस्य ।

अव्ययानां च बहुव्रीहिर्वक्तव्यः (वा० ८) । उच्चैर्मुखः । नोचैर्मुखः ।

सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च वक्तव्यः (वा० ९) । कण्ठे स्थितः कालोऽस्य कण्ठेकालः । उरसिलोमा । उष्ट्रस्य मुखमिव मुखं यस्य स उष्ट्रमुखः। खरमुखः ।

समुदायविकारषष्ठ्याश्च बहुव्रीहिरुत्तरपदलोपश्चेति वक्तव्यम् (वा.१०) ।

केशानां संघातः=केशसंघातः, केशसंघातः=चूडाऽस्य केशचूडः । सुवर्णस्य विकारोऽलंकारोऽस्य सुवर्णालङ्कारः ।

प्रादिभ्यो धातुजस्योत्तरपदस्य लोपश्च वा बहुव्रीहिर्वक्तव्यः (वा0 ११) । प्रपतितं पर्णमस्य प्रपर्णः, प्रपतितपर्णः । प्रपतितं पलाशमस्य प्रपलाशः ।

नञोऽस्त्यर्थानां बहुव्रीहिर्वा चोत्तरपदलोपश्च वक्तव्यः (वा0 १२) । अविद्यमानः पुत्रो यस्य अपुत्रः । अविद्यमानभार्यः अभार्यः ।

सुबधिकारेऽस्तिक्षीरादीनां बहुव्रीहिर्वक्तव्यः (वा0 १८) । अस्तिक्षीरा ब्राह्मणी। अस्त्यादयो निपाताः ॥

## ४४८. संख्ययाऽव्ययासान्नादूराधिकसंख्याः संख्येये ॥ २५ ॥ (८४३)

सख्येये वा संख्या वर्त्तते तया सहाव्ययासन्नादूराधिकसंख्याः समस्यन्ते, बहुव्रीहिश्च समासो भवति ।

अव्यय – उपदशाः । उपविंशाः । आसन्नदशाः । आसन्नविंशाः । अदूरदशाः। अदूरविंशाः । अधिकदशाः । अधिकविंशाः । संख्या – द्वित्राः । त्रिचतुराः । द्विदशाः।

संख्ययेति किम्? पञ्च ब्राह्मणाः । अव्ययासन्नादूराधिकसंख्या इति किम्? ब्राह्मणाः पञ्च । संख्येये इति किम्? अधिका विंशातिर्गवाम् ॥

## ४४९. दिङ्नामान्यन्तराले ॥ २६ ॥ (८४५)

दिशां नामानि दिङ्नामानि । दिङ्नामानि सुबन्तानि अन्तराले वाच्ये समस्यन्ते, बहुव्रीहिश्च समासो भवति । दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं दक्षिणपूर्वा दिक् । पूर्वोत्तरा । उत्तरपश्चिमा । पश्चिमदक्षिणा ॥

सर्वनाम्नो वृत्तिमात्रे पुर्वद्भावः (म0 भा0) । नामग्रहणं रूढ्यर्थम्, इह मा भूत् – ऐन्द्याश्च कौबेर्याश्च दिशोर्यदन्तरालमिति ॥

## ४५०. तत्र तेनेदमिति सरूपे ॥ २७ ॥ (८४६)

'तत्र' इति सप्तम्यन्तं गृह्यते । 'तेन' इति तृतीयान्तम् । सरूपग्रहणं प्रत्येकमभिसम्बद्ध्यते । तत्रेति सप्तम्यन्ते सरूपे पदे तेनेति च तृतीयान्ते

इदमित्येतस्मिन्नर्थे समस्येते, बहुव्रीहिश्च समासो भवति। इतिकरणश्चेह विवक्षार्थो लौकिकमर्थमनुसारयति । ततो ग्रहणं प्रहरणं कर्मव्यतीहारो युद्धं च समासार्थ इति सर्वमितिकरणाल्लभ्यते । यत्तत्रेति निर्दिष्टं ग्रहणं चेत्तद्भवति, यत्तेनेति निर्दिष्टं प्रहरणं चेत्तद्भवति, यदिदमिति निर्दिष्टं युद्धं चेतद्भवति । केशेषु केशेषु च गृहीत्वा इदं युद्धं वृत्तं केशाकेशि। कचाकचि। दण्डैश्च दण्डैश्च प्रहृत्य इदं युद्धं वृत्तं दण्डादण्डि । मुसलामुसलि । 'इच् कर्मव्यतीहारे' [५/४/१२७] इति इच् समासान्तः, स चाव्ययम्। 'अन्येषामपि दृश्यते' [६/३/१३५] इति पूर्वपदस्य दीर्घत्वम् ॥

सरूपग्रहणं किम्? हलैश्च मुसलैश्च प्रहृत्य इदं युद्धं वृत्तम् ॥

## ४५१. तेन सहेति तुल्ययोगे ॥ २८ ॥ (८४८)

' सह ' इत्येतच्छब्दरूपं तुल्ययोगे वर्तमानं तेन इति तृतीयान्तेन सह समस्यते, बहुव्रीहिश्च समासो भवति । सह पुत्रेणागतः सपुत्रः । सच्छात्रः । सकर्मकरः । तुल्ययोग इति किम्? ' सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ।'

विद्यमानैरेव दशभिः पुत्रैर्भारं वहतीत्यर्थः । कथं सकर्मकः, सलोमकः,सपक्षक इति? न ह्यत्र तुल्ययोगो गम्यते, किं तर्हि? विद्यमानता । प्रायिकं तुल्ययोगे इति विशेषणम्, अन्यत्रापि समासो दृश्यते ॥

## ४५२. चार्थे द्वन्द्वः ॥ २९ ॥ (९०१)

' अनेकम् ' इति वर्तते । अनेकं सुबन्तं चार्थे वर्त्तमानं समस्यते, द्वन्द्वसंज्ञश्च समासो भवति । समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । तत्र समुच्चयान्वाचययोरसामर्थ्यान्नास्ति समासः। इतरेतरयोगे समाहारे च समासो विधीयते । प्लक्षश्च प्लक्षग्रोधश्च प्लक्षन्यग्रोधौ । धवश्च खदिरश्च पलाशश्च धवखदिरपलाशाः । वाक्च त्वक्च वाक्त्वचम् । वाग्दृषदम् ।

द्वन्द्वप्रदेशाः –द्वन्द्वे च [१/१/३१] इत्येवमादयः ॥

## ४५३. उपसर्जनं पूर्वम् ॥ ३० ॥ (६५४)

' समासे ' इति वर्त्तते । उपसर्जनसंज्ञकं समासे पूर्वं प्रयोक्तव्यम् । पूर्ववचनं परप्रयोगनिवृत्त्यर्थम् । अनियमो हि स्यात् । द्वितीया – कष्टश्रितः ।

तृतीया – शंकुलाखण्डः । चतुर्थी – यूपदारु । पञ्चमी – वृकभयम् । षष्ठी – राजपुरुषः । सप्तमी – अक्षशौण्डः ॥

### ४५४. राजदन्तादिषु परम् ॥ ३१ ॥ (९०२)

पूर्वनिपाते प्राप्ते परप्रयोगार्थं वचनम् । राजदन्तादिषु परमुपसर्जनं प्रयोक्तव्यम्। न केवलमुपसर्जनस्य, अन्यस्यापि यथालक्षणं विहितस्य पूर्वनिपातस्यापवादः परनिपातो विधीयते । दन्तानां राजा राजदन्तः । वनस्याग्रे अग्रेवणम् । निपातनादलुक्।

राजदन्तः । अग्रेवणम् । लिप्तवासितम् । नग्नमुषितम् । सिक्तसंमृष्टम् । मृष्टलुञ्चितम् । अवक्लिन्नपक्वम् । अर्पितोप्तम् । उप्तगाढम् ।

पूर्वकालस्य परनिपातः – उलूखलमुसलम् । तण्डुलकिण्वम् । दृषदुपलम्। आरग्वायनबन्धकी । चित्ररथबाह्लीकम् । आवन्त्यश्मकम् । शूद्रार्यम् । स्नातकराजानौ। विष्वक्सेनार्जुनौ । अक्षिभ्रुवम् । दारगवम् ।

शब्दार्थौ । धर्मार्थौ । कामार्थौ । अनियमश्चात्रेष्यते । अर्थशब्दौ । अर्थधर्मौ । अर्थकामौ । तत्कथम् ? वक्तव्यमिदम् – धर्मादिषूभयमिति । वैकारिकतम् । गजवाजम् । गोपालधानीपूलासम् । पूलासककरण्डम् । स्थूलपूलासम् । उशीरबीजम् । सिञ्जास्थम् । चित्रास्वाती । भार्यापती । जायापती । जम्पती । दम्पती । जायाशब्दस्य जम्भावो दम्भावश्च निपात्यते । पुत्रपती । पुत्रपशू । केशश्मश्रू । श्मश्रुकेशौ । शिरोबीजम् । सर्पिर्मधुनी । मधुसर्पिषी । आद्यन्तौ । अन्तादी । गुणवृद्धी । वृद्धिगुणौ ॥

### ४५५. द्वन्द्वे घि ॥ ३२ ॥ (९०३)

'पूर्वम्' इति वर्त्तते । द्वन्द्वे समासे घ्यन्तं पूर्वं प्रयोक्तव्यम् । पटुगुप्तौ। मृदुगुप्तौ । अनेकप्राप्तावेकस्य नियमः, शेषे त्वनियमः । पटुमृदुशुक्लाः । पटुशुक्लमृदवः । द्वन्द्व इति किम्? विस्पष्टपटुः ॥

### ४५६. अजाद्यदन्तम् ॥ ३३ ॥ (९०४)

'द्वन्द्वे' इति वर्त्तते । अजाद्यदन्तं शब्दरूपं द्वन्द्वे समासे पूर्वं प्रयोक्तव्यम्। उष्ट्रखरम् । उष्ट्रशशकम् । बहुष्वनियमः । अश्वरथेन्द्राः । इन्द्ररथाश्वाः ।द्वन्द्वे घ्यन्तादजाद्यदन्तं विप्रतिषेधेन । इन्द्राग्नी । इन्द्रवायू । तपरकरणं किम्? अश्वावृषौ,

वृषाश्वो इति वा ॥

### ४५७. अल्पाच्तरम् ॥ ३४ ॥ (९०५)

'द्वन्द्वे' इति वर्त्तते । अल्पाच्तरं शब्दरूपं द्वन्द्वे समासे पूर्वं प्रयोक्तव्यम् । प्लक्षश्च न्यग्रोधश्चं प्लक्षन्यग्रोधौ । धवखदिरपलाशाः । बहुष्वनियमः – शङ्खदुन्दुभिवीणाः। वीणाशङ्खदुन्दुभयः । ऋतुनक्षत्राणामानुपूर्व्येण समानाक्षराणां पूर्वनिपातो वक्तव्यः (म० भा० २.२.३४ वा० ३) । हेमन्तशिशिरवसन्ताः । चित्रास्वाती । कृत्तिकारोहिण्यौ । समानाक्षराणामिति किम्? ग्रीष्मवसन्तौ । लघ्वक्षरं पूर्व निपततीति वक्तव्यम् (म० भा० २.२.३४ वा० ५) । कुशकाशम्। शरशादम् ।

अभ्यर्हितं च पूर्वं निपततीति वक्तव्यम् (वा0 ४) । मातापितरौ । श्रद्धामेधे। दीक्षातपसी । वर्णानामानुपूर्व्येण पूर्वनिपातः (वा0 ६) । ब्राह्मणक्षत्रियविट्शूद्राः। समानाक्षराणामित्यत्र नास्ति । भ्रातुश्च ज्यायसः पूर्वनिपातो वक्तव्यः (वा0 ७)। युधिष्ठिरार्जुनौ । संख्याया अल्पीयस्याः पूर्वनिपातो वक्तव्यः (वा0 ८) । द्वित्राः। त्रिचतुराः। नवतिशतम् ॥

### ४५८. सप्तमीविशेषणे बहुव्रीहौ ॥ ३५ ॥ (८९८)

सर्वोपसर्जनत्वाद्बहुव्रीहेरनियमे प्राप्ते नियमार्थं वचनम् । सप्तम्यन्तं विशेषणं च बहुव्रीहिसमासे पूर्वं प्रयोक्तव्यम् । कण्ठेकालः । उरसिलोमा । विशेणषम् – चित्रगुः । शबलगुः ।

सर्वनामसंख्ययोरुपसंख्यानम् (म० भा० २.२.३५ वा० १) । सर्वश्वेतः । सर्वकृष्णः द्विशुक्लः । द्विकृष्णः । अनयोरेव मिथः संप्रधारणायां परत्वात्संख्यायाः पूर्वनिपातः । द्व्यन्यः । त्र्यन्यः ।

वा प्रियस्य पूर्वनिपातः (वा0 ३) । गुडप्रियः । प्रियगुडः ।

सप्तम्याः पूर्वनिपाते प्राप्ते गड्वादिभ्यः सप्तम्यन्तं परम् (वा0 ४) । गडुकण्ठः। गडुशिराः । कथं वहेगडुः ? प्राप्तस्य चाबाधा व्याख्येया ॥

### ४५९. निष्ठा ॥ ३६ ॥ (८९९)

निष्ठान्तं च बहुव्रीहिसमासे पूर्वं प्रयोक्तव्यम् । कृतकटः । भिक्षितभिक्षिः।

अवमुक्तोपानत्कः ।

आहूतसुब्रह्मण्यः । ननु च विशेषणमेवात्र निष्ठा ? नैष नियमः, विशेषणविशेष्यभावस्य विवक्षानिबन्धनत्वात् । कटे कटेन कृतमिति वा विग्रहीतव्यम्।

निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परवचनम् (म.भा. २.२.३६ वा.१)। शार्ङ्गजग्धी । पलाण्डुभक्षिती । मासजाता । संवत्सरजाता । सुखजाता । दुःखजाता । कथं कृतकटः, भुक्तौदनः? प्राप्तस्य चाबाधा व्याख्येया ॥

प्रहरणार्थेभ्यश्च परे निष्ठासप्तम्यौ भवत इति वक्तव्यम् (म० भा० २.२.३६ वा० ५) । अस्युद्यतः । दणुपाणिः । कथम् उद्यतगदः, उद्यतासिः? प्राप्तस्य चाबाधा व्याख्येया ॥

## ४६०. वाऽऽहिताग्न्यादिषु ॥ ३७ ॥ (९००)

'निष्ठा' इति पूर्वनिपाते प्राप्ते विकल्प उच्यते । आहिताग्न्यादिषु निष्ठान्तं पूर्वं वा प्रयोज्यम् । अग्न्याहितः । आहिताग्निः । जातपुत्रः । पुत्रजातः। जातदन्तः। जातश्मश्रुः । तैलपीतः । घृतपीतः ऊढभार्यः । गतार्थः । आकृतिगणश्चायम् । तेन गडुकण्ठप्रभृतय इहैव द्रष्टव्याः ॥

## ४६१. कडाराः कर्मधारये ॥ ३८ ॥

गुणशब्दानां विशेषणत्वात् पूर्वनिपाते प्राप्ते विकल्प उच्यते । कडारादयः शब्दाः कर्मधारये समासे वा पूर्वं प्रयोक्तव्याः । कडारजैमिनिः । जैमिनिकडारः।

कडार । गडुल । काण । खञ्ज । कुण्ठ । खञ्जर । खलति । गौर । वृद्ध । भिक्षुक । पिङ्गल । तनु । वटर । कर्मधारय इति किम्? कडारपुरुषो ग्रामः॥

**॥ इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ द्वितीयाध्यायस्य द्वितीयः पादः समाप्तः ॥**

# अथ द्वितीयाध्याये तृतीयः पादः

## ४६२. अनभिहिते ॥ १ ॥ (५३६)

'अनभिहिते' इत्यधिकरोऽयं वेदितव्यः । यदित ऊर्ध्वमनुक्रमिष्यामः, 'अनभिहिते' इत्येवं तद्वेदितव्यम्। अनभिहिते अनुक्ते अनिर्दिष्टे कर्मादौ विभक्तिर्भवति। केनाभिहिते? तिङ्कृत्तद्धितसमासैः, परिसंख्यानम् (म0 भा0) वक्ष्यति -- 'कर्मणि द्वितीया', (२.३.२) कटं करोति । ग्रामं गच्छति । अनभिहित इति किम्? तिङ् – क्रियते कटः । कृत् – कृतः कटः। तद्धित–शत्यः, शतिकः (५.१.२१) । समास – प्राप्तमुदकं यं ग्रामं प्राप्तोदको ग्रामः ।

परिसंख्यानं किम्? कटं करोति भीष्ममुदारं दर्शनीयम् (म0 भा0) ।

'बहुषु बहुवचनम्' (१.४.२१) इत्येवमादिना संख्या वाच्यत्वेन विभक्तीनामुपदिष्टाः, तत्र विशेषणार्थमिदमारभ्यते– अनभिहितकर्माद्याश्रयेष्वेकत्वादिषु द्वितीयादयो वेदितव्या (म0 भा0) इति ।

## ४६३. कर्मणि द्वितीया ॥ २ ॥ (५३७)

द्वितीयादयः शब्दाः पूर्वाचार्यैः सुपां त्रिकेषु स्मर्यन्ते, तैरेवात्र व्यवहारः । कर्मणि कारके या संख्या तत्र द्वितीया विभक्तिर्भवति । कटं करोति । ग्रामं गच्छति।

**उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।**
**द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥ (म० भा० २.३.२)**

उभयतो ग्रामम् । सर्वतो ग्रामम् । धिग्देवदत्तम् । उपर्युपरि ग्रामम् । अध्यधि ग्रामम् । अधोऽधो ग्रामम् ॥

अभितः– परितः– समया – निकषा – हा – प्रतियोगेषु च दृश्यते (म0 भा0 २.३.२ वा० १) । अभितो ग्रामम् । परितो ग्रामम् । समया ग्रामम् । निकषा ग्रामम् । हा देवदत्तम् । बुभुक्षितं न प्रतिभाति किञ्चित् (म0 भा0) ॥

## ४६४. तृतीया च होश्छन्दसि ॥ ३ ॥ (३३९४)

'कर्मणि' इति वर्त्तते । द्वितीयायां प्राप्तायां तृतीया विधीयते, च शब्दात्सा च भवति । छन्दसि विषये जुहोतेः कर्मणि कारके तृतीया विभाक्तिर्भवति, द्वितीया च। ' यवाग्वाऽग्निहोत्रं जुहोति ' 'यवागूमग्निहोत्रं जुहोति' (शां0 श्रौ0 सू0 ३.१२.१६) ।

छन्दसीति किम्? यवागूमग्निहोत्रं जुहोति ।

## ४६५. अन्तराऽन्तरेण युक्ते ॥ ४ ॥ (५४५)

द्वितीया स्वर्यते, न तृतीया । अन्तराऽन्तरेणशब्दौ निपातौ साहचर्याद् गृह्येते। आभ्यां योगे द्वितीया विभक्तिर्भवति । षष्ठ्यपवादोऽयं योगः । तत्रान्तराशब्दो मध्यमाधेयप्रधानमाचष्टे । अन्तरेणशब्दस्तु तच्च विनार्थ च । अन्तरा त्वां च मां च कमण्डलुः । अन्तरेण त्वां च मां च कमण्डलुः (म0 भा0) । अन्तरेण पुरुषकारं न किञ्चिल्लभ्यते ।

युक्तग्रहणं किम्? अन्तरा तक्षशिलां पाटलिपुत्रं च स्रुघ्नस्य प्राकारः ॥

## ४६६. कालाध्वनोरत्यन्तसंयोगे ॥ ५ ॥ (५५८)

कालशब्देभ्योऽध्वशब्देभ्यश्च द्वितीया विभक्तिर्भवति अत्यन्तसंयोगे गम्यमाने। क्रियागुणद्रव्यैः साकल्येन कालाध्वनोः संबन्धः अत्यन्तसंयोगः । मासमधीते । संवत्सरमधीते । मासं कल्याणी । संवत्सरं कल्याणी । मासं गुडधानाः । अध्वनः खल्वपि – क्रोशमधीते । योजनमधीते । क्रोशं कुटिला नदी (म0 भा0 ) । क्रोशं पर्वतः । योजनं पर्वतः ।

अत्यन्तसंयोग इति किम्? मासस्य द्विरधीते । क्रोशस्यैकदेशे पर्वतः । योजनस्यैकदेशे पर्वतः ॥

## ४६७. अपवर्गे तृतीया ॥ ६ ॥ (५६३)

'कालाध्वनोरत्यन्तसंयोगे ' इति वर्त्तते । अपवर्गः फलप्राप्तौ सत्यां क्रियापरिसमाप्तिः । अपवर्गे गम्यमाने कालाध्वनोरत्यन्तसंयोगे तृतीया विभक्तिर्भवति। मासेनानुवाकोऽधीतः । संवत्सरेणानुवाकोऽधीतः । अध्वनः–क्रोशेनानुवाकोऽधीतः। योजनेनानुवाकोऽधीतः । अपवर्ग इति किम्? क्रोशमधीतोऽनुवाकः । मासमधीतः।

कर्तृव्यावृत्तौ फलसिद्धेरभावात् तृतीया न भवति । मासमधीतोऽनुवाको न चानेन गृहीतः (म० भा०) ॥

### ४६८. सप्तमीपञ्चम्यौ कारकमध्ये ॥ ७ ॥ (६४३)

'कालाध्वनोः ' इति वर्त्तते । कारकयोर्मध्ये यौ कालाध्वानौ ताभ्यां सप्तमीपञ्चम्यौ विभक्ती भवतः । अद्य भुक्त्वा देवदत्तो द्व्यहे भोक्ता, द्व्यहाद्वा भोक्ता (म० भा०) । त्र्यहे त्र्यहाद्वा भोक्ता । कर्तृशक्त्योर्मध्ये कालः । इहस्थोऽयमिष्वासः क्रोशे लक्ष्यं विद्ध्यति । क्रोशाल्लक्ष्यं विद्ध्यति (म० भा०)। कर्तृकर्मणोः कारकयोः कर्मापादानयोः कर्माधिकरणयोर्वा मध्ये क्रोशः । संख्यातानुदेशो न भवति; अस्वरितत्वात् ॥

### ४६९. कर्मप्रवचनीययुक्ते द्वितीया ॥ ८ ॥ (५४८)

कर्मप्रवचनीयैर्युक्ते द्वितीया विभक्तिर्भवति । अनुर्लक्षणे (१.४.८४) । शाकल्यस्य संहितामनु प्रावर्षत् । आगस्त्यमन्वसिञ्चत् प्रजाः ॥

### ४७०. यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ॥ ९ ॥ (६४५)

' कर्मप्रवचनीययुक्ते' इति वर्त्तते । यस्मादधिकं यस्य चेश्वरवचनं कर्मप्रवचनीयैर्युक्ते तत्र सप्तमी विभक्तिर्भवति । उप (१.४.८७) खार्यां द्रोणः । उपनिष्के कार्षापणम् । ' यस्य चेश्वरवचनम् ' इति स्वस्वामिनोर्द्वयोरपि पर्यायेण सप्तमी विभक्तिर्भवति । अधि (१.४.९७) ब्रह्मदत्ते पञ्चालाः, अधि पञ्चालेषु ब्रह्मदत्तः (म० भा०) इति । द्वितीयापवादो योगः ॥

### ४७१. पञ्चम्यपाङ्परिभिः ॥ १० ॥ (५९८)

अप, आङ, परि–इत्येतैः कर्मप्रवचनीयैर्योगे पञ्चमी विभक्तिर्भवति । अप (१.४.८९) त्रिगर्तेभ्यो वृष्टो देवः । आ पाटलिपुत्राद् वृष्टो देवः । परि (१.४.८८) त्रिगर्तेभ्यो वृष्टो देवः । अपेन साहचर्यात् परेर्वर्जनार्थस्य ग्रहणम्, तेनेह न भवति – वृक्षं परि (१.४.९०) विद्योतते विद्युत् ॥

### ४७२. प्रतिनिधिप्रतिदाने च यस्मात् ॥ ११ ॥ (६००)

मुख्यसदृशः प्रतिनिधिः । दत्तस्य प्रतिनिर्यातनम् प्रतिदानम् ।

यस्मात्प्रतिनिधिर्यतश्च प्रतिदानं तत्र कर्मप्रवचनीययुक्ते पञ्चमी विभक्तिर्भवति । अभिमन्युरर्जुनतः प्रति (१.४.९२) । प्रद्युम्नो वासुदेवतः प्रति । माषानस्मै तिलेभ्यः प्रति (१.४.९२) यच्छति ।

ननु च प्रतिनिधिप्रतिदाने कर्मवचनीययुक्ते, न तु यतः प्रतिनिधिप्रतिदाने? नैष दोषः, सम्बन्ध–सम्बन्धात्तस्यापि योगोऽस्त्येव ॥

## ४७३. गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ॥ १२ ॥ (५८५)

गत्यार्थानां धातूनां चेष्टाक्रियाणां परिस्पन्दक्रियाणां कर्मणि कारकेऽध्ववर्जिते द्वितीयाचतुर्थ्यौ भवतः । ग्रामं गच्छति । ग्रामाय गच्छति । ग्रामं व्रजति । ग्रामाय व्रजति ।

गत्यर्थग्रहणं किम्? ओदनं पचति । कर्मणीति किम्? अश्वेन व्रजति । चेष्टायामिति किम्? मनसा पाटलिपुत्रं गच्छति । अनध्वनीति किम्? अध्वानं गच्छति ।

अध्वनीत्यर्थग्रहणम् (म0 भा0) । पन्थानं गच्छति । मार्गं गच्छति ।

आस्थितप्रतिषेधश्चायं विज्ञेयः (म0 भा0) । आस्थितः संप्राप्तः, आक्रान्त उच्यते । यत्र तु उत्पथेन पन्थानं गच्छति, तत्र भवितव्यमेव चतुर्थ्या–पथे गच्छतीति (म0 भा0) ।

द्वितीयाग्रहणं किम्? न चतुर्थ्येव विकल्प्येत, अपवादविषयेऽपि यथा स्यात् – ग्रामं गन्ता, ग्रामाय गन्ता । कृद्योगलक्षणा षष्ठी न भवति ॥

## ४७४. चतुर्थी संप्रदाने ॥ १३ ॥ (५७०)

संप्रदाने कारके चतुर्थी विभक्तिर्भवति । उपाध्यायाय गां ददाति, माणवकाय भिक्षां ददाति, देवदत्ताय रोचते, पुष्पेभ्यः स्पृहयति इत्यादि ॥

चतुर्थीविधाने तादर्थ्यं उपसंख्यानम् (म० भा० २.३.१३ वा० १) । यूपाय दारु । कुण्डलाय हिरण्यम् । रन्धनाय स्थाली । अवहननायोलूखलम् ।

क्लृपि संपद्यमाने चतुर्थी वक्तव्या (म० भा० २.३.१३ वा० २) । मूत्राय कल्पते यवागूः। क्लृपीत्यर्थनिर्देशः। मूत्राय संपद्यते यवागूः। मूत्राय जायते यवागूः।

उत्पातेन ज्ञाप्यमाने चतुर्थी वक्तव्या (म0 भा0 २.३.१३) ।

वाताय कपिला विद्युदातपायातिलोहिनी ।
पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् ॥ (म0 भा0 २.३.१३)

हितयोगे चतुर्थी वक्तव्या (म० भा० २.३.१३ वा० ४) । गोभ्यो हितम् । अरोचकिने हितम् ॥

## ४७५. क्रियार्थोपपदस्य च कर्मणि स्थानिनः ॥ १४ ॥ (५८१)

क्रियार्था क्रिया उपपदं यस्य, सोऽयं क्रियार्थोपपदः । ‘ तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ’ (३.३.१०) इत्येष विषयो लक्ष्यते । क्रियार्थोपपदस्य च स्थानिनोऽप्रयुज्यमानस्य धातोः कर्मणि कारके चतुर्थी विभक्तिर्भवति । द्वितीयापवादो योगः । एधेभ्यो व्रजति । पुष्पेभ्यो व्रजति ।

क्रियार्थोपपदस्येति किम्? प्रविश पिण्डीम् । प्रविश तर्पणम् । भक्षिरत्र स्थानी, न तु क्रियार्थोपपदः । कर्मणीति किम्? एधेभ्यो व्रजति शकटेन । स्थानिन इति किम् ? एधानाहर्तुं व्रजति ॥

## ४७६. तुमर्थाच्च भाववचनात् ॥ १५ ॥ (५८२)

तुमुना समानार्थस्तुमर्थः । तुमर्थभाववचनप्रत्ययान्तात् प्रातिपदिकाच्चतुर्थी विभक्तिर्भवति । 'भाववचनाश्च' (३.३.११) इति वक्ष्यति, तस्येदं ग्रहणम् । पाकाय व्रजति । त्यागाय व्रजति । भूतये व्रजति । संपत्तये व्रजति ।

तुमर्थादिति किम्? पाकः, त्यागः, रागः । भाववचनादिति किम्? कारको (३.३.१०) व्रजति ॥

## ४७७. नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च ॥ १६ ॥ (५८३)

नमः स्वस्ति, स्वाहा, स्वधा, अलम्, वषट्–इत्येतैर्योगे चतुर्थी विभक्तिर्भवति। नमो देवेभ्यः (मै0 १.२.१३) । स्वस्ति प्रजाभ्यः । स्वाहाऽग्नये (तै0 १.८.१३.१)। स्वधा पितृभ्यः (मै १.२.१३) । अलं मल्लो मल्लाय (म0 भा0) । अलमिति – पर्याप्त्यर्थग्रहणम् – प्रभुर्मल्लो मल्लाय, शक्तो मल्लो मल्लाय (म0 भा0) । वषडग्नये । वषडिन्द्राय (ऋ0 ७.९७.७) । चकारः पुनरस्यैव समुच्चयार्थः, तेनाशीर्विवक्षायामपि षष्ठीं बाधित्वा चतुर्थ्येव भवति – स्वस्ति गोभ्यो भूयात् । स्वस्ति ब्राह्मणेभ्यः (म0 भा0) ॥

## ४७८. मन्यकर्मण्यनादरे विभाषाऽप्राणिषु ॥ १७ ॥ (५८४)

मन्यतेः कर्मणि मन्यकर्मणि । मन्यकर्मणि प्राणिवर्जिते विभाषा चतुर्थी विभक्तिर्भवति अनादरे गम्यमाने । अनादरः तिरस्कारः । न त्वां तृणं मन्ये न त्वां तृणाय मन्ये । न त्वां बुसं मन्ये । न त्वां बुसाय मन्ये ।

मन्यतिग्रहणं किम्? न त्वां तृणं चिन्तयामि । विकरणनिर्देशः किमर्थः ? न त्वां तृणं मन्वे ।

अनादर इति किम्?

**अश्मानं दृषदं मन्ये मन्ये काष्ठमुलूखलम् ।**
**अन्धायास्तं सुतं मन्ये यस्य माता न पश्यति ॥**

अप्रणिष्विति किम्? न त्वा शृगालं मन्ये ।

यदेतदप्राणिष्विति तदनावादिष्विति वक्तव्यम् (म० भा० २.३.१७) । व्यवस्थितविभाषा च ज्ञेया । न त्वा नावं मन्ये । यावत्तिर्णं न नाव्यम् । न त्वाऽन्नं मन्ये । यावन्न भुक्तं श्राद्धम् । प्राणिषु तूभयम्– न त्वा काकं मन्ये (म० भा०) । न त्वा शृगालं मन्ये । इह चतुर्थी द्वितीया च भवतः । न त्वा श्वानं मन्ये । न त्वा शुने मन्ये (म० भा०) । युष्मदः कस्मान्न भवति चतुर्थी, एतदपि हि मन्यतेः कर्म? व्यवस्थितविभाषाविज्ञानादेव न भवति ॥

## ४७९. कर्तृकरणयोस्तृतीया ॥ १८ ॥ (५६१)

कर्त्तरि करणे च कारके तृतीया विभक्तिर्भवति । देवदत्तेन कृतम् । यज्ञदत्तेन भुक्तम् । करणे – दात्रेण लुनाति । परशुना छिनत्ति ।

तृतीयाविधाने प्रकृत्यादीनामुपसंख्यानम् (म० भा० २.३.१८ वा० १) । प्रकृत्याऽभिरूपः । प्रकृत्या दर्शनीयः । प्रायेण याज्ञिकः । प्रायेण वैयाकरणः । गार्ग्योऽस्मि गोत्रेण । समेन धावति । विषमेण धावति । द्विद्रोणेन धान्यं क्रीणाति। पञ्चकेन पशून् क्रीणाति । साहस्रेणाश्वान् क्रीणाति (म० भा०)॥

## ४८०. सहयुक्तेऽप्रधाने ॥ १९ ॥ (५६४)

सहार्थेन युक्ते अप्रधाने तृतीया विभक्तिर्भवति । पुत्रेण सहागतः पिता ।

पुत्रेण सह गोमान् । पितुरत्र क्रियादिसंबन्धः शब्देनोच्यते, पुत्रस्य तु प्रतीयमान इति तस्याप्राधान्यम् । सहार्थेन योगे तृतीयाविधानात्पर्यायप्रयोगेऽपि भवति – पुत्रेण सार्द्धमिति । विनापि सहशब्देन भवति 'वृद्धो यूना' (१.२.६५) इति निपातनात्।

अप्रधान इति किम्? शिष्येण सहोपाध्यायस्य गौः ॥

## ४८१. येनाङ्गविकारः ॥ २० ॥ (५६५)

अङ्गशब्दोऽत्राङ्गसमुदाये शरीरे वर्तते, 'येन' इति च तदवयवो हेतुत्वेन निर्दिश्यते । येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया विभक्तिर्भवति । अक्ष्णा काणः । पादेन खञ्जः । पाणिना कुणिः । अवयवधर्मेण समुदायो व्यपदिश्यते । अङ्गविकार इति किम्? अक्षि काणमस्य (म० भा०) ॥

## ४८२. इत्थम्भूतलक्षणे ॥ २१ ॥ (५६६)

कञ्चित्प्रकारं प्राप्तः इत्थम्भूतः, तस्य लक्षणमित्थम्भूतलक्षणम्, ततस्तृतीया विभक्तिर्भवति । अपि भवान् कमण्डलुना छात्त्रमद्राक्षीत् (म० भा०) ? छात्त्रेणोपाध्यायम् । शिखया परिव्राजकम् । इह न भवति कमण्डलुपाणिश्छात्त्र इति; लक्षणस्य समासेऽन्तर्भूतत्वात् । इत्थम्भूत इति किम्? वृक्षं प्रति विद्योतनम्॥

## ४८३. संज्ञोऽन्यतरस्यां कर्मणि ॥ २२ ॥ (५६७)

संपूर्वस्य जानातेः कर्मणि कारके द्वितीयायां प्राप्तायामन्यतरस्यां तृतीया विभक्तिर्भवति । पित्रा संजानीते । पितरं संजानीते । मात्रा संजानीते । मातरं संजानीते (म० भा०) ॥

## ४८४. हेतौ ॥ २३ ॥ (५६८)

फलसाधनयोग्यः पदार्थो लोके हेतुरुच्यते । तद्वाचिनस्तृतीया विभक्तिर्भवति धनेन कुलम् । कन्यया शोकः । विद्यया यशः ॥

## ४८५. अकर्तर्यृणे पञ्चमी ॥ २४ ॥ (६०१)

'हेतौ' इति वर्त्तते । कर्तृवर्जितं यदृणं हेतुस्ततः पञ्चमी विभक्तिर्भवति । तृतीयापवादो योगः । शताद्बद्धः । सहस्राद्बद्धः ॥

अकर्त्तरीति किम्? शतेन बन्धितः । शतमृणं च भवति, प्रयोजकत्वाच्च कर्तृसंज्ञकम् ॥

## ४८६. विभाषा गुणेऽस्त्रियाम् ॥ २५ ॥ (६०२)

'हेतौ' इति वर्त्तते । गुणे हेतावस्त्रीलिङ्गे विभाषा पञ्चमी विभक्तिर्भवति । जाड्याद्बद्धः, जाड्येन बद्धः । पाण्डित्याद् मुक्तः, पाण्डित्येन मुक्तः ।

गुणग्रहणं किम्? धनेन कुलम् । अस्त्रियामिति किम् ? बु द्धया मुक्तः । प्रज्ञया मुक्तः ॥

## ४८७. षष्ठी हेतुप्रयोगे ॥ २६ ॥ (६०७)

हेतोः प्रयोगः हेतुप्रयोगः । हेतुशब्दस्य प्रयोगे हेतौ द्योत्ये षष्ठी विभक्तिर्भवति। अन्नस्य हेतोर्वसति ॥

## ४८८. सर्वनाम्नस्तृतीया च ॥ २७ ॥ (६०८)

सर्वनाम्नो हेतुशब्दस्य प्रयोगे हेतौ द्योत्ये तृतीया विभक्तिर्भवति षष्ठी च । पूर्वेण षष्ठ्यामेव प्राप्तायामिदमुच्यते । कस्य हेतोर्वसति । केन हेतुना वसति । यस्य हेतोर्वसति । येन हेतुना वसति ।

निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम् (म० भा० २.३.२३ वा० १)॥ किं निमित्तं वसति । केन निमित्तेन वसति । कस्मै निमित्ताय वसति । कस्मान्निमित्ताद्वसति। कस्य निमित्तस्य वसति । कस्मिन्निमित्ते वसति । एवं कारणहेत्वोरप्युदाहार्यम् ।

अर्थग्रहणं चैतत् । पर्यायोपादानं तु स्वरूपविधिर्मा विज्ञायीति । तेनेहापि भवति – किं प्रयोजनं वसति । केन प्रयोजनेन वसति । कस्मै प्रयोजनाय वसति। कस्मात्प्रयोजनाद् वसति । कस्य प्रयोजनस्य वसति । कस्मिन् प्रयोजने वसति॥

## ४८९. अपादाने पञ्चमी ॥ २८ ॥ (५८७)

अपादाने कारके पञ्चमी विभक्तिर्भवति । ग्रामादागच्छति । पर्वतादवरोहति। वृकेभ्यो बिभेति । अध्ययनात्पराजयते ।

पञ्चमीविधाने ल्यब्लोपे कर्मण्युपसंख्यानम् (म० भा० २.३.२८ वा० १)। प्रासादमारुह्य प्रेक्षते, प्रासादात्प्रेक्षते ।

अधिकरणे चोपसंख्यानम् (म० भा० २.३.२८ वा० २) । आसने उपविश्य

प्रेक्षते, आसनात्प्रेक्षते । शयनात्प्रेक्षते ।

प्रश्नाख्यानयोश्च पञ्चमी वक्तव्या (म० भा २.३.२८ वा० ३)। कुतो भवान्? पाटलिपुत्रात्।

यतश्चाध्वकालनिर्माणं तत्र पञ्चमी वक्तव्या (म० भा० २.३.२८ वा० ४)। गवीधुमतः सांकाश्यं चत्वारि योजनानि । कार्त्तिक्या आग्रहायणी मासे ।

तद्युक्तात्काले सप्तमी वक्तव्या (म० भा० २.३.२८ वा० ५) । कार्त्तिक्या आग्रहायणी मासे । अध्वनः प्रथमा सप्तमी च वक्तव्या (म० भा० २.३.२८ वा० ६) । गवीधुमतः सांकाश्यं चत्वारि योजनानि, चतुर्षु योजनेषु वा ॥

**४९०. अन्यारादितरर्त्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते ॥२९ ॥ (५९५)**

अन्य, आरात्, इतर, ऋते, दिक्शब्द, अञ्चूत्तरपद, आच्, आहि – इत्येतैर्योगे पञ्चमी विभक्तिर्भवति ।

(१) अन्य – इत्यर्थग्रहणम् । तेन पर्यायप्रयोगेऽपि भवति । अन्यो देवदत्तात्। भिन्नो देवदत्तात् । अर्थान्तरं देवदत्तात् । विलक्षणो देवदत्तात् ।

(२) आराच्छब्दो दूरान्तिकार्थे वर्त्तते । तत्र 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' (२.३.३४) इति प्राप्ते पञ्चमी विधीयते । आराद्देवदत्तात् । आराद्यज्ञदत्तात् ।

(३) 'इतर' इति निर्दिश्यमानस्य प्रतियोगी पदार्थ उच्यते । इतरो देवदत्तात्।

(४) 'ऋते' इति अव्ययं वर्जनार्थे । ऋते देवदत्तात् । ऋते यज्ञदत्तात् ।

(५) दिक्शब्दः – पूर्वो ग्रामात् पर्वतः । उत्तरो ग्रामात् । पूर्वो ग्रीष्माद्वसन्तः। उत्तरो ग्रीष्मो वसन्तात् । 'दिक्शब्द' इत्यत्र शब्दग्रहणं देशकालवृत्तिनापि दिक्शब्देन योगे यथा स्यात्; इतरथा हि दिग्वृत्तिनैव स्यात् – इयमस्याः पूर्वेति । इह तु न स्यात् – अयमस्मात्पूर्वः काल इति ।

(६) अञ्चूत्तरपद – प्राग् ग्रामात् । प्रत्यग् ग्रामात् (म0 भा0) । ननु चायमपि दिक्शब्द एव? 'षष्ठ्यतसर्थप्रत्ययेन' (२.३.३०) इति वक्ष्यति, तस्यायं पुरस्तादपकर्षः ।

(७) आच् – दक्षिणा ग्रामात् । उत्तरा ग्रामात् ।

(८) आहि – दक्षिणाहि ग्रामात् । उत्तराहि ग्रामात् ॥

**४९१. षष्ठ्यतसर्थप्रत्ययेन ॥ ३० ॥ (३०९)**

'दक्षिणोत्तराभ्यामतसुच्' (५.३.२८) इति वक्ष्यति, तस्येदं ग्रहणम्। अतसर्थेन प्रत्ययेन युक्ते षष्ठी विभक्तिर्भवति । दक्षिणतो ग्रामस्य । उत्तरतो ग्रामस्य । [पुरो ग्रामस्य] पुरस्ताद् ग्रामस्य । उपरि ग्रामस्य । उपरिष्टाद् ग्रामस्य (म० भा०) ॥

## ४९२. एनपा द्वितीया ॥ ३१ ॥ (६१०)

'एनबन्यतरस्यामदूरेऽपञ्चम्याः' (५.३.३५) इति वक्ष्यति । तेन युक्ते द्वितीया विभक्तिर्भवति । पूर्वेण षष्ठ्यां प्राप्तायामिदं वचनम् । दक्षिणेन ग्रामम् । उत्तरेण ग्रामम् ।

षष्ठ्यपीष्यते – दक्षिणेन ग्रामस्य । उत्तरेण ग्रामस्य । तदर्थं योगविभागः कर्तव्यः ॥

## ४९३. पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् ॥ ३२ ॥ (६०३)

पञ्चमीग्रहणम् [इह] अनुवर्त्तते । पृथक्, विना, नाना – इत्येतैर्योगे तृतीया विभक्तिर्भवति, अन्यतरस्यां पञ्चमी च । पृथग् देवदत्तेन, पृथग् देवदत्तात्। विना देवदत्तेन, विना देवदत्तात् । नाना देवदत्तेन, नाना देवदत्तात् । 'पृथग्विनानानाभि' इति योगविभागो द्वितीयार्थः ॥

विना वातं विना वर्षं विद्युत्प्रपतनं विना ।
विना हस्तिकृतान् दोषान् केनेमौ पातितौ द्रुमौ ॥

## ४९४. करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ॥ ३३ ॥ (६०४)

स्तोक, अल्प, कृच्छ्र, कतिपय – इत्येतेभ्योऽसत्त्ववचनेभ्यः करणे कारकेऽन्यतरस्यां तृतीया भवति । पञ्चम्यत्र पक्षे विधीयते, तृतीया तु करण इत्येव सिद्धा । यदा तु धर्ममात्रं करणतया विवक्ष्यते न द्रव्यम्, तदा स्तोकादीनामसत्त्ववचनता । स्तोकान्मुक्तः, स्तोकेन मुक्तः । अल्पान्मुक्तः, अल्पेन मुक्तः । कृच्छ्रान्मुक्तः, कृच्छ्रेण मुक्तः । कतिपयान्मुक्तः, कतिपयेन मुक्तः ।

असत्त्ववचनस्येति किम्? स्तोकेन विषेण हतः । अल्पेन मधुना मत्तः । करण इति किम्? क्रियाविशेषणे कर्मणि मा भूत् – स्तोकं मुञ्चति ॥

## ४९५. दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ॥ ३४ ॥ (६११)

पञ्चम्यनुवर्त्तते। दूरान्तिकार्थैः शब्दैर्योगे षष्ठी विभक्तिर्भवत्यन्यतरस्यां पञ्चमी च। दूरं ग्रामात्, दूरं ग्रामस्य (म० भा०)। विप्रकृष्टं ग्रामात्, विप्रकृष्टं ग्रामस्य। अन्तिकं ग्रामात्, अन्तिकं ग्रामस्य। अभ्याशं ग्रामात्, अभ्याशं ग्रामस्य। अन्यतरस्यांग्रहणं पञ्चम्यर्थम्, इतरथा हि तृतीया पक्षे स्यात्॥

## ४९६. दूरान्तिकार्थेभ्यो द्वितीया च॥ ३५॥ (६०५)

पञ्चम्यनुवर्त्तते। दूरान्तिकार्थेभ्यः शब्देभ्यो द्वितीया विभक्तिर्भवति, चकारात्पञ्चमी तृतीयापि समुच्चीयते। दूरं ग्रामस्य, दूराद् ग्रामस्य, दूरेण ग्रामस्य (म० भा०)। अन्तिकं ग्रामस्य, अन्तिकाद् ग्रामस्य, अन्तिकेन ग्रामस्य।

प्रातिपदिकार्थे विधानम्। असत्त्ववचनग्रहणं चानुवर्त्तते। सत्त्वशब्देभ्यो यथायथं विभक्तयो भवन्ति दूरः पन्थाः, दूराय पथे देहि, दूरस्य पथः स्वम्॥

## ४९७. सप्तम्यधिकरणे च॥ ३६॥ (६३३)

सप्तमी विभक्तिर्भवत्यधिकरणे कारके, चकाराद् दूरान्तिकार्थेभ्यश्च। कटे आस्ते। शकटे आस्ते। स्थाल्यां पचति। दूरान्तिकार्थेभ्यः खल्वपि – दूरे ग्रामस्य, अन्तिके ग्रामस्य, अभ्याशे ग्रामस्य। दूरान्तिकार्थेभ्यश्चतस्रो विभक्तयो भवन्ति, द्वितीयातृतीयापञ्चमीसप्तम्यः।

सप्तमीविधाने क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् (म० भा० २.३.३६ वा० १)।

अधीती व्याकरणे। परिगणिती याज्ञिके। आम्नाती छन्दसि।

साध्वसाधुप्रयोगे च सप्तमी वक्तव्या (म० भा० वा० २)।

साधुर्देवदत्तो मातरि। असाधुः पितरि।

कारकार्हाणां च कारकत्वे सप्तमी वक्तव्या (म० भा० वा० ३)।

ऋद्धेषु भुञ्जानेषु दरिद्रा आसते। ब्राह्मणेषु तरत्सु वृषला आसते।

कारकार्हाणां चाकारकत्वे सप्तमी वक्तव्या (म० भा० वा० ४)।

दरिद्रेष्वासीनेषु ऋद्धा भुञ्जते। वृषलेष्वासीनेषु ब्राह्मणास्तरन्ति।

तद्विपर्यासे च सप्तमी वक्तव्या (म० भा०, वा०)।

ऋद्धेष्वासीनेषु दरिद्रा भुञ्जते। ब्राह्मणेष्वसीनेषु वृषलास्तरन्ति।

निमित्तात्कर्मसंयोगे सप्तमी वक्तव्या (म० भा० २.३.३६ वा०)।

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥ (म० भा०)

## ४९८. यस्य च भावेन भावलक्षणम् ॥ ३७ ॥ (७३४)

'सप्तमी' इति वर्तते । भावः क्रिया । यस्य च भावेन यस्य च क्रियया क्रियान्तरं लक्ष्यते ततो भाववतः सप्तमी विभक्तिर्भवति । प्रसिद्धा च क्रिया क्रियान्तरं लक्ष्यति । गोषु दुह्यमानासु गतः । दुग्धास्वागतः। अग्निषु हूयमानेषु गतः। हुतेष्वागतः (म० भा०) । भावेनेति किम्? यो जटाभिः स भुङ्क्ते । पुनर्भावग्रहणं किम्? यो भुङ्क्ते स देवदत्तः ॥

## ४९९. षष्ठी चानादरे ॥ ३८ ॥ (६३५)

पूर्वेण सप्तम्यां प्राप्तायां षष्ठी विधीयते, चकारात् सापि भवति । अनादराधिके भावलक्षणे भाववतः षष्ठीसप्तम्यौ विभक्ती भवतः । रुदतः प्राव्राजीत्, रुदति प्राव्राजीत् । क्रोशतः प्राव्राजीत्, क्रोशति प्राव्राजीत्। क्रोशन्तमनादृत्य प्रव्रजित इत्यर्थः ॥

## ५००. स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ॥ ३९ ॥ (६३६)

षष्ठीसप्तम्यौ वर्तेते । स्वामिन्, ईश्वर, अधिपति, दायाद, साक्षिन्, प्रतिभू, प्रसूत – इत्येतैर्योगे षष्ठीसप्तम्यौ विभक्ती भवतः । गवां स्वामी, गोषु स्वामी । गवामीश्वरः, गोष्वीश्वरः । गवामधिपतिः, गोष्वधिपतिः । गवां दायादः, गोषु दायादः। गवां साक्षी, गोषु साक्षी । गवां प्रतिभूः, गोषु प्रतिभूः । गवां प्रसूतः, गोषु प्रसूतः। षष्ठ्यामेव प्राप्तायां पक्षे सप्तमीविधानार्थं वचनम् ॥

## ५०१. आयुक्तकुशलाभ्यां चासेवायाम् ॥ ४० ॥ (६३७)

षष्ठीसप्तम्यौ वर्तेते । आयुक्तः व्यापारितः, कुशलः निपुणः ताभ्यां योगे आसेवायां गम्यमानायां षष्ठीसप्तम्यौ विभक्ती भवतः । आसेवा तात्पर्यम् । आयुक्तः कटकरणस्य । आयुक्तः कटकरणे । कुशलः कटकरणस्य । कुशलः कटकरणे। आसेवायामिति किम्? आयुक्तो गौः शकटे । तत्र सप्तम्येवाधिकरणे भवति ॥

## ५०२. यतश्च निर्धारणम् ॥ ४१ ॥

षष्ठीसप्तम्यौ वर्तेते । जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणम् निर्द्धारणम् । यतो निर्द्धारणं ततः षष्ठीसप्तम्यौ विभक्ती भवतः । मनुष्याणां क्षत्त्रियः शूरतमः । मनुष्येषु क्षत्त्रियः शूरतमः । गवां कृष्णा सम्पन्नक्षीरतमा । गोषु कृष्णा संपन्नक्षीरतमा । अध्वगानां धावन्तः शीघ्रतमा : । अध्वगेषु धावन्तः शीघ्रतमाः ॥

## ५०३. पञ्चमी विभक्ते ॥ ४२ ॥ (६३९)

'यतश्च निर्द्धारणम्' इति वर्तते । षष्ठीसप्तम्यपवादो योगः। विभागः विभक्तम्। यस्मिन्निर्द्धारणाश्रये विभक्तमस्यास्ति ततः पञ्चमी विभक्तिर्भवति । माथुराः पाटलिपुत्रकेभ्यः सुकुमारतराः । आढ्यतराः ॥

## ४०४. साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ॥ ४३ ॥ (६४०)

साधु, निपुण – इत्येताभ्यां योगेऽर्चायां गम्यमानायां सप्तमी विभक्तिर्भवति न चेत् प्रतिः प्रयुज्यते । मातरि साधुः । पितरि साधुः । मातरि निपुणः । पितरि निपुणः ।

अर्चायामिति किम्? साधुर्भृत्यो राज्ञः । तत्त्वकथने न भवति । अप्रतेरिति किम्? साधुर्देवदत्तो मातरं प्रति (म0 भा0) ।

अप्रत्यादिभिरिति वक्तव्यम् (म० भा० २.३.४३ वा० १) । साधुर्देवदत्तो मातरं परि । मातरमनु (म0 भा0) ॥

## ५०५. प्रसितोत्सुकाभ्यां तृतीया च ॥ ४४ ॥ (६४१)

प्रसित, उत्सुक – इत्येताभ्यां योगे तृतीया विभक्तिर्भवति, चकारात्सप्तमी च । प्रसितः प्रसक्तः, यस्तत्र नित्यमेवावबद्धः स प्रसितशब्देनोच्यते । केशैः प्रसितः, केशेषु प्रसितः । केशैरुत्सुकः ॥

## ५०६. नक्षत्रे च लुपि ॥ ४५ ॥ (६४२)

तृतीयासप्तम्यावनुवर्तेते । लुबन्तान्नक्षत्रशब्दात् तृतीयासप्तम्यौ विभक्ती भवतः। पुष्येण (४.२.३,४) पायसमश्नीयात् । पुष्ये पायसमश्नीयात् । मघाभिः पललौदनम्। मघासु पललौदनम् ।

नक्षत्र इति किम्? पञ्चालेषु (४.२–६९, ८१) वसति । लुपीति किम्? मघासु ग्रहः । इह कस्मान्न भवति – अद्य पुष्यः, अद्य कृत्तिका (म0 भा0)? 'अधिकरणे' इति वर्तते । वचनं तु पक्षे तृतीयाविधानार्थम् ॥

**५०७. प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ॥ ४६ ॥ (५६२)**

प्रातिपदिकार्थः सत्ता । लिङ्गम्=स्त्रीलिङ्गपुल्लिङ्गनपुंसकानि । परिमाणम् द्रोणः, खारी, आढकम् (म0 भा0) । वचनम् एकत्वद्वित्वबहुत्वानि । मात्रशब्दः प्रत्येकमभिसंबध्यते । प्रातिपदिकार्थमात्रे लिङ्गमात्रे परिमाणमात्रे वचनमात्रे प्रथमा विभक्तिर्भवति ।

प्रातिपदिकार्थमात्रे – उच्चैः । नीचैः ।

लिङ्गग्रहणं किम्? कुमारी, वृक्षः, कुण्डम् (म0 भा0) इत्यत्रापि यथा स्यात्। परिमाणग्रहणं किम्? द्रोणः, खारी, आढकम् – इत्यत्रापि यथा स्यात् ।

वचनग्रहणं किम्? एकत्वादिषूक्तेष्वपि यथा स्यात्–एकः द्वौ, बहवः (म0 भा0) ।

प्रातिपदिकग्रहणं किम्? निपातस्यानार्थकस्य प्रातिपदिकत्वमुक्तम्, ततोऽपि यथा स्यात्–प्रलम्बते । अध्यागच्छति ॥

**४०८. सम्बोधने च ॥ ४७ ॥ (५३३)**

आभिमुख्यकरणं संबोधनम्, तदधिके प्रातिपदिकार्थे प्रथमा न प्राप्नोतीति वचनमारभ्यते । संबोधने च प्रथमा विभक्तिर्भवति । हे देवदत्त ! हे देवदत्तौ ! हे देवदत्ताः ॥

**५०९. साऽऽमन्त्रितम् ॥ ४८ ॥ (४११)**

संबोधने या प्रथमा तदन्तं शब्दरूपमामन्त्रितसंज्ञं भवति । तथा चैवोदाहृतम्। आमन्त्रितप्रदेशाः – 'आमन्त्रितं पूर्वमविद्यमानवद्' (८.१.७२) इत्येवमादयः॥

**५१०. एकवचनं संबुद्धिः ॥ ४९ ॥ (१९२)**

आमन्त्रितप्रथमाया यदेकवचनं तत्संबुद्धिसंज्ञं भवति । हे पटो ! हे देवदत्त! संबुद्धिप्रदेशः – 'एङ्ह्रस्वात्संबुद्धेः' (६.१.६९) इत्येवमादयः ॥

## ५११. षष्ठी शेषे ॥ ५० ॥ (६०६)

कर्मादिभ्यो योऽन्यः प्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिसंबन्धादिः शेषस्तत्र षष्ठी विभक्तिर्भवति । राज्ञः पुरुषस्य गृहम् । पशोः पादः । पितुः पुत्रः ॥

## ५१२. ज्ञोऽविदर्थस्य करणे ॥ ५१ ॥ (६१२)

जानातेरविदर्थस्याज्ञानार्थस्य करणे कारके षष्ठी विभक्तिर्भवति । सर्पिषो जानीते । मधुनो जानीते । सर्पिषा करणेन प्रवर्तत इत्यर्थः ।

प्रवृत्तिवचनो जानातिरविदर्थः । अथवा–मिथ्याज्ञानवचनः । सर्पिषि रक्तः प्रतिहतो वा । चित्तभ्रान्त्या तदात्मना सर्वमेव ग्राह्यं प्रतिपद्यते । मिथ्याज्ञानमज्ञानमेव।

अविदर्थस्येति किम्? स्वरेण पुत्रं जानाति ॥

## ४१३. अधीगर्थदयेशां कर्मणि ॥ ५२ ॥ (६१३)

'शेषे' इति वर्तते । अधीगर्थाः स्मरणार्थाः 'दय दानगतिरक्षणेषु' (धा0 पा0 ४८१), 'ईश ऐश्वर्ये' (१०२१) – एतेषां कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति । मातुरध्येति । मातुः स्मरति । सर्पिषो दयते । सर्पिष ईष्टे । मधुन ईष्टे ।

कर्मणीति किम्? मातुर्गुणैः स्मरति । शेष इति किम्? मातरं स्मरति ॥

## ५१४. कृञः प्रतियत्ने ॥ ५३ ॥ (६१४)

सतो गुणान्तराधानम् प्रतियत्नः । करोतेः कर्मणि कारके शेषत्वेन विवक्षिते प्रतियत्ने गम्यमाने षष्ठी विभक्तिर्भवति । एधोदकस्योपस्कुरुते । शस्त्रपत्रस्योपस्कुरुते।

प्रतियत्न इति किम्? कटं करोति । कर्मणीति किम्? एधोदकस्योपस्कुरुते प्रज्ञया । शेष इत्येव एधोदकमुपस्कुरुते ॥

## ५१५. रुजार्थानां भाववचनानामज्वरेः ॥ ५४ ॥ (६१५)

रुजार्थानां धातूनां भाववचनानां भावकर्तृकाणां ज्वरिवर्जितानां कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति । चौरस्य रुजति रोगः । चौरस्यामयत्यामयः।

रुजार्थानामिति किम्?

एति जीवन्तमानन्दो नरं वर्षशतादपि ।

जीव पुत्रक मामैवं तपः साहसमाचर ॥

भाववचनानामिति किम्? नदी कूलानि रुजति (म0 भा0) । अज्वरेरिति किम्? चौरं ज्वरयति ज्वरः ।

अज्वरिसंताप्योरिति वक्तव्यम् (म० भा० २.३.५४ वा० १) । चौरं संतापयति तापः । शेष इत्येव – चौरं रुजति रोगः ॥

### ५१६. आशिषि नाथः ॥ ५५ ॥ (६१६)

'नाधृ नाथृ याच्ञोपतापैश्वर्याशीःषु' (धा० पा० ६,७) पठ्यते, तस्याशीः–क्रियस्य कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति । सर्पिषो नाथते । मधुनो नाथते ।

आशिषीति किम्? माणवकमुपनाथति, अङ्ग पुत्रकाधीष्व ॥

### ५१७. जासिनिप्रहणनाटक्राथपिषां हिंसायाम् ॥ ५६ ॥ (६१७)

जासि, निप्रहण, नाट, क्राथ, पिष् – इत्येतेषां धातूनां हिंसाक्रियाणां कर्मणि कारके षष्ठी विभक्तिर्भवति । 'जसु हिंसायाम्' (धा.पा. १७१९) इति च चुरादौ पठ्यते तस्येदं ग्रहणम्, न दैवादिकस्य–'जसु मोक्षणे (धा0 पा0 १६६९) 'जसु ताडने' (धा0 पा0 १२१२) इत्यस्य । चौरस्योज्जासयति । वृषलस्योज्जासयति ।

'निप्रहण' इति संघातविगृहीतविपर्यस्तस्य ग्रहणम् । चौरस्य निप्रहन्ति । चौरस्य निहन्ति । चौरस्य प्रहन्ति । चौरस्य प्रणिहन्ति । चौरस्योन्नाटयति । वृषलस्योन्नाटयति । चौरस्योत्क्राथयति । वृषलस्य क्राथयति ।

निपातनाद् वृद्धिः। अयं हि घटादौ पठ्यते – 'श्रथ क्नथ क्रथ क्लथ हिंसार्थाः' (धा0 पा0 ७९९–८०२) इति, तत्र 'घटादयो मितः' (धा0 पा0 ७६३–८२२) इति मित्संज्ञायाम् 'मितां ह्रस्वः' (६.४.९२) इति ह्रस्वत्वं स्यात्। चौरस्य पिनष्टि । वृषलस्य पिनष्टि।

हिंसायामिति किम्? धानाः पिनष्टि । शेष इत्येव – चौरमुज्जासयति । एषामिति किम्? चौरं हिनस्ति । निप्रहण इति किम्? चौरं विहन्ति ॥

### ४१८. व्यवहृपणोः समर्थयोः ॥ ५७ ॥ (६१८)

व्यवहृ, पण इत्येतयोः समर्थयोः समानार्थयोः कर्मणि कारके षष्ठीविभक्तिर्भवति।

द्यूते क्रयविक्रयव्यवहारे च समानार्थत्वमनयोः । शतस्य व्यवहरति। सहस्रस्य व्यवहरति । शतस्य पणते । सहस्रस्य पणते । आयप्रत्ययः कस्मान्न भवति ? स्तुत्यर्थस्य पणतेरायप्रत्यय इष्यते ।

समर्थयोरिति किम्? शलाकां व्यवहरति । गणयतीत्यर्थः । ब्राह्मणान् पणायते। स्तौतीत्यर्थः । शेष इत्येव–शतं पणते ।

## ५१९. दिवस्तदर्थस्य ॥ ५८ ॥ (६१९)

व्यवहृपणिसमानार्थस्य दीव्यतेः कर्मणि षष्ठी विभक्तिर्भवति । शतस्य दीव्यति। सहस्रस्य दीव्यति । तदर्थस्येति किम्? ब्राह्मणं दीव्यति । योगविभाग उत्तरार्थः ।

## ४२०. विभाषोपसर्गे ॥ ५९ ॥ (६२०)

'दिवस्तदर्थस्य' (२.३.५८) इति नित्यं षष्ठ्यां प्राप्तायां सोपसर्गस्य विकल्प उच्यते । उपसर्गे सति दिवस्तदर्थस्य कर्मणि कारके विभाषा षष्ठी विभक्तिर्भवति। शतस्य प्रतिदीव्यति । सहस्रस्य प्रतिदीव्यति । शतं प्रतिदीव्यति । सहस्रं प्रतिदीव्यति।

उपसर्गस्येति किम्? शतस्य दीव्यति । तदर्थस्येत्येव – शलाकां प्रतिदीव्यति।

## ५२१. द्वितीया ब्राह्मणे ॥ ६० ॥ (३३९५)

ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि कारके द्वितीया विभक्तिर्भवति । गामस्य तदहः सभायां दीव्येयुः (मै० सं० १.६.११.५६) ।

अनुपसर्गस्य षष्ठ्यां प्राप्तायामिदं वचनम् । सोपसर्गस्य तु छन्दसि व्यवस्थितविभाषयापि सिद्ध्यति ।

## ५२२. प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने ॥ ६१ ॥ (६२१)

'प्रेष्य' इति इष्यतेर्दैवादिकस्य लोण्मध्यमपुरुषस्यैकवचनम्, तत्साहचर्याद् ब्रुविरपि तद्विषय एव गृह्यते । प्रेष्यब्रुवोर्हविषः कर्मणः षष्ठी विभक्तिर्भवति देवतासंप्रदाने सति । 'अग्नेये छागस्य हविषो वपाया मेदसः प्रे३ष्य' (का0 श्रौ0 सू0 ६.६.२६) 'अग्नये छागस्य हविषो वपाया मेदसोऽनुब्रूहि' (का० श्रौ० सू० ६.६.२०)।

प्रेष्यब्रुवोरिति किम्? 'अग्नये छागं हविर्वपां मेदो जुहुधि' (का0 श्रौ0 सू0 ६.६.३) । हविष इति किम्? 'अग्नये गोमयानि प्रेष्य' (श0 ब्रा0 १२.५.२ ३)

देवतासंप्रदान इति किम्? माणवकाय पुरोडाशं प्रेष्य ।

हविषः प्रस्थितस्य प्रतिषेधो वक्तव्यः (म0 भा0 २.३.६१ वा० १) 'इन्द्राग्निभ्यां छागं हविर्वपां मेदः प्रस्थितं प्रेष्य' (का0 श्रौ0 सू0 ६.६.२३) !।

## ५२३. चतुर्थ्यर्थे बहुलं छन्दसि ॥ ६२ ॥ (३३९६)

छन्दसि विषये चतुर्थ्यर्थे षष्ठी विभक्तिर्भवति बहुलम् । पुरुषमृगश्चन्द्रमसः (वा0 सं0 २४.३५) । पुरुषमृगश्चन्द्रमसे । 'गोधा कालका दार्वाघाटस्ते वनस्पती – नाम् । ते वनस्पतिभ्यः (वा0 सं0 २४.३५) ।

बहुलग्रहणं किम्? 'कृष्णो रात्र्यै' (का0 सं0 ६८.४०) । 'हिमवते हस्ती (वा0 सं0 २४.३०) ।

षष्ठ्यर्थे चतुर्थी वक्तव्या (म० भा० २.३.६२ वा० १) । या खर्वेण पिबति तस्यै खर्वो जायते । या दतो धावति तस्यै श्यावदन् । धा नखानि निकृन्तते तस्यै कुनखी । याऽऽङ्क्ते तस्यै काणः । याऽभ्यङ्क्ते तस्यै दुश्चर्मा । या केशान् प्रलिखति तस्य खलतिः (तै0 सं0 २५.१.६) । 'अहल्यायै जारः' (श0 ब्रा0 ३.३.१.१९) ॥

## ५२४. यजेश्च करणे ॥ ६३ ॥ (६६९७)

यजेर्धातोः करणे कारके छन्दसि बहुलं षष्ठी विभक्तिर्भवति । 'घृतस्य यजते' (श0 ब्रा0 ४.४.२.४) । घृतेन यजते । 'सोमस्य यजते ' (श0 ब्रा0 ४.४.२.५) । सोमेन यजते ॥

## ५२५. कृत्वोऽर्थप्रयोगे कालेऽधिकरणे ॥ ६४ ॥ (६२२)

'छन्दसि बहुलम्' इति निवृत्तम्। कृत्वोऽर्थानां प्रत्ययानां प्रयोगे कालेऽधिकरणे षष्ठी विभक्तिर्भवति । पञ्चकृत्वोऽह्नो भुङ्क्ते । द्विरह्नोऽधीते ।

कृत्वोऽर्थग्रहणं किम्? अह्नि शेते । रात्रौ शेते । प्रयोगग्रहणं किम्? अहनि भुक्तम् । गम्यते हि द्विस्त्रिश्चतुर्वेति, न त्वप्रयुज्यमाने भवति । कालग्रहणं किम्? द्विः कांस्यापात्र्यां भुङ्क्ते । अधिकरण इति किम् ? द्विरह्नो भुङ्क्ते । शेष इत्येव – द्विरहन्यधीते ॥

## ५२६. कर्तृकर्मणोः कृति ॥ ६५ ॥ (६२३)

कृत्प्रयोगे कर्तरि कर्मणि च षष्ठी विभक्तिर्भवति । भवतः शायिका । भवत आसिका । कर्मणि – अपां स्रष्टा । 'पुरां भेत्ता' (ऋ० ८.१७.१४) । 'वज्रस्य भर्त्ता' (तै0 सं0 १.४.२८.१) ।

कर्तृकर्मणोरिति किम्? शस्त्रेण भेत्ता । कृतीति किम्? तद्धितप्रयोगे मा भूत् –कृतपूर्वी कटम् । भुक्तपूर्व्योदनम् (म0 भा0) ।

शेष इति निवृत्तम्, पुनः कर्मग्रहणात्; इतरथा हि कर्तरि च कृति इत्येव ब्रूयात् ॥

## ५२७. उभयप्राप्तौ कर्मणि ॥ ६६ ॥ (६२४)

पूर्वेण षष्ठी प्राप्ता नियम्यते । 'उभयप्राप्तौ' इति बहुव्रीहिः– उभयोः प्राप्तिर्यस्मिन्कृति सोऽयमुभयप्राप्तिः । तत्र कर्मण्येव षष्ठी विभक्तिर्भवति, न कर्तरि । आश्चर्यो गवां दोहोऽगोपालकेन । रोचते मे ओदनस्य भोजनं देवदत्तेन। साधु खलु पयसः पानं यज्ञदत्तेन । बहुव्रीहिविज्ञानादिह नियमो न भवति – आश्चर्यमिदमोदनस्य नाम पाको ब्राह्मणानां च प्रादुर्भाव इति ॥

अकाकारयोः स्त्रीप्रत्यययोः प्रयोगे नेति वक्तव्यम् (म० भा० २.३.६६ वा० २) । भेदिका देवदत्तस्य काष्ठानाम् । चिकीर्षा देवदत्तस्य कटस्य ॥

शेषे विभाषा (म0 भा0, वा0 ३) । अकाकारयोः स्त्रीप्रत्यययोर्ग्रहणात् तदपेक्षया शेषः स्त्रीप्रत्यय एव गृह्यते । विचित्रा हि सूत्रस्य कृतिः पाणिनेः, पाणिनिना वा (म0 भ0) ॥

केचिदविशेषेणैव विभाषामिच्छन्ति–शब्दानामनुशासनमाचार्येण, आचार्यस्येति वा ॥

## ५२८. क्तस्य च वर्तमाने ॥ ६७ ॥ (६२५)

'न लोकाव्ययनिष्ठा । खलर्थतृनाम्' (२.३.६९) इति प्रतिषेधे प्राप्ते पुनः षष्ठी विधीयते । क्तस्य वर्तमानकालविहितस्य प्रयोगे षष्ठी विभक्तिर्भवति । राज्ञां मतः । राज्ञां बुद्धः । राज्ञां पूजितः ।

क्तस्येति किम्? ओदनं पचमानः । वर्तमान इति किम्? ग्रामं गतः ।

नपुंसके भाव उपसंख्यानम् (म० भा० २.३.६७ वा० १) । छात्त्रस्य हसितम् । मयुरस्य नृत्तम् । कोकिलस्य व्याहृतम् (म0 भा0) ।

सोऽस्यास्तीति वेशोभग्यः ॥

**१८७३. ख च ॥ १३२ ॥ (३४७८)**

वेशोयशआदेर्भगान्तात् प्रातिपदिकान्मत्वर्थे खः प्रत्ययो भवति । योगविभागो यथासंख्यनिरासार्थ उत्तरार्थश्च । चकाराद्यत् । वेशोभग्यः, वेशोभगीनः । यशोभगीनः॥

**१८७४. पूर्वैः कृतमिनयौ च ॥ १३३ ॥ (३४७९)**

'मत्वर्थे' इति निवृत्तम् । निर्देशादेव समर्थविभक्तिः । पूर्वशब्दात् तृतीयासमर्थात्कृतमित्येतस्मिन्नर्थे 'इन' ,'य' –इत्येतौ प्रत्ययौ भवतः । चकारात्ख च । 'गम्भीरेभिः पथिभिः पूर्विणेभिः' (काठ. सं. ९.६.१९) । पूर्व्यैः (तै. सं. १.८.५.२) । पूर्वीणैः । 'पूर्वैः' इति बहुवचनान्तेन पूर्वपुरुषा उच्यन्ते । तत्कृताः पन्थानः प्रशस्ता इति पथां प्रशंसा ॥

**१८७५. अद्भिः संस्कृतम् ॥ १३४ ॥ (३४८०)**

निर्देशादेव समर्थविभक्तिः । अप्शब्दात्तृतीयासमर्थात् 'संस्कृतम्' इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । 'य॒स्येदमप्यं॑' ह॒विः (ऋ. १०.८६.१२) । अद्भिः संस्कृतमिति॥

**१८७६. सहस्रेण संमितौ घः ॥ १३५ ॥ (३४८१)**

निर्देशादेव समर्थविभक्तिः । सहस्रशब्दात्तृतीयासमर्थात् 'सम्मितौ' इत्येतस्मिन्नर्थे घः प्रत्ययो भवति । सम्मितस्तुल्यः सदृशः । 'अ॒य॒मग्निः स॑हस्रियः॑ (तै. सं. ४.७.१३.४) । सहस्रतुल्य इत्यर्थः ।

केचित्तु 'समितौ' इति पठन्ति । तत्रापि समित्या सम्मिन एव लक्षयितव्यः। तत्र छन्दसि प्रयोगदर्शनात् ।

**१८७७. मतौ च ॥ १३६ ॥ (३४८२)**

मत्वर्थे च सहस्रशब्दाद् घः प्रत्ययो भवति । सहस्रमस्य विद्यते सहस्रियः। 'तपःसहस्राभ्यां विनीनी' (५.२.१०२), 'अण् च' (५.२.१०३) इत्यस्यापवादः ॥

**१८७८. सोममर्हति यः ॥ १३७ ॥ (३४७३)**

निर्देशादेव समर्थविभक्तिः । सोमशब्दाद् द्वितीयासमर्थाद् 'अर्हति'

इत्येतस्मिन्नर्थे यः प्रत्ययो भवति । 'सोममर्हन्ति सोम्या ब्राह्मणाः (तै.सं. २.१.२.९)। यज्ञार्हा इत्यर्थः । यति प्रकृते यग्रहणं स्वरे विशेषः ॥

## १८७९. मये च ॥ १३८ ॥ (३४८४)

सोमग्रहणम्, यश्चानुवर्त्तते । 'मये' इति मयडर्थो लक्ष्यते । सोमशब्दान्मयडर्थे यः प्रत्ययो भवति ।

आगतविकारावयवप्रकृता मयडर्थाः – 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः' (४.३.८१), 'मयट् च' (४.३.८२), 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः' (४.३.१४३), 'तत्प्रकृतवचने मयट्' (५.४.२१) इति । तत्र यथायोगं समर्थविभक्तिः। 'पिबाति सोम्यं मधु' (ऋ. ८.२४.१३) सोममयमित्यर्थः ॥

## १८८०. मधोः ॥ १३९ ॥ (३४८५)

यशब्दो निवृत्तः । मधुशब्दान्मयडर्थे यत्प्रत्ययो भवति । मधव्यान स्तोकान (पै. १.८८.२) । मधुमयानित्यर्थः ।

## १८८१. वसोः समूहे च ॥ १४० ॥ (३४८६)

वसुशब्दात्समूहे वाच्ये यत्प्रत्ययो भवति चकारान्मयडर्थे च । यथायोगं समर्थविभक्तिः । वसव्यः समूहः । मयडर्थो वा ।

अक्षरसमूहे छन्दसः स्वार्थे उपसंख्यानम् (म. भा. ४.४.१४० वा. १) । ओश्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरम् यजेति द्व्यक्षरम्, ये यजामह 'इति पञ्चाक्षरम्, द्व्यक्षरो' वषट्कारः–एष वै सप्तदशाक्षरश्छन्दस्यः प्रजापतिर्यज्ञो मन्त्रे विहितः (म. सं. १.४.११) । सप्तदशाक्षराण्येव छन्दस्य इत्यर्थः । छन्दःशब्दादक्षरसमूहे वर्त्तमानात्स्वार्थे यत्प्रत्ययः ।

वसुशब्दादपि यद्वक्तव्यः (म. भा. ४.४.१४० वा. २) । 'हस्तौ पृणस्व बहुभिर्वसव्यैः (तै. सं. १.२.१३.२) । वसुभिरित्यर्थः । 'अग्निरीशे वसव्यस्य' (ऋ. ४.५५.८) । वसोरित्यर्थः ॥

## १८८२. नक्षत्राद् घः ॥ १४१ ॥ (३४८७)

नक्षत्रशब्दाद्धः प्रत्ययो भवति स्वार्थे । 'समूहे' इति नानुवर्त्तते । 'नक्षत्रियेभ्यः

स्वाहा' (वा. सं. १२.२८) ॥

**१८८३. सर्वदेवात्तातिल् ॥ १४२ ॥ (३४८८)**

सर्वदेवशब्दाभ्यां तातिल् प्रत्ययो भवति, छन्दसि विषये स्वार्थिकः । 'सर्वतातिम्' (ऋ. १०.३६.१४) । 'देवतातिम्' (ऋ. ३.१९.२) ॥

**१८८४. शिवशमरिष्टस्य करे ॥ १४३ ॥ (३४८९ )**

करोतीति करः, प्रत्ययार्थः । तत्सामर्थ्यलभ्या षष्ठी समर्थविभक्तिः । शिवादिभ्यः शब्देभ्यः षष्ठीसमर्थेभ्यः 'करे' इत्येतस्मिन्नर्थे तातिल्प्रत्ययो भवति । शिवं करोतीति शिवतातिः । (पै. ५.३६.१) शन्तातिः (ऋ. ८.२८.७) । अरिष्टतातिः (ऋ. १०.६०.८)॥

**१८८५. भावे च ॥ १४४ ॥ (३४९०)**

भावे चार्थे छन्दसि विषये शिवादिभ्यस्तातिल्प्रत्ययो भवति । शिवस्य भावः शिवतातिः (पै. सं. ५.३६.१) । शन्तातिः (ऋ. ८.१८.७) । अरिष्टतातिः (ऋ. १०.६०.८) ।यतः पूर्णोऽवधिः, अतः परमन्यः प्रत्ययोऽधिक्रियते ॥

**॥ इति श्रीजयादित्यविरचितायां काशिकावृत्तौ चतुर्थाध्यायस्य चतुर्थः पादः ॥**

**॥ समाप्तश्चायं चतुर्थाध्यायः ॥**

॥ श्री गणेशाय नमः ॥

## पाणिनीयाष्टाध्यायीसूत्रवृत्तिः

# काशिका

## न्यास–पदमञ्जरी–भावबोधिनीसहिता

# अथ पञ्चमाध्याये प्रथमः पादः

### १८८६. प्राक् क्रीताच्छः ॥ १ ॥ (१६६१)

'तेन क्रीतम्' (४.१.३७) इति वक्ष्यति, प्रागेतस्मात्क्रीतसंशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामश्छप्रत्ययस्तेष्वधिकृतो वेदितव्यः । वक्ष्यति– ''तस्मै हितम्'' (५.१.५) इति । वत्सेभ्यो हितो वत्सीयो गोधुक् । करभीय उष्ट्रः । अकरभीयः। अवत्सीयः''।

अर्थोऽवधित्वेन गृहीतः, न प्रत्ययः । तेन 'प्राक् ठञश्छः' इति नोक्तम् ॥

### १८८७. उगवादिभ्यो यत् ॥ २ ॥ (१६६२)

'प्राक् क्रीतात्' इत्येव । उवर्णान्तात्प्रातिपदिकाद् गवादिभ्यश्च यत्प्रत्ययो भवति, प्राक्क्रीतीयेष्वर्थेषु । छस्यापवादः । शङ्कव्यं दारु । पिचव्यः कार्पासः । कमण्डलव्या मृत्तिका । गवादिभ्यः खल्वपि – गव्यम् । हविष्यम् । सनङ्गुर्नाम चर्मविकारः, ततः परत्वात् 'चर्मणोऽञ्' (५.१.१५) इत्येष विधिः प्राप्नोति; तथा चरुर्नाम हविः; सक्तुः=अन्नविकारः, अपूपादिषु 'अन्नविकारेभ्यश्च' (ग. सू. १०९) इति पठ्यते, ततः 'विभाषा हविरपूपादिभ्यश्च' (५.१.४) इत्येष विधिः प्राप्नोति; तत्र सर्वत्र पूर्वविप्रतिषेधेन यत्प्रत्यय एवेष्यते–सनङ्गव्यं चर्म, चरव्यास्तण्डुलाः, सक्तव्या धाना इति ।

गवादिषु 'नाभि नभं च' (ग. सू. १०६) इति पठ्यते, तस्यायमर्थः–'नाभिशब्दो यत्प्रत्ययमुत्पादयति नभं चादेशमापद्यते' इति । नाभये हितो नभ्योऽक्षः । नभ्यमञ्जनम्।

यस्तु शरीरावयवो नाभिशब्दः, ततः 'शरीरावयवाद्यत्' (५.१.६) इति यति

कृते नाभये हितं नाभ्यं तैलमिति भवितव्यम् । गवादिषु यता सन्नियुक्तो नभभावोऽत्र न भवति ।

गो । हविष् । बर्हिष् । खट । अष्टका । युग । मेधा । स्रक् । नाभि नभं च (ग. सू. १०६) । शुनः सम्प्रसारणं वा दीर्घत्वं च तत्सन्नियोगेन चान्तोदात्तत्वम् । शून्यम् । चकारस्यानुक्तसमुच्चयार्थत्वात् 'नस्तद्धिते' (६.४.१४४) इति लोपो न स्यात् । ऊधसोऽनङ् च (ग. सू. १०८) ऊधन्यः । कूप । उदर । खर । स्खद । अक्षर । विष । गवादिः ॥

## १८८८. कम्बलाच्च संज्ञायाम् ॥ ३ ॥ (१६६३)

कम्बलात् प्राक्क्रीतीयेष्वर्थेषु यत्प्रत्ययो भवति संज्ञायां विषये । छस्यापवादः। कम्बल्यमूर्णापलशतम् । संज्ञायामिति किम्? कम्बलीया ऊर्णाः ।

## १८८९. विभाषा हविरपूपादिभ्यः ॥ ४ ॥ (१६६४)

हविर्विशेषवाचिभ्योऽपूपादिभ्यश्च प्रातिपदिकेभ्यः प्राक्क्रीतीयेष्वर्थेषु विभाषा यत् प्रत्ययो भवति । आमिक्ष्यं दधि, आमिक्षीयं दधि । पुरोडाश्यास्तण्डुला, पुरोडाशीयाः । हविश्शब्दात्तु गवादिपाठान्नित्यमेव भवति । अपूपादिभ्यः – अपूप्यम्, अपूपीयम् । तण्डुल्यम्, तण्डुलीयम् ।

अपूप । तण्डुल । अभ्यूष । अभ्योष । पृथुक । अभ्येष । अर्गल । मुसल। सूप । कटक । कर्णवेष्टक । किण्व । अन्नविकारेभ्यश्च (ग. सू. १०९) पूप । स्थूणा। पीप । अश्व । पत्त्र । अपूपादिः ॥

## १८९०. तस्मै हितम् ॥ ५ ॥ (१६६५)

'तस्मै' इति चतुर्थीसमर्थाद् 'हितम्' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । वत्सेभ्यो हितो गोधुक् वत्सीयः । अवत्सीयः । पटव्यम् [पटीयम्] । गव्यम् । हविष्यम् । अपूप्यम् । अपूपीयम् ।

## १८९१. शरीरावयवाद्यत् ॥ ६ ॥ (१६६६)

शरीरम्=प्राणिकायः । शरीरावयववाचिनः प्रातिपदिकाद्यत् प्रत्ययो भवति 'तस्मै हितम्' इत्येतस्मिन्विषये । छस्यापवादः । दन्त्यम् । कण्ठ्यम् । ओष्ठ्यम् ।

नाभ्यम् । नस्यम् ॥

## १८९२. खलयवमाषतिलवृषब्रह्मणश्च ॥ ७ ॥ (१६६८)

खलादिभ्यो यत्प्रत्ययो भवति 'तस्मै हितम्' इत्येतस्मिन्विषये । छस्यापवादः। खलाय हितं खल्यम् । यव्यम् । माष्यम् । तिल्यम् । वृष्यम् । ब्रह्मण्यम् ।

वृष्णे हितम्, ब्राह्मणेभ्यो हितमिति वाक्यमेव भवति । छप्रत्ययोऽपि न भवति, अनभिधानात् ।

चकारोऽनुक्तसमुच्चयार्थः–रथाय हिता रथ्या ॥

## १८९३. अजाविभ्यां थ्यन् ॥ ८ ॥ (१६६९)

अज, अवि–इत्येताभ्यां थ्यन् प्रत्ययो भवति 'तस्मै हितम्' इत्येतस्मिन्विषये। छस्यापवादः । अजथ्या यूथिः । अविथ्या ॥

## १८९४. आत्मन्विश्वजनभोगोत्तरपदात् खः ॥ ९ ॥ (१६७०)

आत्मन्, विश्वजन–इत्येताभ्यां भोगोत्तरपदाच्च प्रातिपदिकात्खः प्रत्ययो भवति 'तस्मै हितम्' इत्येतस्मिन्विषये । छस्यापवादः । आत्मन् इति नलोपो न कृतः प्रकृतिपरिमाणज्ञापनार्थम् । तेनोत्तरपदग्रहणं भोगशब्देनैव सम्बध्यते, न तु प्रत्येकम्। आत्मने हितम् 'आत्मनीनम्' (पै. सं. ५.१४.८) । 'आत्माध्वानौ खे' (६.४.१६९) इति प्रकृतिभावः । विश्वजनेभ्यो हितं विश्वजनीनम् । कर्मधारयादेवेष्यते । षष्ठीसमासाद् बहुव्रीहेश्च छ एव भवति । विश्वजनाय हितं विश्वजनीयम् ।

पञ्चजनादुपसंख्यानम् (म. भा. ५.१.९ वा. ४) । पञ्चजनाच्च खः । अत्रापि कर्मधारयादिष्यते । पञ्चजनीनम् । अन्यत्र – पञ्चजनीयम् ।

सर्वजनाट्ठञ् खश्च (वा. ५) । सार्वजनिकम् , सर्वजनीनम्, अत्रापि कर्मधारयादेव। सर्वजनीयम् अन्यत् ।

महाजनान्नित्यं ठञ्वक्तव्यः (वा. ६) । महाजनाय हितं माहाजनिकम् । तत्पुरुषादेव । बहुव्रीहेस्तु छ एव भवति – महाजनीयम् ।

भोगोत्तरपदात्खल्वपि – मातृभोगीणः । पितृभोगीणः । भोगशब्दः शरीरवाची। केवलेभ्यो मात्रादिभ्यश्छ एव भवति । मात्रीयम् । पित्रीयम् ।

राजाचार्याभ्यां तु नित्यम् (वा. ४) । भोगोत्तरपदाभ्यामेव प्रत्यय इष्यते, न

केवलाभ्याम् । राजभोगीनः । आचार्यादणत्वं च (मभा. ५.१.९) । आचार्यभोगीनः। केवलाभ्यां वाक्यमेव भवति– राज्ञे हितम्, आचार्याय हितमिति ॥

## १८९५. सर्वपुरुषाभ्यां णढञौ ॥ १० ॥ (१६७२)

सर्वपुरुषाभ्यां यथासंख्यं णढञौ प्रत्ययौ भवतः, 'तस्मै हितम्' (५.१.५) इत्येतस्मिन्विषये । छस्यापवादः । सर्वस्मै हितं सार्वम् । पौरुषेयम् ।

सर्वाण्णस्य वा वचनम् (म. भा. ५.१.१० वा. १) । सर्वीयम् ।

पुरुषाद्वधविकारसमूहतेनकृतेष्विति वक्तव्यम् (वा. २) पौरुषेयो वधः, विकारः, समूहो वा, तेनकृतः–पौरुषेयो ग्रन्थः ॥

## १८७६. माणवचरकाभ्यां खञ् ॥ ११ ॥ (१६७३)

माणवचरकशब्दाभ्यां खञ् प्रत्ययो भवति, 'तस्मै हितम्' (५.१.५) इत्येतस्मिन्विषये । छस्यापवादः । माणवाय हितं माणवीनम् । चारकीणम् ॥

## १८९७. तदर्थं विकृतेः प्रकृतौ ॥ १२ ॥ (१६७४)

प्रकृतिः=उपादानकारणम्, तस्यैव उत्तरमवस्थान्तरम्=विकृतिः । विकृतिवाचिनः प्रातिपदिकात्प्रकृतावभिधेयायां यथाविहितं प्रत्ययो भवति । 'तदर्थम्' इति प्रत्ययार्थविशेषणम् । तदिति सर्वनाम्ना विकृतिः परामृश्यते, विकृत्यर्थायां प्रकृतौ प्रत्ययः । तदर्थग्रहणेन प्रकृतेरनन्यार्थताऽऽख्यायते, न प्रकृतिविकारसंभवमात्रे प्रत्ययः, किं तर्हि? प्रकृतेरनन्यार्थत्वे विवक्षिते । प्रत्ययार्थस्य च तदर्थत्वे सति सामर्थ्याल्लभ्या चतुर्थी समर्थविभक्तिः । केचित्तु 'तस्मै हितम्' इत्यनुवर्त्तयन्ति । अङ्गारेभ्यो हितानि एतानि काष्ठानि अङ्गारीयाणि काष्ठानि । प्राकारीया इष्टकाः । शङ्कव्यं दारु । पिचव्यः कार्पासः ।

तदर्थमिति किम्? यवानां धानाः । धानानां सक्तवः । प्रकृत्यन्तरनिवृत्तिरत्र विवक्षिता, न तादर्थ्यम् । धानानां सक्तवो न लाजानामिति ।

विकृतेरिति किम्? उदकार्थः कूपः । विकृतिग्रहणेऽक्रियमाणे या काचित्प्रकृतिर्गृह्यते, नोपादानकारणमेव । भवति च कूप उदकस्य प्रकृतिः; तत्रोत्पादनात्। न तु उदकं तस्य विकृतिः; अत्यन्तभेदात् ।

प्रकृताविति किम्? अस्यर्था कोशी । असिरयसो विकृतिर्भवति, न तु

कोशी तस्य प्रकृतिर्भवति। द्वयोरपि प्रकृतिविकृत्योर्ग्रहणे विवक्षितः प्रकृतिविकारभावो लभ्यते ॥

### १८९८. छदिरुपधिबलेर्ढञ् ॥ १३ ॥ (१६७५)

छदिरादिभ्यः शब्देभ्यो ढञ् प्रत्ययो भवति 'तदर्थं विकृतेः प्रकृतौ' (५.१.१२) इत्येतस्मिन्विषये । छस्यापवादः । छादिषेयाणि तृणानि । औपधेयं दारु । बालेयास्तण्डुलाः ।

उपधिशब्दात्स्वार्थे प्रत्ययः । उपधीयत–इत्युपधिः=रथाङ्गम् । औपधेयमपि तदेव दारु ॥

### १८९९. ऋषभोपानहोर्ञ्यः ॥ १४ ॥ (१६७६)

ऋषभ, उपानह् – इत्येताभ्यां ञ्यः प्रत्ययो भवति 'तदर्थं विकृतेः प्रकृतौ' (५.१.१२) इत्येतस्मिन्विषये। छस्यापवादः। आर्षभ्यो वत्सः। औपानह्यो मुञ्जः।

चर्मण्यपि प्रकृतित्वेन विवक्षिते पूर्वप्रतिषेधादयमेवेष्यते – औपानह्यं चर्म॥

### १९००. चर्मणोऽञ् ॥ १५ ॥ (१६७७)

'चर्मणः' इति षष्ठी। चर्मणो या विकृतिः तद्वाचिनः प्रातिपदिकादञ् प्रत्ययो भवति 'तदर्थं विकृतेः प्रकृतौ' (५.१.१२) इत्येतस्मिन्विषये। छस्यापवादः.। वार्ध्रं चर्म। वारत्रं चर्म ॥

### १९०१. तदस्य तदस्मिन्स्यादिति ॥ १६ ॥ (१६७८)

'तत्' इति प्रथमा समर्थविभक्तिः, 'अस्य' इति प्रत्ययार्थः, 'स्यात्' इति प्रकृतिविशेषणम्। इतिकरणो विवक्षार्थः। एवं द्वितीयेऽपि वाक्ये। सप्तम्यर्थे तु प्रत्यय इत्येतावान्विशेषः। प्रथमासमर्थात् षष्ठ्यर्थे सप्तम्यर्थे च यथाविहितं प्रत्ययो भवति, यत्तत्प्रथमासमर्थं स्याच्चेत्तद्भवति । इतिकरणस्ततश्चेद्विवक्षा । प्राकार आसामिष्टकानां स्यात् प्राकारीया इष्टकाः। प्रासादीयं दारु। सप्तम्यर्थे खल्वपि– प्राकारोऽस्मिन्देशे स्यात् प्राकारीयो देशः । प्रासादीया भूमिः ।

स्यादिति संभावनायां लिङ् 'संभावनेऽलम्' इति चेत् (३.३.१५४) इत्यादिना, इष्टकानां बहुत्वेन तत्संभाव्यते । प्राकार आसामिष्टकानां स्यादिति । देशस्य च

गुणेन संभाव्यते–प्रासादोऽस्मिन्देशे स्यादिति ।

प्रकृतिविकारभावस्तादर्थ्यं चेह न विवक्षितम्, किं तर्हि? योग्यतामात्रम्; तेन पूर्वस्यायमविषयः । द्विस्तद्ग्रहणं न्यायप्रदर्शनार्थम्–अनेकस्मिन्प्रत्ययार्थे प्रत्येकं समर्थविभक्तिः सम्बन्धनीयेति ।

अथेह कस्मान्न भवति–प्रासादो देवदत्तस्य स्यादिति, गुणवानयं सम्भाव्यते, प्रासादलाभोऽस्येति? 'इतिकरणो विवक्षार्थ' इत्युक्तम् ॥

## १९०२. परिखाया ढञ् ॥ १७ ॥ (१६७९)

परिखाशब्दाद् ढञ् प्रत्ययो भवति 'तदस्य तदस्मिन्स्यादिति' (५.१.१६) एतस्मिन्नर्थे । छस्यापवादः । पारिखेयी भूमिः ।

छयतोः पूर्णोऽवधिः । इतः परमन्यः प्रत्ययो विधीयते ॥

## १९०३. प्राग्वतेष्ठञ् ॥ १८ ॥ (१६८०)

'तेन तुल्यं क्रिया चेद्वतिः' (५.१.११५) इति वक्ष्यति । प्रागेतस्माद्वतिसंशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामः ठञ् प्रत्ययस्तेष्वधिकृतो वेदितव्य। वक्ष्यति–'पारायणतुरायणचान्द्रायणं वर्त्तयति' (५.१.७२)। पारायणिकः। तौरायणिकः। चान्द्रायणिकः ॥

## १९०४. आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् ॥ १९ ॥ (१६८१)

'तदर्हति' (५.१.६३) इति वक्षयति । आ एतस्मादर्हसंशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामः ठक् प्रत्ययस्तेष्वधिकृतो वेदितव्य, गोपुच्छादीन्वर्जयित्वा । अभिविधौ वायमाकारः, तेनार्हत्यर्थेऽपि ठग्भवत्येव । ठञधिकारमध्ये तदपवादः ठग्विधीयते । वक्ष्यति–'तेन क्रीतम्' (५.१.३७) । नैष्किकम् । पाणिकम् ।

अगोपुच्छसंख्यापरिमाणादिति किम्? गोपुच्छेन क्रीतं गौपुच्छिकम् ।

संख्या–षाष्टिकम् । परिमाण–प्रास्थिकम् । कौडविकम् । ठञ् प्रत्युदाह्रियते।

संख्यापरिमाणयोः को विशेषः? भेदगणनम्=संख्या, एकत्वादिः । गुरुत्वमानम्=उन्मानं पलादिः । आयाममानम्=प्रमाणं वितस्त्यादिः । आरोहपरिणाहमानम्=परिमाणं प्रस्थादि ॥

ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः ।

आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः ॥ (म.भा. ५.१.१९)

## १९०५. असमासे निष्कादिभ्यः ॥ २० ॥ (१६८२)

'आर्हात्' (५.१.१९) इत्येव । निष्कादिभ्यः शब्देभ्योऽसमासे ठक्प्रत्ययो भवति आर्हीयेष्वर्थेषु । ठञोऽपवादः । नैष्किकम् । पाणिकम् । पादिकम् । माषिकम् ।

असमास इति किम्? परमनैष्किकम् । उत्तमनैष्किकम् । ठञेव भवति, 'परिमाणान्तस्य' (७.३.१७) इत्युत्तरपदवृद्धिः ।

अथ किमर्थमसमास इत्युच्यते, यावता ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते (व्या. परि. ८९)? निष्कादिष्वसमासग्रहणं ज्ञापकम्–पूर्वत्र तदन्ताप्रतिषेधस्य । 'उगवादिभ्यो यत्' (५.१.२) – गव्यम्, सुगव्यम्, अतिसुगव्यम्। 'विभाषा हविरपूपादिभ्यः' (५.१.४) – अपूप्यम् । अपूपीयम् । यवापूप्यम्, यवापूपीयम्। 'शरीरावयवाद्यत्' (५.१.६)–दन्त्यम्, राजदन्त्यम् इत्येवमादि सिद्धं भवति ।

इत उत्तरं च संख्यापूर्वपदानां तदन्तविधिरिष्यते । 'पारायणतुरायणचान्द्रायणं वर्तयति' (५.१.७२) – द्वैपारायणिकः, त्रैपारायणिकः । लुगान्तायास्तु प्रकृतेर्नेष्यते.। द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम् । त्रिशूर्पम् । द्विशूर्पेण क्रीतमिति तदन्तविधिप्रतिषेधात् 'शूर्पादञन्यतरस्याम्' (५.१.२६) इत्यञ् न भवति, सामान्यविहितष्ठञेव भवति । द्विशौर्पिकम् (म. भा.) ।

ठञो द्विगुं प्रत्यनिमित्तत्वाल्लुगभावः । तथा चोक्तम् – 'प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि' (म. भा.) इति ।

निष्क । पण । पाद । माष । वाह । द्रोण । षष्टि । निष्कादिः ॥

## १९०६. शताच्च ठन्यतावशते ॥ २१ ॥ (१६८६)

'आर्हाद्' इत्येव । शतशब्दात् ठन्यतौ प्रत्ययौ भवतः अशतेऽभिधेये, आर्हीयेष्वर्थेषु । कनोऽपवादः । शतेन क्रीतं शतिकम् । शत्यम् ।

अशते इति किम्? शतं परिमाणमस्य शतकं निदानम् (म. भा.) । प्रत्ययार्थोऽत्र सङ्घः । शतमेव वस्तुतः प्रकृत्यर्थान्न भिद्यते । इह तु न भवति – शतेन क्रीतं शत्यं शाटकशतम्, शतिकं शाटकशतमिति (म. भा.) । वाक्येन ह्यत्र प्रत्ययार्थस्य

तत्त्वं गम्यते, न श्रुत्या । तथा चोक्तम्–'शतप्रतिषेधेऽन्यशतत्वेऽप्रतिषेधः' (म.भा.) इति ।

चकारोऽसमास इत्यनुकर्षणार्थः । द्वौ च शतं च द्विशतम्, द्विशतेन क्रीतं द्विशतकम् । त्रिशतकम् ।

'प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि' इत्यनया इष्ट्या समासादपि प्राप्नोति ॥

## १९०७. संख्याया अतिशदन्ताया कन् ॥ २२ ॥ (१६८७)

'आर्हात्' इत्येव । संख्याया अत्यन्ताया अशदन्तायाश्च कन्प्रत्ययो भवति आर्हीयेष्वर्थेषु । ठञोऽपवादः । पञ्चभिः क्रीतः पञ्चकः पटः । बहुकः । गणकः।

अतिशदन्ताया इति किम्? साप्ततिकः । चात्वरिंशत्कः ।

अर्थवतस्तिशब्दस्य ग्रहणाड्डुतेः पर्युदासो न भवति (म. भा.) – कतिकः ॥

## १९०८. वतोरिड् वा ॥ २३ ॥ (१६८८)

वत्वन्तस्य संख्यात्वात् कन् सिद्ध एव, तस्य त्वनेन वा इडागमो विधीयते। वतोः परस्य कनो वा इडागमो भवति आर्हीयेष्वर्थेषु । तावतिकः, तावत्कः । यावतिकः, यावत्कः ॥

## १९०९. विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम् ॥ २४ ॥ (१६८९)

विंशतित्रिंशद्भ्यां ड्वुन् प्रत्ययो भवति, असंज्ञायां विषये, आर्हियेष्वर्थेषु । विंशकः । त्रिंशकः । 'ति विंशतेर्डिति' (६.४.१४२) इति तिलोपः ।

असंज्ञायामिति किम्? विंशतिकः । त्रिंशत्कः ।

कथं पुनरत्र कन्, यावता 'अतिशदन्तायाः' इति पर्युदासेन भवितव्यम् (म. भा.) ? योगविभागः करिष्यते – 'विंशतित्रिंशद्भ्याम् कन्' प्रत्ययो भवति, ततः 'ड्वुनसंज्ञायाम्' (म. भा.) इति ॥

## १९१०. कंसाट्टिठन् ॥ २५ ॥ (१६९०)

कंसाट्टिठन् प्रत्ययो भवति आर्हीयेष्वर्थेषु । ठञोऽपवादः । टकारो ङीबर्थः। इकार उच्चारणार्थः । नकारः स्वरार्थः । कंसिकः । कंसिकी ।

अर्द्धाच्चेति वक्तव्यम् (म. भा. ५.१.२५ वा. १) । अर्द्धिकः । अर्द्धिकी ।

कार्षापणाट्टिठन्वक्तव्यः (वा. २) । कार्षापणिकः । कार्षापणिकी ।

प्रतिशब्दश्चास्यादेशो वा वक्तव्यः (वा. २) । प्रतिकः । प्रतिकी ॥

## १९११. शूर्पादञन्यतरस्याम् ॥ २६ ॥ (१६९१)

शूर्पशब्दादन्यतरस्यामञ् प्रत्ययो भवति आर्हीयेष्वर्थेषु । ठञोऽपवादः । पक्षे सोऽपि भवति । शूर्पेण क्रीतं शौर्पम्, शौर्पिकम् ॥

## १९१२. शतमानविंशतिकसहस्रवसनादण् ॥ २७ ॥ (१६९२)

शतमानादिभ्यः शब्देभ्योऽण् प्रत्ययो भवति आर्हीयेष्वर्थेषु । ठक्ठञोरपवादः। शतमानेन क्रीतं शातमानं शतम् । वैशतिकम् । साहस्रम् । वासनम् ॥

## १९१३. अध्यर्धपूर्वद्विगोर्लुगसंज्ञायम् ॥ २८ ॥ (१६९३)

'आर्हात्' इत्येव । अध्यर्धशब्दः पूर्वो यस्मिस्तस्मादध्यर्धपूर्वात्प्रातिपदिकाद् द्विगोश्च परस्य आर्हीयस्य लुग् भवति, असंज्ञायां विषये । अध्यर्धकंसम् । द्विकंसम्। अध्यर्धशूर्पम् । द्विशूर्पम् । त्रिशूर्पम् ।

असंज्ञायामिति किम्? पाञ्चलौहितिकम् । पाञ्चकलापिकम् । लोहिनीशब्दस्य 'भस्याऽढे तद्धिते' (६.३.३५) इति पुंवद्भावः ।

प्रत्ययान्तस्य विशेषणमसंज्ञाग्रहणम्–न चेत्प्रत्ययान्तं संज्ञेति ।

अद्ध्यर्द्धशब्दः संख्यैव, किमर्थं भेदेनोपादीयते? ज्ञापकार्थम्–क्वचिदस्य संख्याकार्यं न भवति, 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' (५.४.१७) इति॥

## १९१४. विभाषा कार्षापणसहस्राभ्याम् ॥ २९ ॥ (२६९४)

अध्यर्धपूर्वाद् द्विगोश्च कार्षापणसहस्रान्तादुत्तरस्यार्हीयप्रत्ययस्य विभाषा लुग्भवति। पूर्वेण लुकि नित्ये प्राप्ते विकल्प्यते । अध्यर्धकार्षापणम्, अध्यर्धकार्षापणिकम् । द्विकार्षापणम्, द्विकार्षापणिकम् । औपसंख्यानिकस्य टिठनो

लुक् । अलुक्पक्षे च प्रतिरादेशो विकल्पितः । अध्यर्धप्रतिकम् । द्विप्रतिकम् । त्रिप्रतिकम् । सहस्रात्–अध्यर्धसहस्रम्, अध्यर्धसाहस्रम् । द्विसहस्रम्, द्विसाहस्रम्। अलुक्पक्षे 'संख्यायाः संवत्सरसंख्यस्य च' इत्युत्तरपदवृद्धिः ।

सुवर्णशतमानयोरुपसंख्यानम् (म. भा. ५.१.२९ वा. १) । अध्यर्धसुवर्णम्, अध्यर्धसौवर्णिकम् । द्विसुवर्णम्, द्विसौवर्णिकम् । अध्यर्धशतमानम्, अध्यर्धशातमानम्। द्विशतमानम्, द्विशातमानम् । 'परिमाणान्तस्य०' (७.३.१७) इत्युत्तरपदवृद्धिः ॥

## १९१५. द्वित्रिपूर्वान्निष्कात् ॥ ३० ॥ (१६९५)

'द्विगोः' इत्येव । द्वित्रिपूर्वाद्द्विगोर्निष्कान्तादार्हीयप्रत्ययस्य विभाषा लुग्भवति। द्विनिष्कम् । द्विनैष्किकम् । त्रिनिष्कम् । त्रिनैष्किकम् ।

बहुपूर्वाच्चेति वक्तव्यम् (म. भा. ५.१.३० वा. २) । बहुनिष्कम्, बहुनैष्किकम्। 'परिमाणान्तस्य०' (७.३.१७) इत्युत्तरपदवृद्धिः ॥

## १९१६. बिस्ताच्च ॥ ३१ ॥ (१६९६)

'द्वित्रिपूर्वात्' इति चकारेणानुकृष्यते । द्वित्रिपूर्वाद्बिस्तान्ताद् द्विगोः परस्यार्हीयप्रत्ययस्य विभाषा लुग्भवति । द्विबिस्तम्, द्विबैस्तिकम् । त्रिबिस्तम्, त्रिबैस्तिकम् । बहुबिस्तम्, बहुबैस्तिकम् ॥

## १९१७. विंशतिकात्खः ॥ ३२ ॥ (१६९७)

अध्यर्धपूर्वात्प्रातिपदिकाद् द्विगोश्च विंशतिकशब्दान्तादार्हीयेष्वर्थेषु खः प्रत्ययो भवति । अध्यर्धविंशतिकीनम् । द्विविंशतिकीनम् । त्रिविंशतिकीनम् । विधानसामर्थ्यादस्य लुग्न भवति ॥

## १९१८. खार्या ईकन् ॥ ३३ ॥ (१६९८)

'अध्यर्धपूवाद् द्विगोः' इत्येव । अध्यर्धपूर्वात्प्रातिपदिकाद् द्विगोश्च खारीशब्दान्तादार्हीयेष्वर्थेषु ईकन् प्रत्ययो भवति । अध्यर्धखारीकम् । द्विखारीकम्।

केवलायाश्चेति वक्तव्यम् (म.भा. ५.४.३३ वा. १) । खारीकम् ।

काकिण्याश्चोपसंख्यानम् (वा. २) । अध्यर्धकाकिणीकम् । द्विकाकिणीकम्। त्रिकाकिणीकम् ।

केवलायाश्च (वा. ३) । काकिणीकम् ॥

### १९१९. पणपादमाषशताद्यत् ॥ ३४ ॥ (१६९९)

'अध्यर्धपूर्वाद् द्विगोः' इत्येव । अध्यर्धपूर्वाद् द्विगोश्च पणपादमाषशत-शब्दान्तादार्हीयेष्वर्थेषु यत् प्रत्ययो भवति । अध्यर्धपण्यम्, द्विपण्यम्, त्रिपण्यम् । पाद- अध्यर्धपाद्यम्, द्विपाद्यम्, त्रिपाद्यम् । पद्भावो न भवति - 'पद्यत्यतदर्थे' (६.३.४३) इति; प्राण्यङ्गस्य स (६.३.४२) इष्यते, इदं तु परिमाणम्। माष - अध्यर्धमाष्यम्, द्विमाष्यम्, त्रिमाष्यम् । शत - अध्यर्धशत्यम्, द्विशत्यम्, त्रिशत्यम्॥

### १९२०. शाणाद्वा ॥ ३५ ॥ (१७००)

'अध्यर्धपूवाद् द्विगोः' इत्येव । शाणशब्दादध्यर्धपूर्वाद् द्विगोरार्हीयेष्वर्थेषु वा यत् प्रत्ययो भवति । ठञोऽपवादः । पक्षे सोऽपि भवति, तस्य च लुक् । अध्यर्धशाण्यम्, अध्यर्धशाणम् । द्विशाण्यम्, द्विशाणम् । त्रिशाण्यम्, त्रिशाणम् ।

शताच्चेति वक्तव्यम् (म. भा. ५.१.३५ वा. १) । अध्यर्धशत्यम्, अध्यर्धशतम्। द्विशत्यम्, द्विशतम् । त्रिशत्यम्, त्रिशतम् ॥

### १९२१. द्वित्रिपूर्वादण्च ॥ ३६ ॥ (१७०१)

'शाणाद्वा' (५.१.३५) इत्येव । द्वित्रिपूर्वाच्छाणान्तात्प्रातिपदिकादार्हीयेष्वर्थेषु अण् प्रत्ययो भवति, चकाराद्यच्च वा । तेन त्रैरूप्यं सम्पद्यते- द्वैशाणम्, द्विशाणम्, द्विशाण्यम् । त्रैशाणम्, त्रिशाण्यम्, त्रिशाणम् । 'परिमाणान्तस्यासंज्ञाशाणयोः' (७.३.१७) इति पर्युदासादादिवृद्धिरेव भवति ॥

### १९२२. तेन क्रीतम् ॥ ३७ ॥ (१७०२)

ठञादयस्त्रयोदश प्रत्ययाः प्रकृताः, तेषामितः प्रभृति समर्थविभक्तयः प्रत्ययार्थाश्च निर्दिश्यन्ते । 'तेन' इति तृतीयासमर्थात् 'क्रीतम्' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । सप्तत्या क्रीतं साप्ततिकम् । आशीतिकम् (५.१.१८)। नैष्किकम् । पाणिकम् । पादिकम् । माषिकम् (५.१.२०) । शत्यम्, शतिकम् । (५.१.२१) द्विकम् । त्रिकम् (४.१.२२) ।

'तेन' इति मूल्यात्करणे तृतीया समर्थविभक्तिः । अन्यत्रानभिधानान्न भवति-

देवदत्तेन क्रीतम्, पाणिना क्रीतमिति ।

द्विवचनबहुवचनान्तात्प्रत्ययो न भवति–प्रस्थाभ्यां क्रीतम्, प्रस्थैः क्रीतमिति; अनभिधानादेव ।

यत्र तु प्रकृत्यर्थस्य संख्याभेदावगमे प्रमाणमस्ति, तत्र द्विवचनबहुवचनान्तादपि प्रत्ययो भवति – द्वाभ्यां क्रीतं द्विकम्, त्रिकम्, पञ्चकम् । तथा – मुद्‌गैः क्रीतं मौद्गिकम्, माषिकम्; न ह्येकेन मुद्गेन क्रयः संभवति (म. भा.) ॥

## १९२३. तस्य निमित्तं संयोगोत्पातौ ॥ ३८ ॥ ( १७०४)

'तस्य' इति षष्ठीसमर्थात् 'निमित्तम्' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यत्तन्निमित्तं संयोगश्चेत्स भवति उत्पातो वा । संयोगः=सम्बन्धः । प्राणिनां शुभाशुभसूचकः महाभूतपरिणामः=उत्पातः । शतस्य निमित्तं धनपतिना संयोगः शत्यः शतिकः । साहस्रः । उत्पातः खल्वपि–शतस्य निमित्तमुत्पातो दक्षिणाक्षिस्पन्दनम्–शत्यम्, शतिकम् । साहस्रम् ।

तस्य निमित्तप्रकरणे वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम् (म. भा. ५.१.३८ वा. १) । वातस्य शमनं कोपनं वा वातिकम् । पैत्तिकम् । श्लैष्मिकम्।

सन्निपाताच्चेति वक्तव्यम् (वा. २) । सान्निपातिकम् ॥

## १९२४. गोद्‌व्यचोऽसंख्यापरिमाणाश्वादेर्यत् ॥ ३९ ॥ (१७०५)

गोशब्दाद् द्‌व्यचश्च प्रातिपदिकात्संख्यापरिमाणाश्वादिविवर्जिताद्यत् प्रत्ययो भवति 'तस्य निमित्तं संयोगोत्पातौ' (५.१.३८) इत्येतस्मिन्नर्थे । ठञादीनामपवादः। गोर्निमित्तं संयोग उत्पातो वा गव्यः । द्‌व्यचः खल्वपि – धन्यम् । स्वर्ग्यम् । यशस्यम् । आयुष्यम् ।

असंख्यापरिमाणाश्वादेरिति किम्? पञ्चानां निमित्तं पञ्चमम् । सप्तकम् । अष्टकम् । परिमाण–प्रास्थिकम् । खारीकम् । अश्वादि – आश्विकः ।

ब्रह्मवर्चसादुपसंख्यानम् (म. भा. ५.१.३९ वा. १) । ब्रह्मवर्चसस्य निमित्तं गुरुणा संयोगः ब्रह्मवर्चस्यम् ।

अश्व । अश्मन् । गण । ऊर्णा । उमा । वसु । वर्ष । भङ्ग । अश्वादिः ॥

## १९२५. पुत्राच्छ च ॥ ४० ॥ (१७०६)

पुत्रशब्दाच्छः प्रत्ययो भवति चकाराद्यच्च 'तस्य निमित्तं संयोगोत्पातौ'

(५.१.३८) इत्येतस्मिन्विषये । 'द्व्यचः' इति नित्ये यति प्राप्ते वचनम् । पुत्रस्य निमित्तं संयोग उत्पातो वा पुत्रीयम् । पुत्र्यम् ॥

### १९२६. सर्वभूमिपृथिवीभ्यामणञौ ॥ ४१ ॥ (१७०७)

सर्वभूमि–पृथिवी–शब्दाभ्यां यथासंख्यमणञौ प्रत्ययौ भवतः 'तस्य निमित्तं संयोगोत्पातौ' (५.१.३८) इत्येतस्मिन्विषये । ठकोऽपवादौ । सर्वभूमेर्निमित्तं संयोग उत्पातो वा सार्वभौमः । पार्थिवः । सर्वभूमेरनुशतिकादि ( ७.३.२०) – पाठादुभयपदवृद्धिः ॥

### १९२७. तस्येश्वरः ॥ ४२ ॥ (१७०८)

'तस्य' इति षष्ठीसमर्थाभ्यां सर्वभूमि–पृथिवी–शब्दाभ्यामणञौ प्रत्ययौ भवतः 'ईश्वरः' इत्येतस्मिन्विषये । सर्वभूमेरीश्वरः सार्वभौमः । पार्थिवः ।

षष्ठीप्रकरणे पुनः षष्ठीसमर्थविभक्तिनिर्देशः प्रत्ययार्थस्य निवृत्तये; अन्यथा संयोगोत्पाताविव ईश्वरोऽपि प्रत्ययार्थस्य निमित्तस्य विशेषणं सम्भाव्येत ॥

### १९२८. तत्र विदित इति च ॥ ४३ ॥ (१७०९)

'तत्र' इति सप्तमीसमर्थाभ्यां सर्वभूमि–पृथिवीशब्दाभ्यां यथासंख्यमणञौ प्रत्ययौ भवतः 'विदितः' इत्येतस्मिन्नर्थे । विदितः=ज्ञातः, प्रकाशित इत्यर्थः । सर्वभूमौ विदितः सार्वभौमः पार्थिवः ॥

### १९२९. लोकसर्वलोकाट्ठञ् ॥ ४४ ॥ (१७१०)

लोक–सर्वलोक–शब्दाभ्यां तत्रेति सप्तमीसमर्थाभ्यां 'विदितः' इत्येतस्मिन्विषये ठञ् प्रत्ययो भवति । लोके विदितः लौकिकः । सार्वलौकिकः । अनुशतिकादित्वाद् (४.३.२०) उभयपदवृद्धिः ॥

### १९३०. तस्य वापः ॥ ४५ ॥ (१७११)

'तस्य' इति सप्तमीसमर्थाद् 'वापः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । उप्यतेऽस्मिन्वापः, क्षेत्रमुच्यते । प्रस्थस्य वापः=क्षेत्रं प्रास्थिकम् । द्रौणिकम् । खारीकम् ॥

## १९६१. पात्रात्ष्ठन् ॥ ४६ ॥ (१७१२)

पात्रशब्दात् ष्ठन् प्रत्ययो भवति तस्य वापः' (५.१.४५) इत्येतस्मिन्विषये । ठञोऽपवादः । नकारः स्वरार्थः । षकारो ङीषर्थः । पात्रशब्दः परिमाणवाची । पात्रस्य वापः पात्रिकं क्षेत्रम् । पात्रिकी क्षेत्रभक्तिः ॥

## १९३२. तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते ॥ ४७ ॥ (१७१३)

'तत्' इति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत्तत्प्रथमासमर्थं वृद्ध्यादि चेत्तद्दीयते । 'दीयते' इत्येकवचनान्तं वृद्ध्यादिभिः प्रत्येकमभिसम्बध्यते । तत्र (१) यदधमर्णेन उत्तमर्णाय मूलधनातिरिक्तं देयं तद् वृद्धिः । (२) ग्रामादिषु स्वामिग्राह्यो भागः=आयः । (३) पटादीनामुपादानमूलादतिरिक्तं द्रव्यं=लाभः । (४) रक्षानिर्वेशो राजभागः = शुल्कः । (५) उत्कोचः=उपदा । पञ्चास्मिन्वृद्धिर्वा आयो वा लाभो वा शुल्को वा उपदा वा दीयते पञ्चकः । सप्तकः । शत्यः, शतिकः । साहस्रः ।

चतुर्थ्यर्थ उपसंख्यानम् (म.भा. ५.१.४७ वा. १) । पञ्चास्मै वृद्धिर्वा आयो वा लाभो वा शुल्को वा उपदा वा दीयते पञ्चको देवदत्तः ।

सिद्धं त्वधिकरणत्वेन विवक्षितत्वात् । सममब्राह्मणे दानमिति यथा ॥

## १९३३. पूरणार्धाट्ठन् ॥ ४८ ॥ (१७१४)

पूरणवाचिनः शब्दादर्धशब्दाच्च ठन् प्रत्ययो भवति, 'तदस्मिन्वृद्ध्याय-लाभशुल्कोपदा दीयते' (५.१.४७) इत्येतस्मिन्नर्थे । यथायथं ठक्टिठनोरपवादः। द्वितीयो वृद्ध्यादिरस्मिन्दीयते । द्वितीयिकः । तृतीयिकः । पञ्चमिकः । सप्तमिकः। अर्धिकः । अर्धशब्दो रूपकार्धस्य रूढिः ॥

## १९३४. भागाद्यच्च ॥ ५९ ॥ (१७१५)

भागशब्दाद्यत् प्रत्ययो भवति, चकाराट्ठँश्च, 'तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते' (५.१.४७) इत्येतस्मिन्नर्थे । ठञोऽपवादः । भागो वृद्ध्यादिरस्मिन्दीयते भाग्यम्, भागिकं शतम् । भाग्या, भागिका विंशतिः । भागशब्दोऽपि रूपकार्धस्य वाचकः ॥

## १९३५. तद्धरति वहत्यावहति भाराद्वंशादिभ्यः ॥ ५० ॥ (१७१६)

'तत्' इति द्वितीयासमर्थाद्धरत्यादिष्वर्थेषु यथाविहितं प्रत्ययो भवति । प्रकृतिविशेषणम्–'भाराद्वंशादिभ्यः' इति, वंशादिभ्यः परो यो भारशब्दस्तदन्तात्प्रातिपदिकादिति । वंशभारं हरति वहत्यावहति वा वांशभारिकः। कौटजभारिकः । बाल्वजभारिकः ।

भारादिति किम्? वंशं हरति । वंशादिभ्य इति किम्? व्रीहिभारं हरति ।

अपरा वृत्तिः–भाराद्वंशादिभ्य इति, भारभूतेभ्यो वंशादिभ्य इत्यर्थः । भारशब्दोऽर्थद्वारेण वंशादीनां विशेषणम् । भारभूतान्वंशान् हरति वांशिकः । कौटजिकः। बाल्वजिकः ।

भारादिति किम्? वंशं हरति । वंशादिभ्य इति किम्? भारभूतान् व्रीहीन् वहति ।

सूत्रार्थद्वयमपि चैतदाचार्येण शिष्याः प्रतिपादिताः, तदुभयमपि ग्राह्यम् । हरति देशान्तरं प्रापयति चोरयति वा । वहत्युत्क्षिप्य धारयतीत्यर्थः । आवहति उत्पादयतीत्यर्थः ।

वंश । कुटज । बल्वज । मूल । अक्ष । स्थूणा । अश्मन् । अश्व । इक्षु । खट्वा । वंशादिः ।

## १९३६. वस्नद्रव्याभ्यां ठन्कनौ ॥ ४१ ॥ (१७१७)

वस्न–द्रव्यशब्दाभ्यां द्वितीयासमर्थाभ्यां यथासंख्यं ठन्,कन्–इत्येतौ प्रत्ययौ भवतो हरत्यादिष्वर्थेषु । वस्नं हरति वहति वा वस्निकः । द्रव्यकः ॥

## १९३७. संभवत्यवहरति पचति ॥ ५२ ॥ (१७१८)

'तत्' इति द्वितीया समर्थविभक्तिरनुवर्त्तते । तदिति द्वितीया–समर्थात्सम्भवत्यादिष्वर्थेषु यथाविहितं प्रत्ययो भवति । तत्राधेयस्य प्रमाणानतिरेकः=सम्भवः । उपसंहरणम्=अवहारः । विक्लेदनम्=पाकः । प्रस्थं संभवति अवहरति पचति वा प्रास्थिकः । कौडविकः । खारीकः ।

ननु च पाके च सम्भवोऽस्ति ? नास्त्यत्र नियोगः–प्रस्थं पचति ब्राह्मणी प्रास्थिकी ।

तत्पचतीति द्रोणादण्च (म. भा. ४.१.५२ वा. १) । द्रोणं पचति द्रौणी । द्रौणिकी ॥

## १९३८. आढकाचितपात्रात् खोऽन्यतरस्याम् ॥ ५३ ॥ (१७१९)

आढकाचितपात्रशब्देभ्यो द्वितीयासमर्थेभ्योऽन्यतरस्यां संभवादिष्वर्थेषु खः प्रत्ययो भवति । ठञोऽपवादः । पक्षे सोऽपि भवति । आढकं संभवत्यवहरति पचति वा आढकीना, आढकीना, आढकिकी । आचितीना, आचितिकी । पात्रीणा, पात्रिकी ॥

## १९३९. द्विगोष्ठँश्च ॥ ५४ ॥ (१७२०)

'आढकाचितपात्रात्' इत्येव । आढकाचितपात्रान्ताद् द्विगोः संभवत्यादिष्वर्थेषु ष्ठन् प्रत्ययो भवति चकारात्खः, अन्यतरस्याम् । विधानसामर्थ्यादनयोर्लुग्न भवति। ठञस्तु पक्षेऽनुज्ञातस्य 'अध्यर्धपूर्वद्विगोः' (५.१.२८) इति लुग्भवत्येव । नकारः स्वरार्थः । षकारो ङीषर्थः । द्व्याढकिकी, द्व्याढकीना, द्व्याढकी (४.१.२१) । द्व्याचितिकी, द्व्याचितीना, द्व्याचिता । 'अपरिमाणविस्ताचित' (४.१.२२) इति ङीपः प्रतिषेधः । द्विपात्रिकी, द्विपात्रीणा, द्विपात्री ॥

## १९४०. कुलिजाल्लुक्खौ च ॥ ५५ ॥ (१७२१)

'द्विगोः' इत्येव । कुलिजशब्दान्ताद् द्विगोः संभवत्यादिष्वर्थेषु लुक्खौ भवतः। चकारात्ष्ठँश्च । 'अन्यतरस्याम्' ग्रहणानुवृत्त्या लुगपि विकल्प्यते, ठञः पक्षे श्रवणं भवति । तेन चातूरूप्यं संपद्यते–द्वे कुलिजे संभवत्यवहरति पचति वा द्विकुलिजिकी, द्विकुलिजीना, द्विकुलिजा,द्वैकुलिजिकी ।

'परिमाणान्तस्यासंज्ञाशाणयोः' (७.३.२०) इत्यत्र कुलिजग्रहणमपीष्यते तेनोत्तरपदवृद्धिरपि न भवति ॥

## १९४१. सोऽस्यांशवस्नभृतयः ॥ ५६ ॥ (१७२२)

'स' इति प्रथमासमर्थात् 'अस्य' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्तत् प्रथमासमर्थमंशवस्नभृतयश्चेत्ता भवन्ति । अंश=भागः । वस्नम्=मूल्यम् ।

भृतिः=वेतनम् । पञ्च अंशो वस्नो वा भृतिर्वास्य पञ्चकः । सप्तकः । साहस्रः॥

## १९४२. तदस्य परिमाणम् ॥ ५७ ॥ (१७२३)

'तत्' इति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत् प्रथमासमर्थं परिमाणं चेत्तद्भवति प्रस्थः परिमाणमस्य प्रास्थिको राशिः । खारशतिकः। शत्यः, शतिकः । साहस्रः । द्रौणिकः । कौडाविकः । वर्षशतं परिमाणमस्य वार्षशतिकः । वार्षसहस्रिकः । षष्टिर्जीवितपरिमाणमस्येति षाष्टिकः । साप्ततिकः।

समर्थविभक्तिः प्रत्ययार्थश्च पूर्वसूत्रादेवानुवर्तिष्यते, किमर्थं पुनरनयोरुपादानम्? पुनर्विधानार्थम् । द्वे षष्टी जीवितपरिमाणमस्य द्विषाष्टिकः । द्विसाप्ततिकः । पुनर्विधानसामर्थ्याद् 'अध्यर्धपूर्वद्विगोर्लुक्' (५.१.२८) न भवति ॥

## १९४३. संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु ॥ ५८ ॥ (१७२४)

'तदस्य परिमाणम्' (५.१.४७) इति वर्त्तते । संख्यावाचिनः प्रातिपदिकात् परिमाणोपाधिकात्प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति । 'संज्ञासङ्घसूत्राध्ययनेषु' इति प्रत्ययार्थविशेषणम् ।

तत्र संज्ञायां स्वार्थे प्रत्ययो वाच्यः (म. भा.) – पञ्चैव पञ्चकाः शकुनयः। त्रिकाः शालङ्कायनाः ।

सङ्घ–पञ्च परिमाणमस्य, पञ्चकः सङ्घः । अष्टकः ।

सूत्र–अष्टावध्यायाः परिमाणमस्य सूत्रस्य अष्टकं पाणिनीयम् । दशकं वैयाघ्रपदीयम् । त्रिकं काशकृत्स्नम् । ननु चाध्यायसमूहः सूत्रसङ्घ एव भवति? नैतदस्ति; प्राणिसमूहे सङ्घशब्दो रूढः ।

अध्ययन–पञ्चकोऽधीतः । सप्तकोऽधीत । आष्टकः । नवकः । अधीतिः = अध्ययनम्, तस्य संख्यापरिमाणं पञ्चावृत्तयः =पञ्च वाराः, पञ्चरूपाण्यस्य अध्ययनस्य पञ्चकमध्ययनम् ॥

स्तोमे डविधिः पञ्चदशाद्यर्थः (म. भ. ५.१.५८ वा. ८) । पञ्चदश मान्त्राः परिमाणमस्य पञ्चदशः स्तोमः । सप्तदशः । एकविंशः ।

शन्शतोर्डिनिश्छन्दसि (?) । प॑ञ्चद॒शिनो॑ऽर्द्धमा॒साः (तै. सं. ७.५.२०.१).। त्रि॒ंशिनो॑ मासा॑ः (तै. सं. ७.५.२०.१) ।

विंशतेश्चेति वक्तव्यम् (?) । विंशिनोऽङ्गिरसः ॥

## १९४४. पंक्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्य-शीतिनवतिशतम् ॥ ५९ ॥ (१७२५)

'तदस्य परिमाणम्' (५.१.४७) इति वर्त्तते । पंक्त्यादयः शब्दा निपात्यन्ते। यदिह लक्षणेनानुपपन्नं तत्सर्वं निपातनात्सिद्धम् । पञ्चानां टिलोपः, तिः प्रत्ययश्च। पञ्च परिमाणमस्य पंक्तिश्छन्दः । द्वयोर्दशतोर्विन्भावः शतिच्च प्रत्ययः-द्वौ दशतौ परिमाणमस्य सङ्घस्य विंशतिः (म. भा.) । त्रयाणां दशताम् त्रिन्भावः शच्च प्रत्ययः-त्रयो दशतः परिमाणमस्य त्रिंशत् । चतुर्णां दशतां चत्वारिन्भावः शच्च प्रत्ययः-चत्वारो दशतः परिमाणमस्य चत्वारिंशत् । पञ्चानां दशतां पञ्चाभावः शच्च प्रत्ययः-पञ्च दशतः परिमाणमस्य पञ्चाशत् । षण्णां दशतां षड्भावः, तिः प्रत्ययः, अपदत्वं च - षड् दशतः परिमाणमस्य षष्टिः । सप्तानां दशतां सप्तभावः तिः प्रत्ययश्च - सप्त दशतः परिमाणमस्य सप्ततिः । अष्टानां दशतामशीभावस्तिः प्रत्ययश्च अष्टौ दशतः परिमाणमस्य अशीतिः । नवानां दशतां नवभावस्तिः प्रत्ययश्च - नव दशतः परिमाणमस्य नवतिः । दशानां दशतां शभावः तश्च प्रत्ययः - दश दशतः परिमाणमस्य सङ्घस्य शतम् ।

विंशत्यादयो गुणशब्दाः ते यथाकथञ्चिद्व्युत्पाद्याः । नात्रावयवार्थेऽभिनि-वेष्टव्यम्; तथा हि-पंक्तिरिति क्रमसन्निवेशोऽपि वर्तते - ब्राह्मणपंक्तिः, पिपीलिकापंक्तिरिति । न चात्रावयवार्थः कश्चिदस्ति ।

या चैषां विषयभेदेन गुणमात्रे गुणिनि च वृत्तिः, स्वलिङ्गसंख्यानुविधानं च, एतदपि सर्वं स्वाभाविकमेव ।

सहस्रादयोऽप्येवञ्जातीयकास्तद्वदेव द्रष्टव्याः । उदाहरणमात्रमेतदिति ॥

## १९४५. पञ्चद्दशतौ वर्गे वा ॥ ६० ॥ (१७२६)

'पञ्चत्', 'दशत्' -इत्येतौ वा निपात्येते 'तदस्य परिमाणम्' इत्येतस्मिन्विषये वर्गेऽभिधेये । 'संख्यायाः' (५.१.५८) इति कनि प्राप्ते डतिर्निपात्यते । वावचनात्पक्षे सोऽपि भवति । पञ्च परिमाणमस्य पञ्चद् वर्गः, दशद्वर्गः । पञ्चको वर्गः, दशको वर्गः ॥

## १९४६. सप्तनोऽञ् छन्दसि ॥ ६१ ॥ (३४९१)

'वर्गे' इत्येव । 'तदस्य परिमाणम्' इति च । सप्तन्-शब्दाच्छन्दसि विषयेऽञ्

प्रत्ययो भवति वर्गेऽभिधेये । सप्त साप्तान्यसृजन् (तै. सं. ५.४.७.५)॥

**१९४७. त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण् ॥ ६२ ॥ (१७२७)**

'तदस्य परिमाणम्' इत्येव । 'वर्गे' इति निवृत्तम् । त्रिंशच्चत्वारिंशच्छब्दाभ्यां संज्ञायां विषये डण्प्रत्ययो भवति 'तदस्य परिमाणम्' इत्येतस्मिन्विषये ब्राह्मणेऽभिधेये। अभिधेये सप्तम्येषा, न विषयसप्तमी । तेन मन्त्रभाषयोरपि भवति । त्रिंशदध्यायाः परिमाणमेषां ब्राह्मणानां त्रैंशानि ब्राह्मणानि । चात्वारिंशानि ब्राह्मणानि । कानिचिदेव ब्राह्मणान्युच्यन्ते ॥

**१९४८. तदर्हति ॥ ६३ ॥ (१७२८)**

'तत्' इति द्वितीयासमर्थात् 'अर्हति' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भविता श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः । वास्त्रयुग्मिकः (५.१.१८) । शत्यः, शतिकः (५.१.२१)। साहस्रः (५.१.२७) ॥

**१९४९. छेदादिभ्यो नित्यम् ॥ ६४ ॥ (१७२९)**

नित्यग्रहणं प्रत्ययार्थविशेषणम् । छेदादिभ्यो द्वितीयासमर्थेभ्यो 'नित्यमर्हति' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । छेदं नित्यमर्हति छैदिकः । भैदिकः ।

छेद । भेद । द्रोह । दोह । वर्त्त । कर्ष । सम्प्रयोग । विप्रयोग । प्रेषण । सम्प्रश्न । विप्रकर्ष । विरागो विरङ्गं च (ग. सू. ११०) । (वैरङ्गिकः ।) छेदादिः ॥

**१९५०. शीर्षच्छेदाद्यच्च ॥ ६५ ॥ (१७३०)**

शीर्षच्छेदशब्दाद् द्वितीयासमर्थात् ' नित्यमर्हति' इत्यस्मिन्नर्थे यत्प्रत्ययो भवति, चकाराद्यथाविहितञ्च । शिरश्छेदं नित्यमर्हति शीर्षच्छेद्यः, शैर्षच्छेदिकः। प्रत्ययसन्नियोगेन शिरसः शीर्षभावो निपात्यते ॥

**१९५१. दण्डादिभ्यो यः ॥ ६६ ॥ (१७३१)**

'नित्यम्' इति निवृत्तम् । दण्डादिभ्यो द्वितीयासमर्थेभ्यः 'अर्हति' इत्येतस्मिन्नर्थे यः प्रत्ययो भवति । ठकोऽपवादः । दण्डमर्हति दण्ड्यः । मुसल्यः ।

दण्ड । मुसल । मधुपर्क । कशा । अर्घ । मेधा । मेघ । युग । उदक । वध।

गुहा । भाग । इभ । दण्डादिः ॥

### १९५२. छन्दसि च ॥ ६७ ॥ (३४९२)

प्रातिपदिकमात्राच्छन्दसि विषये 'तदर्हति' इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति। ठञादीनामपवादः । उदक्या वृत्तयः । यूप्यः पलाशः । गर्त्यो देशः ॥

### १९५३. पात्राद् घँश्च ॥ ६८ ॥ (१७३२)

पात्रशब्दाद् घन् प्रत्ययो भवति, चकाराद्यच्च, 'तदर्हति' इत्येतस्मिन्नर्थे । ठक्ठञोरपवादः । पात्रं परिमाणमप्यस्ति । पात्रमर्हति पात्रियः, पात्र्यः ॥

### १९५४. कडङ्करदक्षिणाच्छ च ॥ ६९ ॥ (१७३३)

कडङ्कर-दक्षिणाशब्दाभ्यां छः प्रत्ययो भवति, चकाराद्यच्च 'तदर्हति' इत्येतस्मिन्विषये । ठकोऽपवादः । कडङ्करमर्हति कडङ्करीयो गौः । कडङ्कर्यः । दक्षिणामर्हति दक्षिणीयो भिक्षुः । दक्षिण्यो ब्राह्मणः ।

दक्षिणाशब्दस्य अल्पाच्तरस्य पूर्वनिपातेन लक्षणव्यभिचारचिह्नेन यथासंख्याभावं सूचयति ॥

### १९५५. स्थालीबिलात् ॥ ७० ॥ (१७३४)

छयतावनुवर्त्तेते । स्थालीबिलशब्दाच्छयतौ प्रत्ययौ भवतः 'तदर्हति' इत्येतस्मिन्नर्थे । ठकोऽपवादौ स्थालीबिलमर्हन्ति स्थालीबिलीयास्तण्डुलाः । स्थालीबिल्याः । पाकयोग्या इत्यर्थः ॥

### १९५६. यज्ञर्त्विग्भ्यां घखञौ ॥ ७१ ॥ (१७३५)

यज्ञशब्दाद्, ऋत्विक्शब्दाच्च यथासंख्यं घखञौ प्रत्ययौ भवतः 'तदर्हति ' इत्येतस्मिन्विषये । ठकोऽपवादः । यज्ञियो ब्राह्मणः । आर्त्विजीनो ब्राह्मणः ।

यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानम् (म. भा. ५.१.७१) । यज्ञकर्मार्हति यज्ञियो देशः । ऋत्विक्कर्मार्हति आर्त्विजीनं ब्राह्मणकुलम् ।

आर्हीयाणां ठगादीनं पूर्णोऽवधिः । अतः परं प्राग्वतीयष्ठञेव भवति ॥

## १९५७. पारायणतुरायणचान्द्रायणं वर्तयति ॥ ७२ ॥ (१७३६)

समर्थविभक्तिरनुवर्त्तते । 'अर्हति' इति निवृत्तम् । पारायणादिभ्यो द्वितीयासमर्थेभ्यः 'वर्त्तयति' इत्येतस्मिन्नर्थे ठञ्प्रत्ययो भवति । पारायणं वर्त्तयत्यधीते पारायणिकश्छात्रः । तौरायणिको यजमानः । चान्द्रायणिकस्तपस्वी ॥

## १९५८. संशयमापन्नः ॥ ७३ ॥ (१७३७)

संशयशब्दाद् द्वितीयासमर्थाद् 'आपन्नः' इत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति। संशयमापन्नः प्राप्तः सांशयिकः स्थाणुः ॥

## १९५९. योजनं गच्छति ॥ ७४ ॥ (१७३८)

योजनशब्दाद् द्वितीयासमर्थाद् 'गच्छति' इत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति। योजनं गच्छति यौजनिकः ॥

क्रोशशत–योजनशतयोरुपसंख्यानम् (म. भा. ५.१.७४ वा. १) क्रोशशतम् गच्छति क्रौशशतिकः । यौजनशतिकः ।

ततोऽभिगमनमर्हतीति च क्रोशशत–योजनशतयोरुपसंख्यानम् (वा. २) । क्रोशशतादभिगमनमर्हति क्रौशशतिको भिक्षुः । यौजनशतिक आचार्यः ॥

## १९६०. पथः ष्कन् ॥ ७५ ॥ (१७३९)

पथिन्शब्दाद् द्वितीयासमर्थाद् 'गच्छति' इत्येतस्मिन्नर्थे ष्कन्प्रत्ययो भवति । नकारः स्वरार्थः । षकारो ङीषर्थः । पन्थानं गच्छति पथिकः । पथिकी ॥

## १९६१. पन्थो ण नित्यम् ॥ ७६ ॥ (१७४०)

नित्यग्रहणं प्रत्ययार्थविशेषणम् । पथः पन्थ इत्ययमादेशो भवति, भवति णश्च प्रत्ययः 'नित्यं गच्छति' इत्येतस्मिन्विषये । पन्थानं नित्यं गच्छति पान्थो भिक्षां याचते ।

नित्यमिति किम्? पथिकः ॥

## १९६२. उत्तरपथेनाहृतं च ॥ ७ ॥ (१७४१)

निर्देशादेव समर्थविभक्तिः । उत्तरपथशब्दात्तृतीयासमर्थाद् 'आहृतम्'

इत्येतस्मिन्विषये ठञ् प्रत्ययो भवति । चकारः प्रत्ययार्थसमुच्चये, गच्छतीति च । अत्रापि तृतीयैव समर्थविभक्तिः । उत्तरपथेनाहृतम् औत्तरपथिकम् । उत्तरपथेन गच्छति औत्तरपथिकः ।

आहृतप्रकरणे वारिजङ्गलकान्तारपूर्वपदादुपसंख्यानम् (म. भा. ५.१.७७ वा. १)

वारिपथेनाहृतं वारिपथिकम् । वारिपथेन गच्छति वारिपथिकः । जङ्गलपथेनाहृतं जाङ्गलपथिकम् । जङ्गलपथेन गच्छति जाङ्गलपथिकः । स्थलपथेनाहृतं स्थालपथिकम् । स्थलपथेन गच्छति स्थालपथिकः । कान्तारपथेनाहृतं कान्तारपथिकम् । कान्तारपथेन गच्छति कान्तारपथिकः ।

अजपथशंकुपथाभ्यां चोपसंख्यानम् (वा. २) । अजपथेनाहृतं गच्छति वा आजपथिकः । शंकुपथिनाहृतं गच्छति वा शांकुपथिकः ।

मधुकमरिचयोरण् स्थलात् (वा. ३) । स्थलपथेनाहृतं स्थालपथं मधुकम्। स्थालपथं मरिचम् ॥

### १९६३. कालात् ॥ ७८ ॥ (१७४२)

'कालात्' इत्यधिकारः । यदित ऊर्ध्वमनुक्रमिष्यामः कालादित्येवं तद्वेदितव्यम्। वक्ष्यति – 'तेन निर्वृत्तम्' (५.४.७९) । मासेन निर्वृत्तं मासिकम् । आर्द्धमासिकम्। 'सांवत्सरिकम्' ।

'कालात्' इत्याधिकारः 'व्युष्टादिभ्योऽण्' (५.१.९७) इति यावत् ॥

### १९६४. तेन निर्वृत्तम् ॥ ७९ ॥ (१७४३)

'तेन' इति तृतीयासमर्थात्कालवाचिनः प्रातिपदिकात् 'निर्वृत्तम्' इत्यस्मिन्नर्थे ठञ् प्रत्ययो भवति । अह्ना निर्वृत्तम् आह्निकम् । आर्द्धमासिकम् । सांवत्सरिकम्॥

### १९६५. तमधीष्टो भृतो भूतो भावी ॥ ८० ॥ (१७४४)

'तम्' इति द्वितीयासमर्थात्कालवाचिनः प्रातिपदिकात् 'अधीष्टो भृतो भूतो वा भावी' इत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । अधीष्टः=सत्कृत्य व्यापारितः। भृतः=वेतनेन क्रीतः । भूतः=स्वसत्तया व्याप्तकालः । भावी=तादृश एवानागतः। 'कालाध्वनोरत्यन्तसंयोगे' (२.३.५) इति द्वितीया । मासमधीष्टो मासिकोऽध्यापकः।

मासं भृतो मासिकः कर्मकरः । मासं भूतो मासिको व्याधिः । मासं भावी मासिक उत्सवः ।

ननु चाध्येषणं भरणं च मूहूर्तं क्रियते, तेन कथं मासो व्याप्यते? अध्येषणभरणे क्रियार्थे, तत्र फलभूतया क्रियया मासो व्याप्यमानस्ताभ्यामेव व्याप्त इत्युच्यते ॥

## १९६६. मासाद्वयसि यत्खञौ ॥ ८१ ॥ (१७४५)

मासशब्दाद्वयस्यभिधेये यत्खञौ प्रत्ययौ भवतः । ठञोऽपवादः । अधीष्टादीनां चतुर्णामधिकारेऽपि सामर्थ्याद् 'भूतः' इत्येवाभिसम्बध्यते । मासं भूतो मास्यः, मासीनः ।

वयसीति किम्? मासिकम् ॥

## १९६७. द्विगोर्यप् ॥ ८२ ॥ (१७४६)

'मासाद्वयसि' इति वर्तते । मासान्ताद् द्विगोर्यप् प्रत्ययो भवति वयस्यभिधेये। द्वौ मासौ भूतः द्विमास्यः । त्रिमास्यः ॥

## १९६८. षण्मासाण्ण्यच्च ॥ ८३ ॥ (१७४७)

'वयसि' इत्येव । षण्मासशब्दाद्वयस्यभिधेये ण्यत्प्रत्ययो भवति, यप् च । औत्सर्गिकष्ठञपीष्यते, स चकारेण समुच्चेतव्यः । स्वरितत्वाच्चानन्तरोऽनुवर्त्तिष्यते। तेन त्रैरूप्यं भवति – षाण्मास्यः, षण्मास्यः, षाण्मासिकः ॥

## १९६९. अवयसि ठँश्च ॥ ८४ ॥ (१७४८)

षण्मासशब्दादवयस्यभिधेये ठन् प्रत्ययो भवति । चकारेणानन्तरस्य ण्यस्य समुच्चयः क्रियते । षण्मासिको रोगः । षाण्मास्यः ॥

## १९७०. समायाः खः ॥ ८५ ॥ (१७४९)

अधीष्टादयश्चत्वारोऽर्था अनुवर्तन्ते । समाशब्दाद् द्वितीयासमर्थाद् अधीष्टादिष्वर्थेषु खः प्रत्ययो भवति । ठञोऽपवादः । समामधीष्टो भृतो भावी वा समीनः ।

'केचित्' तेन निर्वृत्तम्' (७.१.७९) इति सर्वत्रानुवर्तयन्ति । समया निर्वृत्तः समीनः ॥

## १९७१. द्विगोर्वा ॥ ८६ ॥ (१७५०)

'समायाः खः' (५.१.८५) इत्येव । समाशब्दान्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु पञ्चसु वा खः प्रत्ययो भवति । पूर्वेण नित्यः प्राप्तो विकल्प्यते । 'प्रग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि' (७.३.१७) इति प्राप्तिरस्त्येव । खेन मुक्ते पक्षे ठञपि भवति । द्विसमीनः, द्वैसमिकः । त्रिसमीनः, त्रैसमिकः ॥

## १९७२. रात्र्यहस्संवत्सराच्च ॥ ८७ ॥ (१७५१)

'द्विगोः' इत्येव । रात्रि, अहः, संवत्सर–इत्येवमन्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु वा खः प्रत्ययो भवति । खेन मुक्ते पक्षे ठञपि भवति । द्विरात्रीणः, द्वैरात्रिकः । त्रिरात्रीणः, त्रैरात्रिकः । द्व्यहीनः, द्वैयह्निकः । त्र्यहीणः, त्रियह्निकः । द्विसंवत्सरीणः, द्विसांवत्सरिकः । त्रिसंवत्सरीणः, त्रिसांवत्सरिकः । 'संख्यायाः संवत्सरसंख्यस्य च' (७.३.१५) इत्युत्तरपदवृद्धिः ॥

## १९७३. वर्षाल्लुक् च ॥ ८८ ॥ (१७५३)

'द्विगोः' इत्येव । वर्षान्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु वा खः प्रत्ययो भवति । पक्षे ठञ् । तयोश्च वा लुग्भवति । एवं त्रीणि रूपाणि भवन्ति – द्विवर्षीणो व्याधिः, द्विवार्षिकः, द्विवर्षः । त्रिवर्षीणः, त्रिवार्षिकः, त्रिवर्षः । 'वर्षस्याभविष्यति' (७.३.१६) इत्युत्तरपदवृद्धिः । भाविनि तु त्रैवर्षिकः ॥

## १९७४. चित्तवति नित्यम् ॥ ८९ ॥ (१७५५)

चित्तवति प्रत्ययार्थेऽभिधेये वर्षशब्दान्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषूत्पन्नस्य प्रत्ययस्य नित्यं लुग्भवति । पूर्वेण विकल्पे प्राप्ते वचनम् । द्विवर्षो दारकः ।

चित्तवतीति किम्? द्विवर्षीणो व्याधिः ॥

## १९७५. षष्टिकाः षष्टिरात्रेण पच्यन्ते ॥ ९० ॥ (१७५६)

षष्टिकशब्दो निपात्यते । बहुवचनमतन्त्रम् । षष्टिरात्रशब्दात्तृतीयासमर्थात्कन् प्रत्ययो निपात्यते 'पच्यन्ते' इत्येतस्मिन्नर्थे, रात्रिशब्दस्य च लोपः । षष्टिरात्रेण पच्यन्ते षष्टिकाः । संज्ञैषा धान्यविशेषस्य । तेन मुद्गादिष्वतिप्रसङ्गो न भवति ॥

## १९७६. वत्सरान्ताच्छश्छन्दसि ॥ ९१ ॥ (३४९३)

वत्सरान्तात्प्रातिपदिकान्निर्वृत्तादिष्वर्थेषु छन्दसि विषये छः प्रत्ययो भवति । ठञोऽपवादः । इद्वत्सरीयः, 'इदावत्सरीयः' (काठ. सं. १३.१५.७१) ॥

## १९७७. संपरिपूर्वात्ख च ॥ ९२ ॥ (३४९४)

संपरिपूर्वाद्वत्सरान्तात्प्रातिपदिकाच्छन्दसि विषये निर्वृत्तादिष्वर्थेषु खः प्रत्ययो भवति, चकाराच्छश्च । सं वत्सरीणाः (तै.सं. ४.३.१३.४) 'परिवत्सरीणं (ऋ. ७.१०.३.८) । संवत्सरीयः । 'परिवत्सरीयः (काठ. सं. १३.१५.७१) ॥

## १९७८. तेन परिजय्यलभ्यकार्यसुकरम् ॥ ९३ ॥ (१७५७)

'तेन' इति तृतीयासमर्थात्कालवाचिनः प्रातिपदिकात् 'परिजय्य, लभ्य, कार्य, सुकर' इत्येतेष्वर्थेषु ठञ् प्रत्ययो भवति । मासेन परिजय्यः, शक्यते जेतुं मसिको व्याधिः । सांवत्सरिकः । मासेन लभ्यो मासिकः पटः । मासेन कार्यं मासिकं चान्द्रायणम् । मासेन सुकरो मासिकः प्रासादः ॥

## १९७९. तदस्य ब्रह्मचर्यम् ॥ ९४ ॥ (१७५८)

'तत्' इति द्वितीया समर्थविभक्तिः सा चात्यन्तसंयोगे । अस्येति प्रत्ययार्थः। 'ब्रह्मचर्यम्' इति द्वाभ्यामपि सम्बध्यते–कालस्य व्यापकम्, प्रत्ययार्थस्य च स्वमिति। तदिति द्वितीयासमर्थात्कालवाचिनः प्रातिपदिकात् 'अस्य' इति षष्ठ्यर्थे ठञ्प्रत्ययो भवति, ब्रह्मचर्यं चेद् गम्यते । मासं ब्रह्मचर्यमस्य मासिको ब्रह्मचारी । आर्द्धमासिकः। सांवत्सरिकः ।

अपारा वृत्तिः –

तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति, यत्तदस्येति निर्दिष्टं ब्रह्मचर्यं चेत्तद्भवति । मासोऽस्य ब्रह्मचर्यस्य मासिकं ब्रह्मचर्यम् । आर्धमासिकम्। सांवत्सरिकम् ।

पूर्वत्र ब्रह्मचारी प्रत्ययार्थः उत्तरत्र ब्रह्मचर्यमेव । उभयमपि प्रमाणमुभयथा सूत्रप्रणयनात् ।

महानाम्न्यादिभ्यः षष्ठीसमर्थेभ्य उपसंख्यानम् (म. भा. ५.१.९४ वा. १) ।

माहानामिकम् । गौदानिकम् । आदित्यव्रतिकम् ।

तच्चरतीति च (वा. २) । महानाम्न्य ऋचः (तै. आ.), तत्सहचरितं व्रतं तच्छब्देनोच्यते । महानम्नीश्चरति महानामिकः आदित्यव्रतिकः । गौदानिकः । [‘भस्याढे’ (६.३.३५ वा.) इति पुंवद्भावेन ङीपि निवृत्ते ‘नस्तद्धिते’ (६.१.१४४) इति टिलोपः ।]

अवान्तरदीक्षादिभ्यो डिनिर्वक्तव्यः (वा.३) । अवान्तरदीक्षां चरति अवान्तरदीक्षी। तिलव्रती ।

अष्टाचत्वारिंशतो ड्वंश्च डिनिश्च वक्तव्यः (वा. ४) । अष्टाचत्वारिंशद्वर्षाणि व्रतं चरति, अष्टाचत्वारिंशकः । अष्टाचर्वरिंशी ।

चातुर्मास्यानां यलोपश्च ड्वुंश्च डिनिश्च वक्तव्यः (वा. ५) । चातिर्मास्यानि चरति चातुर्मासकः । चातुर्मासी ।

चतुर्मासाण्ण्यो यज्ञे तत्र भवे (वा. ६) । चतुर्षु मासेषु भवानि चातुर्मस्यानि।

संज्ञायामण्वक्तव्यः (वा. ७) । चतुर्षु भवा चातुर्मासो पौर्णमासी । आषाढी। कार्तिकी । फाल्गुनी ।

## १९८०. तस्य च दक्षिणा यज्ञाख्येभ्यः ॥ ९५ ॥ (१७५९)

‘तस्य’ इति षष्ठीसमर्थेभ्यो यज्ञाख्येभ्यः ‘दक्षिणा’ इत्येतस्मिन्नर्थे ठञ् प्रययो भवति । अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकी । वाजपेयिकी । राजसूयिकी।

आख्याग्रहणमकालादपि यज्ञवाचिनो यथा स्यादिति; इतरथा हि कालाधिकारादेकाहद्वादशाहप्रभृतय एव यज्ञा गृह्येरन् । ‘प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि’ (७.३.१७) इति कालाधिकारेऽपि द्वादशाहादिष्वस्ति प्राप्तिः॥

## १९८१. तत्र च दीयते कार्यं भववत् ॥ ९६ ॥ (१७६०)

‘तत्र’ इति सप्तमीसमर्थात्कालवाचिनः प्रातिपदिकाद् दीयते, कार्यम् – इत्येतयोरर्थयोर्भववत्प्रत्ययो भवति । यथा–मासे भवं मासिकम् । सांवत्सरिकम् (४.३.११) । प्रावृषेण्यम् (४.३.१७) । वासन्तिकम् (४.३.११), वासन्तम् (४.३.१६)। हैमनम् (४.३.२२) । हैमन्तम् (४.३.१६) । हैमन्तिकम् (४.३.११) । शारदम् (४.३.१६) । वतिः सर्वसादृश्यार्थः ।

योगविभागश्चात्र कर्त्तव्यः – ‘तत्र च दीयते’ ,‘यज्ञाख्येभ्यः’ इति । अग्निष्टोमे

दीयते आग्निष्टोमिकं भक्तम् । राजसूयिकम् । वाजपेयिकम् ।

कालाधिकारस्य पूर्णोऽवधिः । अतः परं सामान्येन प्रत्ययविधानम् ॥

## १९८२. व्युष्टादिभ्योऽण् ॥ ९७ ॥ (१७६१)

'तत्र' इति सप्तमीसमर्थेभ्यो व्युष्टादिभ्यो दीयते, कार्यम्–इत्येतयोरण् प्रत्ययो भवति । व्युष्टे दीयते कार्यं वा वैयुष्टम् । नैत्यम् ।

अण्प्रकरणे अग्निपदादिभ्य उपसंख्यानम् (म.भा. ५.१.९७ वा. १) । आग्निपदम्। पैलुमूलम् । किं वक्तव्यम्? न वक्तव्यम्; अत्रैव ते पठितव्याः ।

व्युष्ट । नित्य । निष्क्रमण । प्रवेशन । तीर्थ । सम्भ्रम आस्तरण । संग्राम । संघात । अग्निपद । पीलूमूल । प्रवास । उपसंक्रमण । व्युष्टादिः ॥

## १९८३. तेन यथाकथाचहस्ताभ्यां णयतौ ॥ ९८ ॥ (१७६२)

'दीयते' कार्यम्' इति वर्त्तते । तेनेति तृतीयासमर्थाभ्यां यथाकथाच–हस्तशब्दाभ्यां यथसंख्यं णयतौ प्रत्ययौ भवतः । दीयते, कार्यमित्येतयोरर्थयोः प्रत्येकमभिसम्बन्धः, यथासंख्यं नेष्यते । यथाकथाचशब्दोऽव्ययसमुदायोऽनादरे वर्त्तते । तृतीयार्थमात्रं चात्र सम्भवति, न तु तृतीया समर्थविभक्तिः । यथाकथाच दीयते कार्यं वा याथाकथाचम् । हस्तेन दीयते कार्यं वा हस्त्यम् ॥

## १९८४. सम्पादिनि ॥ ९९ ॥ (१७६३)

'तेन' इत्येव तृतीयासमर्थात्सम्पादिन्यभिधेये ठञ् प्रत्ययो भवति । गुणोत्कर्षः = सम्पत्तिः । आवश्यके णिनिः (३.३.१७०) । कर्णवेष्टाकाभ्यां संपादि मुखं कार्णवेष्टकिकं मुखम् । वास्त्रयुगिकं शरीरम् । वस्त्रयुगेण विशेषतं शोभते इत्यर्थः॥

## १८७५. कर्मवेषाद्यत् ॥ १०० ॥ (१७६४)

कर्मन्, वेष–शब्दाभ्यां तृतीयासमर्थाभ्यां यत्प्रत्ययो भवति 'सम्पादिनि' इत्येतस्मिन्विषये । ठञोऽपवादः । कर्मणा सम्पद्यते कर्मण्यं शरीरम् । वेषेण संपद्यते वेष्यो नटः ।

## १९८६. तस्मै प्रभवति सन्तापादिभ्यः ॥ १०१ ॥ (१७६५)

'तस्मै' इति चतुर्थीसमर्थेभ्यः 'सन्तापादिभ्यः प्रभवति' इत्यस्मिन्विषये

ठञ् प्रत्ययो भवति। समर्थः शक्तः=प्रभवतीत्युच्यते। अलमर्थे चतुर्थी। सन्तापाय प्रभवति सान्तापिकः। सान्नाहिकः।

सन्ताप। संनाह। संग्राम। संयोग। संपराय। संपेष। निष्पेष। निसर्ग। असर्ग। विसर्ग। उपसर्ग। उपवास। प्रवास। सघांत। संमोदन। सक्तुमांसौदनाद्विगृहीतादपि॥

## १९८७. योगाद्यच्च॥१०२॥ (१७६६)

योगशब्दाद्यत्प्रत्ययो भवति, चकराद् ठञ् 'तस्मै प्रभवति' इत्येतस्मिन्विषये। योगाय प्रभवति योग्यः, यौगिकः॥

## १९८८. कर्मण उकञ्॥१०३॥ (१७६७)

कर्मन्शब्दादुकञ् प्रत्ययो भवति 'तस्मै प्रभवति' इत्येतस्मिन्नर्थे। ठञोऽपवादः। कर्मणे प्रभवति कार्मुकं धनुः। धनुषोऽन्यत्र न भवति, अनभिधानात्॥

## १९८९. समयस्तदस्य प्राप्तम्॥१०४॥ (१७६८)

समयशब्दात् तदिति प्रथमासमर्थाद् अस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति यत्तत्प्रथमासमर्थं प्राप्तं चेत्तद्भवति। समयः प्राप्तोऽस्य सामयिकं कार्यम्। उपनतकालमित्यर्थम्। समर्थविभक्तिनिर्देश उत्तरार्थः॥

## १९९०. ऋतोरण्॥१०५॥ (१७६९)

'तदस्य प्राप्तम्' इत्यनुवर्त्तते। ऋतुशब्दात्तदिति प्रथमासमर्थाद् 'अस्य' इति षष्ठ्यर्थेऽण् प्रत्ययो भवति 'तदस्य प्राप्तम्' इत्येतस्मिन् विषये। ऋतुः प्राप्तोऽस्य आर्त्तवं पुष्पम्।

तदस्य प्रकरणे उपवस्त्रादिभ्य उपसंख्यानम् (?)। उपवस्ता प्राप्तोऽस्य औपवस्त्रम्। प्राशिता प्राप्तोऽस्य प्राशित्रम्॥

## १९९१. छन्दसि घस्॥१०६॥ (३४९५)

ऋतुशब्दाच्छन्दसि विषये घस् प्रत्ययो भवति 'तदस्य प्राप्तम्' इत्येतस्मिन्विषये।

अणोऽपवादः । 'अ॒यं ते॒ योनिर्ऋत्वियः॒' (ऋ. ३.२९.१०) ॥

### १९९२. कालाद्यत् ॥ १०७ ॥ (१७७०)

कालशब्दाद्यत्प्रत्ययो भवति 'तदस्य प्राप्तम्' इत्यस्मिन्विषये । कालः प्राप्तोस्य काल्यस्तापः । काल्यं शीतम् ॥

### १९९३. प्रकृष्टे ठञ् ॥ १०८ ॥ (१७७१)

'कालात्' इत्येव, 'तदस्य' इति च । 'प्राप्तम्' इति निवृत्तम् । प्रकर्षेण कालो विशेष्यते । प्रकर्षे वर्तमाना त्कालात्प्रथमासमर्थादस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति । प्रकृष्टो दीर्घः कालोऽस्य कालिकमृणम् । कालिकं वैरम् ।

ठञ्ग्रहणं विस्पष्टार्थम् ॥

### १९९४. प्रयोजनम् ॥ १०९ ॥ (१७७२)

'तदस्य' इत्येव । तदिति प्रथमासमर्थाद् 'अस्य' इति षष्ठ्यर्थे ठञ् प्रत्ययो भवति यत्तत्प्रथमासमर्थं प्रयोजनं चेत्तद्भवति । इन्द्रमहः प्रयोजनमस्य ऐन्द्रमहिकम्। गाङ्गामहिकम् ॥

### १९९५. विशाखाषढादण्मन्थदण्डयोः ॥ ११० ॥ (१७७३)

विशाखाषाढाशब्दाभ्यामण् प्रत्ययो भवति 'तदस्य प्रयोजनम्' इत्येतस्मिन्विषये यथासंख्यं मन्थदण्डयोरभिधेययोः । विशाखा प्रयोजनमस्य वैशाखो मन्थः । आषाढो दण्डः ।

चूडादिभ्य उपसंख्यानम् (?) । चूडा प्रयोजनमस्य चौडम् । श्रद्धा प्रयोजनमस्य श्राद्धम् ॥

### १९९६. अनुप्रवचनादिभ्यश्छः ॥ १११ ॥ (१७७४)

अनुप्रवचनादिभ्यः प्रातिपदिकेभ्यश्छः प्रत्ययो भवति 'तदस्य प्रयोजनम्' इत्येतस्मिन्विषये । ठञोऽपवादः । अनुप्रवचनं प्रयोजनमस्य अनुप्रवचनीयम् । उत्थापनीयम् ॥

विशिपूरिपतिरुहि प्रकृतेरनात्सपूर्वपदादुपसंख्यानम् (म. भा. ५.१.१११ वा.१)।

(विशि–) गृहप्रवेशनं प्रयोजनमस्य गृहप्रवेशनीयम् । (पूरि–) प्रपापूरणीयम् । (पति–) अश्वप्रपतनीयम् । (रुहि–) प्रासादारोहणीयम् ।

स्वर्गादिभ्यो यद्वक्तव्यः (वा. २) स्वर्गः प्रयोजनमस्य स्वर्ग्यम् । यशस्यम् । आयुष्यम् । काम्यम् । धन्यम् ।

पुण्याहवचनादिभ्यो लुग्वक्तव्यः (वा. ३) । पुण्याहवाचनं प्रयोजनमस्य पुण्याहवाचनम् । स्वस्तिवाचनम् । शान्तिवाचनम् ।

अनुप्रवचन । उत्थापन । प्रवेशन । अनुप्रवेशन । उपस्थापन । संवेशन । अनुवेशन । अनुवचन । अनुवादन । अनुवासन । आरम्भण । आरोहण । प्ररोहण। अन्वारोहण । अनुप्रवचनादिः ॥

## १९९७. समापनात् सपूर्वपदात् ॥ ११२ ॥ (१७७५)

समापनशब्दात् सपूर्वपदाद्=विद्यमानपूर्वपदाच्छः प्रत्ययो भवति 'तदस्य प्रयोजनम्' इत्येतस्मिन्विषये । ठञोऽपवादः । छन्दस्समापनं प्रयोजनमस्य छन्दःसमापनीयम् । व्याकरणसमापनीयम् ।

पदग्रहणं बहुच्पूर्वनिरासार्थम् ॥

## १९९८. ऐकागारिकट् चौरे ॥ ११३ ॥ (१७७६)

'ऐकागारिकट्' इति निपात्यते चौरेऽभिधेये । एकागारं प्रयोजनमस्य ऐकागारिकः चौरः । ऐकागारिकी ।

किमर्थमिदं निपात्यये, यावता 'प्रयोजनम्' इत्येव सिद्धष्ठञ्? चौरे नियमार्थ वचनम् । इह मा भूत् एकागारं प्रयोजनमस्य भिक्षोरिति ।

टकारः कार्यावधारणार्थः–ङीबेव भवति, न ञित्स्वर इति ।

अपरे पुनरिकट् प्रत्ययं वृद्धिं च निपातयन्ति ॥

## १९९९. आकालिकडाद्यन्तवचने ॥ ११४ ॥ (१७७७)

'आकालिकट्' इति निपात्यते आद्यन्तवचने । समानकालशब्दस्याकालशब्द आदेशः । आद्यन्तयोश्चैतद्विशेषणम् । इकट् प्रत्ययश्च निपात्यते । समानकालावाद्यन्तावस्य आकालिकः स्तनयित्नुः । आकालिकी विद्युत् । जन्मना तुल्यकालविनाशा । उत्पादानन्तरं विनाशिनीत्यर्थः ।

आकालाट् ठंश्च (म. भा. ५.१.११४ वा. २)। चात् ठञ्च। आकालिका विद्युत्। ठञः पूर्णोऽवधिः।

## २०००. तेन तुल्यं क्रिया चेद्वतिः ॥ ११५ ॥ (१७७८)

तेनेति तृतीयासमर्थात्तुल्यमित्येतस्मिन्नर्थे वतिः प्रत्ययो भवति यत्तुल्यं क्रिया चेत्सा भवति। ब्राह्मणेन तुल्यं वर्त्तते ब्राह्मणवत्। राजवत्।

क्रियाग्रहणं किम्? गुणतुल्ये मा भूत्। पुत्रेण तुल्यः स्थूलः। पुत्रेण तुल्यो गोमान्।

## २००१. तत्र तस्येव ॥ ११६ ॥ (१७७९)

'तत्रे' ति सप्तमीसमर्थात् 'तस्य' इति षष्ठीसमर्थाच्च इवार्थे वतिः प्रत्ययो भवति। मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः। पाटलिपुत्रवत् साकेते परिखा। षष्ठीसमर्थात् – देवदत्तस्येव देवदत्तवद् यज्ञदत्तस्य गावः। यज्ञदत्तस्येव देवदत्तस्य दन्ताः यज्ञादत्तवत्॥

## २००२. तदर्हम् ॥ ११७ ॥ (१७८०)

तदिति द्वितीयासमर्थात् 'अर्हम्' इत्येतस्मिन्नर्थे वतिः प्रत्ययो भवति। राजानमर्हति राजवत्पालनम्। ब्राह्मणवत्। ऋषिवत्। क्षत्रियवत्॥

## २००३. उपसर्गाच्छन्दसि धात्वर्थे ॥ ११८ ॥ (३४९६)

उपसर्गात्ससाधने धात्वर्थे वर्त्तमानात्स्वार्थे वतिः प्रत्ययो भवति छन्दसि विषये। 'यदुद्वतो' निवतो यासि॒ वप्स॒द् (ऋ. १०.१४२.४), उद्गतानि निगतानि च (म. भा.)॥

## २००४. तस्य भावस्त्वतलौ ॥ ११९ ॥ (१७८१)

तस्येति षष्ठीसमर्थाद् 'भावः' इत्येतस्मिन्नर्थे त्वतलौ प्रत्ययौ भवतः। भवतोऽस्मादभिधानप्रत्ययाविति भावः। शब्दस्य प्रवृत्तिनिमित्तं भावशब्देनोच्यते। अश्वस्य भावः अश्वत्वम्, अश्वता। गोत्वम्, गोता॥

## २००५. आ च त्वात् ॥ १२० ॥ (१७८२)

'ब्रह्मणस्त्वः' (५.१.१३६) इति वक्ष्यति । आ एतस्मात्त्वसंशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामस्तत्र त्वतलौ प्रत्ययावधिकृतौ वेदितव्यौ । वक्ष्यति–'पृथ्वादिभ्य इमनिज्वा' (५.१.१२२) इति । प्रथिमा, पार्थवम्, पृथुत्वम्, पृथुता । म्रदिमा, मार्दवम्, मृदुत्वम्, मृदुता ।

अपवादैः सह समावेशार्थं वचनम् । कर्मणि च विधानार्थं 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' (५.१.१२४) इति । चकारो नञ्स्नञ्भ्यामपि समावेशार्थः । स्त्रियाः भावः स्त्रैणम्, स्त्रीत्वम्, स्त्रीता । पुंसो भावः पुंस्त्वम्, पुंस्ता, पौंस्नम् ॥

**२००६. न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटबुध कतरसलसेभ्यः ॥ १२१ ॥ (१७५६)**

इत उत्तरे ये भावप्रत्ययास्ते नञ्पूर्वात्तत्पुरुषान्न भवन्ति चतुरादीन्वर्जयित्वा । वक्ष्यति–'पत्यन्तपुरोहितादिभ्यो यक्' (५.१.१२८) इति । अपतित्वम्, अपतिता । अपटुत्वम्, अपटुता । अरमणीयत्वम्, अरमणीयता ।

नञ्पूर्वादिति किम्? बार्हस्पत्यम् । प्राजापत्यम् । तत्पुरुषादिति किम्? नास्य पटवः सन्तीत्यपटुः, तस्य भाव आपटवम् । आलघवम् । अचतुरादिभ्य इति किम्? आचतुर्यम् । आसङ्गत्यम् । आलवण्यम् । आवट्यम् । आबुध्यम् । आकत्यम्। आरस्यम् । आलस्यम् ॥

**२००७. पृथ्वादिभ्य इमनिज्वा ॥ १२२ ॥ (१७८४)**

'पृथु' –इत्येवमादिभ्यः प्रातिपदिकेभ्य इमनिच्प्रत्ययो भवति वा 'तस्य भावः' इत्येतस्मिन्नर्थे । वावचनमणादेः समावेशार्थम् । पृथोर्भावः प्रथिमा, पार्थवम्। म्रदिमा, मार्दवम् । 'तुरिष्ठेमेयस्सु' (६.४.१५४) 'टेः' (६.४.१५५) इति टिलोपः। 'र ऋतो हलादेर्लघोः' (६.४.१६१) इति रेफादेशः । त्वतलौ सर्वत्र भवत एव– पृथुत्वम्, पृथुता । मृदुत्वम्, मृदुता ।

पृथु । मृदु । महत् । पटु । तनु । लघु । बहु । साधु । वेणु । आसु । बहुल.। गुरु। दण्ड । ऊरु । खण्ड । चण्ड । बाल । अकिञ्चन । होड । पाक । वत्स । मन्द । स्वादु । ह्रस्व । दीर्घ । प्रिय । वृष । ऋजु । क्षिप्र । क्षुप्र । क्षुद्र । पृथ्वादिः।

**२००८. वर्णदृढादिभ्यः ष्यञ् च ॥ १२३ ॥ (१७८७)**

वर्णविशेषवाचिभ्यः प्रातिपदिकेभ्यो दृढादिभ्यश्च ष्यञ् प्रत्ययो भवति, चकारादिमनिच्च, 'तस्य भावः' इत्येतस्मिन्विषये । शुक्लस्य भावः शौक्ल्यम्, शुक्लिमा, शुक्लत्वम्, शुक्लता । कार्ष्ण्यम्, कृष्णिमा, कृष्णत्वम्, कृष्णता । दृढादिभ्यः–दार्ढ्यम्, दृढिमा, दृढत्वम्, दृढता ।

षकारो ङीषर्थः – औचिती, याथाकामी ।

दृढ । परिवृढ । भृश । कृश । चक्र । आभ्र । लवण । ताम्र । अम्ल । शीत। उष्ण । जड । बधिर । पण्डित । मधुर । मूर्ख । मूक । 'वेर्यातलाभमतिमनःशारदानाम्' (ग. सू. १११) । 'समो मतिमनसोर्जवने (ग. सू. ११२) । दृढादिः ॥

## २००९. गुणवचनब्राह्मणादिभ्यः कर्मणि च ॥ १२४ ॥ (१७८८)

गुणमुक्तवन्तो गुणवचनाः । गुणवचनेभ्यो ब्राह्मणादिभ्यश्च तस्येति षष्ठीसमर्थेभ्यः कर्मण्यभिधेये ष्यञ्प्रत्ययो भवति । चकाराद् भावे च । कर्मन्शब्दः क्रियावचनः। जडस्य भावः कर्म वा जाड्यम् । ब्राह्मणादिभ्यः खल्वपि–ब्राह्मण्यम् । माणव्यम्।

आ पादपरिसमाप्तेर्भावकर्माधिकारः । ब्राह्मणादिराकृतिगणः । आदिशब्दः प्रकारवचनः ।

चातुर्वर्ण्यादीनां स्वार्थ उपसंख्यानम् (म.भा. ५.१.१२४ वा. १) । चत्वार एव वर्णाश्चातुर्वर्ण्यम् । चातुराश्रम्यम् । त्रैलोक्यम् । त्रैस्वर्यम् । षाड्गुण्यम् । सैन्यम्। सान्निध्यम् । सामीप्यम् । औपम्यम् । सौख्यम् ।

ब्राह्मण । वाडव । माणव । चोर । मूक । आराधय । विराधय । अपराधय । उपराध्य । एकभाव । द्विभाव । त्रिभाव । अन्यभाव । समस्थ । विषमस्थ । परमस्थ । मध्यमस्थ । अनीश्वर । कुशल । कपि । चपल । अक्षत्रज्ञ । निपुण । अर्हतो नुम् च (वा.२) (ग.सू. ११३) आर्हन्त्यम् । संवादिन् । संवेशिन् । बहुभाषिन् । वालिश। दुष्पुरुष । कापुरुष । दायाद । विशसि [विशस्ति] । धूर्त्त । राजन् । सम्भाषिन् । शीर्षपातिन् । अधिपति । अलस । पिशाच । पिशुन । विशाल । गणपति । धनपति। नरपति । गडुल । निव । निधान । विष । सर्ववेदादिभ्यः स्वार्थे (ग. सू. ११४) । चतुर्वेदस्योभयपदवृद्धिश्च । (ग. सू. ११५) चातुर्वैद्यम् । ब्राह्मणादिः ॥

## २०१०. स्तेनद्यन्नलोपश्च ॥ १२५ ॥ (१७९०)

स्तेनशब्दात्षष्ठीसमर्थाद्भावकर्मणोर्यत्प्रत्ययो भवति, नशब्दस्य लोपश्च भवति। स्तेनस्य भावः कर्म वा स्तेयम् ।

'स्तेनात्' इति केचिद् योगविभागं कुर्वन्ति । स्तेनात्ष्यञ् भवति – स्तैन्यम्। ततः 'यन्नलोपश्च' । स्तेनादित्येव–स्तेयम् ॥

## २०११. सख्युर्यः ॥ १२६ ॥ (१७९१)

सखिशब्दाद् यः प्रत्ययो भवति भावकर्मणोरर्थयोः । सख्युर्भावः कर्म वा सख्यम् ।

दूतवणिग्भ्यां चेति वक्तव्यम् (?) । दूत्यम् । वणिज्यम् । कथं वाणिज्यम्? ब्राह्मणादित्वात् ॥

## २०१२. कपिज्ञात्योर्ढक् ॥ १२७ ॥ (१७९२)

कपि, ज्ञाति–शब्दाभ्यां ढक् प्रत्ययो भवति भावकर्मणोरर्थयोः । कपेर्भावः कर्म वा कापेयम् । ज्ञातेयम् ।

यथासंख्यमर्थयोः सर्वत्रैवात्र प्रकरणे नेष्यते ॥

## २०१३. पत्यन्तपुरोहितादिभ्यो यक् ॥ १२८ ॥ (१७९३)

पत्यन्तात्प्रातिपदिकात्पुरोहितादिभ्यश्च यक् प्रत्ययो भवति भावकर्मणोरर्थयोः। सेनापतेर्भावः कर्म वा सैनापत्यम् । गार्हपत्यम् । प्राजापत्यम् । पौरोहित्यम् । राज्यम् ।

पुरोहित । राजन् । राजाऽसे (ग. सू. ११६) । संग्रामिक । एषिक । वर्मित.। खण्डिक । दण्डिक । छत्त्रिक । मिलिक । पिण्डिक । बाल । मन्द । स्तनिक । चूडितिक । कृषिक । पूतिक । पत्त्रिक । प्रतिक । अजानिक । सलनिक । सूचिक। शाक्वर । सूचक । पक्षैक । सारथिक । जलिक । सूतिक । अञ्जलिक। सूचक । पुरोहितादिः ॥

## २०१४. प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ॥ १२९ ॥ (१७९४)

प्राणभृज्जातिवाचिभ्यः प्रातिपदिकेभ्यो वयोवचनेभ्य उद्गात्रादिभ्यश्चाञ् प्रत्ययो भवति भावकर्मणोरर्थयोः । अश्वस्य भावः कर्म वा आश्वम् । औष्ट्रम् । वयोवचनेभ्यः–

कौमारम् । कैशोरम् । उद्गात्रादिभ्यः–औद्गात्रम् । औन्नेत्रम् ।

उद्गातृ । उन्नेतृ । प्रतिहर्तृ । रथगणक । पक्षिगणक । सुष्ठु । दुष्ठु । अध्वर्यु। वधू । सुभग मन्त्रे (ग. शू. ११७) । उद्गात्रादिः ॥

## २०१५. हायनान्तयुवादिभ्योऽण् ॥ १३० ॥ (१७९५)

हायनान्तेभ्यः प्रातिपदिकेभ्योः युवादिभ्यश्चाण् प्रत्ययो भवति भावकर्मणोरर्थयोः। द्विहायनस्य भावः कर्म वा द्वैहायनम् । त्रैहायनम् [त्रैहायणम् ।] युवादिभ्यः– यौवनम् । स्थाविरम् ।

श्रोत्रियस्य य लोपश्च वाच्यः (म. भा. ५.१.१३० वा. ) श्रोत्रियस्य भावः कर्म वा श्रौत्रम् ।

युवन् । स्थविर । होतृ । यजमान । कमण्डलु । पुरुषासे (ग. सू. ११८) । सुहृत् । यातृ । श्रवण । कुस्त्री । सुस्त्री । सुहृदय । सुभ्रातृ । दुर्भ्रातृ । वृषल । हृदयासे । क्षेत्रज्ञ । कृतक । परिव्राजक । कुशल । निपुण । पिशुन । सब्रह्मचारिन्। कुतूहल । अनृशंस । युवादिः ॥

## २०१६. इगन्ताच्च लधुपूर्वात् ॥ १३१ ॥ (१७९६)

इगन्ताच्च लघुपूर्वादण् प्रत्ययो भवति भावकर्मणोः । लघुपूर्वग्रहणेन प्रातिपदिकसमुदायो विशेष्यते । लघुः पूर्वोऽवयवोऽस्येति लघुपूर्वः । कुतः पुनरसौ लघुः पूर्वः? इक्सान्निधानादिक इति विज्ञायते । लघुपूर्वो यस्मादिकस्तदन्तात्प्रातिपदिकादित्ययमर्थो विवक्षितः ।

अपरे तत्पुरुषकर्मधारयं वर्णयन्ति–इक्चासावन्तश्चेतीगन्तः । लघुपूर्वग्रहणेन स एव विशेष्यते, पश्चात्तेन प्रातिपदिकस्य तदन्तविधिरिति । अस्मिन्व्याख्याने– अन्तग्रहणमतिरिच्यते । 'लघुपूर्वादिकः' इत्येतावदेव वाच्यं स्यात् । शुचेर्भावः कर्म वा शौचम् । मौनम् । नागरम् । हारीतकम् । पाटवम् । लाघवम् ।

इगन्तादिति किम्? घटत्वम् । पटत्वम् । लघुपूर्वादिति किम्? कण्डूत्वम् । पाण्डुत्वम् ।

कथं काव्यमिति? ब्राह्मणादिषु कविशब्दो द्रष्टव्यः ॥

## २०१७. योपधाद् गुरूपोत्तमाद् वुञ् ॥ १३२ ॥ (१७९७)

त्रिप्रभृतीनामन्तस्य समीपमुपोत्तमम् । गुरुरुपोत्तमं यस्य तद् गुरूपोत्तमम् । यकारोपधाद् गुरूपोत्तमाद्वुञ् प्रत्ययो भवति भावकर्मणोः । रमणीयस्य भाव कर्म वा रामणीयकम् । वासनीयकम् ।

योपधादिति किम्? विमानत्वम् । गुरुपोत्तमादिति किम्? क्षत्त्रियत्वम् ।

सहायाद्वेति वक्तव्यम् (?) । साहायकम् । साहाय्यम् ॥

## २०१८. द्वन्द्वमनोज्ञादिभ्यश्च ॥ १३३ ॥ (१७९८)

द्वन्द्वसंज्ञकेभ्यो मनोज्ञादिभ्यश्च वुञ् प्रत्ययो भवति भावकर्मणोः । गोपालपशुपालानां भावः कर्म वा गौपालपशुपालिका । शैष्योपाध्यायिका । कौत्सकुशिकिका । मनोज्ञादिभ्यः – मानोज्ञकम्, काल्याणकम् ।

मनोज्ञ । कल्याण । प्रियरूप । छान्दस । छात्त्र । मेधाविन् । अभिरूप । आढ्य । कुलपुत्र । श्रोत्रिय । चोर । धूर्त्त । वैश्वदेव । युवन् । ग्रामपुत्र । ग्रामखण्ड। ग्रामकुमार । अमुष्यपुत्र । अमुष्यकुल । शतपुत्र । कुशल । मनोज्ञादिः ।

## २०१९. गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु ॥ १३४ ॥ (१७९९)

गोत्रवाचिनश्चरणवाचिनश्च प्रातिपदिकाद् वुञ् प्रत्ययो भवति, प्रत्येकं भावकर्मणोरर्थयोः श्लाघादिषु विषयभूतेषु । तत्र श्लाघा=विकत्थनम् । अत्याकारः=पराधिक्षेपः, तदवेतः=तत्प्राप्तः तज्ज्ञो वा । तदिति गोत्रचरण-योर्भावकर्मणी निर्दिश्येते । तत्प्राप्तस्तदवगतवान् 'तदवेतः' इत्युच्यते । श्लाघायां तावत्–गार्गिकया श्लाघते । काठिकया श्लाघते । गार्ग्यत्वेन कठत्वेन च विकत्थत इत्यर्थः । अत्याकारे–गार्गिकयात्याकुरुते । काठिकयात्याकुरुते । गार्ग्यत्वेन कठत्वेन च परानधिक्षिपतीत्यर्थः । तदवेतः– गार्गिकामवेतः । काठिकामवेतः । गार्ग्यत्वं कठत्वं च प्राप्त इत्यर्थः । तद्वाऽवगतवानित्यर्थः ।

श्लाघादिष्विति किम? गार्ग्यत्वम् । कठत्वम् ॥

## २०२०. होत्राभ्यश्छः ॥ १३५ ॥ (१८००)

होत्राशब्द ऋत्विग्विशेषवचनः । ऋत्विग्विशेषवाचिभ्यश्छः प्रत्ययो भवति भावकर्मणोः । अच्छावाकस्य भावः कर्म वा अच्छावाकीयम् । मित्त्रावरुणीयम् ।

ब्राह्मणाच्छंसीयम् । आग्नीध्रीयम् । प्रतिप्रस्थात्रीयम् । त्वष्ट्रीयम् । पोत्रीयम् ।

बहुवचनं स्वरूपविधिनिरासार्थम् ॥

### २०२१. ब्रह्मणस्त्वः ॥ १३६ ॥ (१८०१)

'होत्राभ्यः' इत्यनुवर्त्तते । ब्रह्मन्शब्दाद्धोत्रावाचिनस्त्वः प्रत्ययो भवति भावकर्मणोः । छस्यापवादः । ब्रह्मणो भावः कर्म वा ब्रह्मत्वम् ।

'न' इति वक्तव्ये त्ववचनं तलो बाधनार्थम् ।

यस्तु जातिशब्दो ब्राह्मणपर्यायो ब्रह्मन्शब्दः, ततस्त्वतलौ भवत एव– ब्रह्मत्वम्, ब्रह्मता ।

भवनावधिकयोर्नञ्स्नञोरधिकारः समाप्तः ॥

## ॥ इति काशिकावृत्तौ पञ्चमस्याध्यायस्य प्रथमः पादः ॥

# अथ पञ्चमाध्याये द्वितीयः पादः

### २०२२. धान्यानां भवने क्षेत्रे खञ् ॥ १ ॥ (१८०२)

निर्देशादेव समर्थविभक्तिः । धान्यविशेषवाचिभ्यः षष्ठीसमर्थेभ्यो भवनेऽभिधेये खञ् प्रत्ययो भवति, तच्चेद् भवनं क्षेत्रं भवति । भवनमिति–भवन्ति=जायन्तेऽस्मिन्निति भवनम् । मुद्गानां भवनं क्षेत्रं मौद्गीनम् । कौद्रवीणम् । कौलत्थीनम् ।

धान्यानामिति किम्? तृणानां भवनं क्षेत्रमित्यत्र न भवति । क्षेत्रमिति किम्? मुद्गानां भवनं कुशूलम् ।

बहुवचनं स्वरूपविधिनिरासार्थम् ।

### २०२३. व्रीहिशाल्योर्ढक् ॥ २ ॥ (१८०३)

व्रीहि–शालि–शब्दाभ्यां ढक् प्रत्ययो भवति भवने क्षेत्रेऽभिधेये । खञोऽपवादः।

व्रीहीणां भवनं क्षेत्रं व्रैहेयम् । शालेयम् ॥

### २०२४. यवयवकषष्टिकाद्यत् ॥ ३ ॥ (१८०४)

यवादिभ्यः शब्देभ्यो यत्प्रत्ययो भवति भवने क्षेत्रेऽभिधेये । खञोऽपवादः । यवानां भवनं क्षेत्रं यव्यम् । यवक्यम् । षष्टिक्यम् ॥

### २०२५. विभाषा तिलमाषोमाभङ्गाणुभ्यः ॥ ४ ॥ (१८०५)

तिल, माष, उमा, भङ्गा, अणु–इत्येतेभ्यो विभाषा यत्प्रत्ययो भवति भवने क्षेत्रेऽभिधेये । खञि प्राप्ते वचनम्, पक्षे सोऽपि भवति । उमाभङ्ग्योरपि धान्यत्वमाश्रितमेव। तिल, माष, उमा, भङ्गा, अणु–एषां भवनं क्षेत्रं – तिल्यम्, तैलीनम् । माष्यम्, माषीणम् । उम्यम्, औमीनम् । भङ्ग्यम्, भाङ्गीनम् । अणव्यम्, आणवीनम् ॥

### २०२६. सर्वचर्मणः कृतः खखञौ ॥ ५ ॥ (२८०६)

सर्वचर्मन्शब्दात्तृतीयासमर्थात् 'कृतः' इत्यस्मिन्नर्थे खखञौ प्रत्ययौ भवतः.। सर्वशब्दश्चात्र प्रत्ययार्थेन कृतेन सम्बध्यते, न चर्मणा । तत्रायमसमर्थसमासो द्रष्टव्यः । सर्वश्चर्मणा कृत इत्येतस्मिन् वाक्यार्थे वृत्तिः । सर्वचर्मीणः सार्वचर्मीणः॥

### २०२७. यथामुखसम्मुखस्य दर्शनः खः ॥ ६ ॥ (१८०७)

यथामुखशब्दात्सम्मुखशब्दात्षष्ठी–समर्थाद् 'दर्शनः' इत्येतस्मिन्नर्थे खः प्रत्ययो भवति । दृश्यतेऽस्मिन्निति दर्शनः=आदर्शादिः, प्रतिबिम्बाश्रय उच्यते । निपातनात्सादृश्येऽव्ययीभावः । यथामुखं दर्शनः – यथामुखीनः । सर्वस्य मुखस्य दर्शनः – सम्मुखीनः ॥

### २०२८. तत्सर्वादेः पथ्यङ्गकर्मपत्त्रपात्रं व्याप्नोति ॥ ७ ॥ (१८०८)

'तत्' इति द्वितीया समर्थविभक्तिः । 'व्याप्नोति' इति प्रत्ययार्थः । परिशिष्टं प्रकृतिविशेषणम् । सर्वादेः प्रातिपदिकात् पथिन्, अङ्ग, कर्मन्, पत्त्र, पात्र – इत्येवमन्ताद् द्वितीयासमर्थात् 'व्याप्नोति' इत्यस्मिन्नर्थे खः प्रत्ययो भवति । सर्वपथं व्यप्नोति सर्वपथीनो रथः । सर्वाङ्गीणस्तापः । सर्वकर्मीणः पुरुषः । सर्वपत्त्रीणः

सारथिः । सर्वपात्रीण ओदनः ॥

### २०२९. आप्रपदं प्राप्नोति ॥ ८ ॥ (१८०९)

'प्रपदम्' इति पादस्याग्रमुच्यते, आङ् मर्यादायाम्, तयोरव्ययीभावः । आप्रपदशब्दात्तदिति द्वितीयासमर्थात् 'प्राप्नोति' इत्यस्मिन्नर्थे खः प्रत्ययो भवति । आप्रपदं प्राप्नोति – आप्रपदीनः पटः । शरीरेणासम्बद्धस्यापि पटस्य प्रमाणमाख्यायते.॥

### २०३०. अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु ॥ ९ ॥ (१८१०)

अनुपदादिभ्यः शब्देभ्यस्तदिति द्वितीयासमर्थेभ्यो यथासंख्यम् 'बद्धा' , 'भक्षयति', 'नेय' –इत्येतेष्वर्थेषु खः प्रत्ययो भवति । अनुरायामे, सादृश्ये वा । अनुपदं बद्धा उपानत् – अनुपदीना । पदप्रमाणेत्यर्थः । सर्वान्नानि भक्षयति – सर्वान्नीनो भिक्षुः । अयः = प्रदक्षिणम् । अनयः = प्रसव्यम् । प्रदक्षिणप्रसव्यगामिनां शाराणां यस्मिन्परशारैः पदानामसमावेशः सोऽयानयः । अयानयं नेयः अयानयीनः योनः शारः (म. भा.) । फलकशिरसि स्थित इत्यर्थः ॥

### २०३१. परोवरपरम्परपुत्रपौत्रमनुभवति ॥ १० ॥ (१८११)

परोवर, परम्पर, पुत्रपौत्र – इत्येतेभ्यस्तदिति द्वितीयासमर्थेभ्यः 'अनुभवति' इत्येतस्मिन्नर्थे खः प्रत्ययो भवति । परोवरेति परस्योत्वं प्रत्ययसन्नियोगेन निपात्यते। परांश्चावरांश्चानुभवति परोवरीणः (म. भा.) ।

परपरतराणां च परम्परभावो निपात्यते । परांश्च परतरांश्चानुभवति परम्परीणः। पुत्रपौत्राननुभवति पुत्रपौत्रीणः ।

परम्परशब्दो विनापि प्रत्ययेन दृश्यते – 'मन्त्रिपरम्परा मन्त्रं भिनत्तीति । तच्छब्दान्तरमेव द्रष्टव्यम् ॥

### २०३२. अवारपारात्यन्तानुकामं गामी ॥ ११ ॥ (१८१२)

अवारपार, अत्यन्त, अनुकाम–इत्येतेभ्यो द्वितीयासमर्थेभ्यः 'गामी' इत्येतस्मिन्नर्थ खः प्रत्ययो भवति । गमिष्यतीति गामी । 'भविष्यति गम्यादयः' (३.३.०३) इति । 'अकेनोर्भविष्यदाधमर्ण्ययोः' (३.२.७०) इति षष्ठीप्रतिषेधः ।

अवारपारं गामी अवारपारीणः ।

विगृहीतादपीष्यते (म. भा. वा. १) । विपरीताच्च (म. भा. वा. २) । अवारीणः। पारावारीणाः ।

अत्यन्तं गामी अत्यन्तीनः । भृशं गन्तेत्यर्थः । अनुकामं गामी अनुकामीनः। यथेष्टं गन्तेत्यर्थः ॥

## २०३३. समांसमां विजायते ॥ १२ ॥ (१८१३)

'समांसमाम्' इति वीप्सा, सुबन्तसमुदायः प्रकृतिः, विजायत = गर्भं धारयतीति प्रत्ययार्थः । गर्भधारणेन सकलापि समा व्याप्यत इति अत्यन्तसंयोगे द्वितीया (२.३५)। समांसमां विजायते समांसमीना गौः । समांसमीना वडवा ।

पूर्वपदे सुपोऽलुग्वक्तव्यः (म. भा. वा. १) ।

केचित्तु 'समायां समायां विजायते' इति विगृह्णन्ति, 'गर्भमोचने विजनिर्वर्त्तते' –इत्याहुः, तेषां पूर्वपदे यलोपमात्रं निपात्यते, परिशिष्टस्यालुग्वक्तव्यः ।

अनुत्पत्तावुत्तरपदस्य च वा यलोपो वक्तव्यः (म. भा. ५.२.१२ वा. ४) । समां समां विजायते । समायां समायां विजायत इति वा ॥

## २०३४. अद्यश्वीनावष्टब्धे ॥ १३ ॥ (१८१४)

'विजायते' इति वर्त्तते । 'अद्यश्वीनः' इति निपात्यते अवष्टब्धे विजने=आसन्ने प्रसवे । आविदूर्ये हि मूर्धन्यो विधीयते – 'अवाच्चालम्बनाविदूर्ययोः' (८.३.६८) इति । अद्य वा श्वो वा विजायते अद्यश्वीना गौः । अद्यश्वीना वडवा ।

केचित्तु– 'विजायते इति नानुवर्त्तते, अवष्टब्धमात्रे निपातनम्' –इत्याहुः । अद्यश्वीनं मरणम् । अद्यश्वीनो वियोग इति ॥

## २०३५. आगवीनः ॥ १४ ॥ (१८१५)

'आगवीनः' इति निपात्यते । गोराङ्पूर्वाद्, आ तस्य गोः प्रतिदानात् कारिणि खः प्रत्ययो निपात्यते (म. भा.) । आगवीनः कर्मकरः ॥ यो गवा भृतः कर्म करोति आ तस्य गोः प्रत्यर्पणात् ॥

## २०३६. अनुग्वलङ्गामी ॥ १५ ॥ (१८१६)

गोः पश्चाद् 'अनुगु'। अनुगुशब्दाद् 'अलङ्गामी' इत्यस्मिन्नर्थे खः प्रत्ययो भवति। अनुगु पर्याप्तं गच्छति अनुगवीनो गोपालकः ॥

## २०३७. अध्वनो यत्खौ ॥ १६ ॥ (१८१७)

तदिति द्वितीया समर्थविभक्तिरनुवर्त्तते, अलङ्गामीति च प्रत्ययार्थः। अध्वन्शब्दाद् द्वितीयासमर्थाद् 'अलङ्गामी' इत्येतस्मिन्नर्थे यत्खौ प्रत्ययौ भवतः। अध्वानमलङ्गामी अध्वनीनः, अध्वन्यः। 'ये चाभावकर्मणोः' (६.४.१६८), 'आत्माध्वानौ खे' (६.४.१६९) इति प्रकृतिभावः ॥

## २०३८. अभ्यमित्राच्छ च ॥ १७ ॥ (१८१८)

अभ्यमित्रशब्दाद् द्वितीयासमर्थाद् 'अलङ्गामी' इत्येतस्मिन्नर्थे छः प्रत्ययो भवति। चकाराद्यत्खौ च। अभ्यमित्रमलङ्गामी अभ्यमित्रीयः, अभ्यमित्र्यः, अभ्यमित्रीणः। अमित्राभिमुखं सुष्ठु गच्छतीत्यर्थः ॥

## २०३९. गोष्ठात्खञ् भूतपूर्वे ॥ १८ ॥ (१८१९)

गावस्तिष्ठन्त्यस्मिन्निति गोष्ठम्। गोष्ठशब्देन सन्निहितगोसमूहो देश उच्यते.। भूतपूर्वग्रहणं तस्यैव विशेषणम्। गोष्ठशब्दाद् भूतपूर्वोपाधिकात्स्वार्थे खञ् प्रत्ययो भवति। गौष्ठीनो देशः।

भूतपूर्वग्रहणं किम्? गोष्ठो वर्तते ॥

## २०४०. अश्वस्यैकाहगमः ॥ १९ ॥ (१८२०)

निर्देशादेव समर्थविभक्तिः। अश्वशब्दात्षष्ठीसमर्थाद् 'एकाहगमः' इत्येतदर्थे खञ् प्रत्ययो भवति। एकाहेन गम्यत इत्येकाहगमः। अश्वस्यैकाहगमोऽध्वा आश्वीनः। 'आश्वीनानि शतं पतित्वा' (तां ब्रा. २१.१.९)।

## २०४१. शालीनकौपीने अधृष्टाकार्ययोः ॥ २० ॥ (१८२१)

शालीन-कौपीन-शब्दौ निपात्येते यथासंख्यमधृष्टे, अकार्ये चाभिधेये। अधृष्टः - अप्रगल्भः। अकार्यम्=अकरणार्ह, विरुद्धम्। शालीनकौपीने अधृष्टाकार्ययोः पर्यायौ यथाकथञ्चिद् व्युत्पादयितव्यौ। शालाप्रवेशनमर्हति,

कूपावतारमर्हति (म. भा.) – इत्यर्थयोः खञ् प्रत्यय उत्तरपदलोपश्च निपात्यते । शालीनो जडः । कौपीनं पापम् ॥

## २०४२. व्रातेन जीवति ॥ २१ ॥ (१८२२)

निर्देशादेव तृतीया समर्थविभक्तिः । व्रातशब्दात्तृतीयासमर्थात् 'जीवति' इत्यस्मिन्नर्थे खञ् प्रत्ययो भवति । नानाजातीया अनियतवृत्तय उत्सेधजीविनः सङ्घाः = व्राताः (म.भा.) । उत्सेधः = शरीरम्, तदायास्य ये जीवन्ति ते उत्सेधजीविनः, तेषां कर्म – व्रातम् । तेन व्रातेन जीवति – व्रातीनः । तेषामेव व्रातानामन्यतम उच्यते। यस्त्वन्यस्तदीयेन [व्रातेन] जीवति तत्र नेष्यते ॥

## २०४३. साप्तपदीनं सख्यम् ॥ २२ ॥ (१८२३)

'साप्तपदीनम्' इति निपात्यते सख्येऽभिधेये । सप्तभिः पदैरवाप्यते साप्तपदीनम्। 'सख्यं जनाः साप्तपदीनमाहुः' ।

कथं साप्तपदीनः सखा, साप्तपदीनं मित्त्रमिति? यदा गुणप्रधानः साप्तपदीनशब्दः सखिभावे तत्कर्मणि च वर्तते तदा सख्यशब्देन सामानाधिकरण्यं भवति, यदा तु लक्षणया वर्त्तते तदा पुरुषेण सामानाधिकरण्यं भवति ॥

## २०४४. हैयङ्गवीनं संज्ञायाम् ॥ २३ ॥ (१८२४)

'हैयङ्गवीनम्' इति निपात्यते संज्ञायां विषये । ह्योगोदोहस्य हियङ्ग्वादेशः, तस्य विकारे (म. भा.) खञ् प्रत्ययो भवति संज्ञायाम् । ह्योगोदोहस्य विकारः – हैयङ्गवीनम्, घृतस्य संज्ञा । तेनेह न भवति – ह्योगोदोहस्य विकार उदश्वित् (म. भा.) ॥

## २०४५. तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ ॥ २४ ॥ (१८२५)

'तस्य' इति षष्ठीसमर्थेभ्यः पील्वादिभ्यः कर्णादिभ्यश्च यथासंख्यं पाकमूलयोरर्थयोः कुणब्, जाहच्–इत्येतौ प्रत्ययौ भवतः । पीलूनां पाकः पीलुकुणः। कर्कन्धुकुणः । कर्णादिभ्यः – कर्णस्य मूलं कर्णजाहम् ।

पीलु । कर्कन्धु । शमी । करीर । कुवल । बदर । अश्वत्थ । खदिर ।

पील्वादिः।

कर्ण । अक्षि । नख । मुख । केश । पाद । गुल्फ । भ्रू । शृङ्ग । दन्त । ओष्ठ। पृष्ठ । अङ्गुष्ठ । कर्णादिः ॥

### २०४६. पक्षात्तिः ॥ २५ ॥ (१८२६)

'तस्य' इत्येव । तस्येति षष्ठीसमर्थात्पक्षशब्दात् मूलेऽभिधेये तिः प्रत्ययो भवति । मूलग्रहणमनुवर्त्तते, पाकग्रहणम्; (म. भा.) 'एकयोगनिर्दिष्टा–नामप्येकदेशोऽनुवर्तते' (व्या. परि. २३) इति । पक्षस्य मूलं पक्षतिः = प्रतिपत् ॥

### २०४७. तेन वित्तश्चुञ्चुप्चणपौ ॥ २६ ॥ (१८२७)

'तेन' इति तृतीयासमर्थाद् 'वित्त' इत्येतस्मिन्नर्थे चुञ्चुप्, चणप् – इत्येतौ प्रत्ययौ भवतः । वित्तः – प्रतीतः, ज्ञात इत्यर्थः । विद्यया वित्तः, विद्याचुञ्चुः – विद्याचणः ॥

### २०४८. विनञ्भ्यां नानाञौ नसह ॥ २७ ॥ (१८२८)

वि, नञ्–इत्येताभ्यां यथासंख्यं ना, नाञ् – इत्येतौ प्रत्ययौ भवतः । 'नसह' इति प्रकृतिविशेषणम् (म. भा.) । असहार्थे पृथग्भावे वर्त्तमानाभ्यां विनञ्भ्यां स्वार्थे नानाञौ प्रत्ययौ भवतः । विना । नाना ॥

### २०४९. वेः शालच्छङ्कटचौ ॥ २८ ॥ (१८२९)

विशब्दात् शालच्, शङ्कटच् – इत्येतौ प्रत्ययौ भवतः । ससाधनक्रियावचनादुपसर्गात्स्वार्थे प्रत्ययौ भवतः । विगते श्रृङ्गे विशाले । विशङ्कटे। तद्योगाद् गौरपि विशालः, विशङ्कट इत्युच्यते ।

परमार्थतस्तु गुणशब्दा एते यथाकथञ्चिद्व्युत्पाद्यन्ते । नात्र प्रकृतिप्रत्ययार्थयोरभिनिवेशः ॥

### २०५०. संप्रोदश्च कटच् ॥ २९ ॥ (१८३०)

सम्, प्र, उद् – इत्येतेभ्यः कटच् प्रत्ययो भवति । चकाराद्वेश्च । सङ्कटः । प्रकटः । उत्कटः । विकटः ।

कटच्प्रकरणेऽलाबूतिलोमाभङ्गाभ्यो रजस्युपसंख्यानम् (म. भा. ५.२.२९ वा. १,२) । अलाबूनां रजः अलाबूकटम् । तिलकटम् । उमाकटम् । भङ्गाकटम्.।

गोष्ठादयः स्थानादिषु पशुनामादिभ्य उपसंख्यानम् (वा. ३) । गवां स्थानं गोगोष्ठम् । महिषीगोष्ठम् ।

सङ्घाते कटच् वक्तव्यः (वा. ३) अवीनां सङ्घातः अविकटम् ।

विस्तारे पटच् वक्तव्यः (वा. ३) । अविपटम् ।

द्वित्वे गोयुगच् (वा. ३) । उष्ट्रगोयुगम् । अश्वगोयुगम् ।

प्रकृत्यर्थस्य षट्त्वे षड्गवच् (?) । हस्तिषड्गवम् । अश्वषड्गवम् ।

विकारे स्नेहे तैलच् (वा. ३) । एरण्डतैलम् । इङ्गुदतैलम् । तिलतैलम ।

भवने क्षेत्रे इक्ष्वादिभ्यः शाकटशाकिनौ (वा. ३) । इक्षुशाकटम् । इक्षुशाकिनम्। मूलशाकटम् । मूलशाकिनम् ॥

## २०५१. अवात् कुटारच्च ॥ ३० ॥ (१८३१)

अवशब्दात् कुटारच्प्रत्ययो भवति । चकारात् कटच् । अवकुटारम् । अवकटम्॥

## २०५२. नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः ॥ ३१ ॥ (१८३२)

'अवात्' इत्येव । नमनम्=नतम् । नासिकायाः सम्बन्धिनि नतेऽभिधेये टीटच्, नाटच्, भ्रटच्-प्रत्यया भवन्ति संज्ञायां विषये । नासिकाया नतम् अवटीटम्.। अवनाटम् । अवभ्रटम् । तद्योगान्नासिकापि । पुरुषोऽपि तथोच्यते-अवटीटः, अवनाटः, अवभ्रट इति ॥

## २०५३. नेर्बिडज्बिरीसचौ ॥ ३२ ॥ (१८३३)

'नते नासिकायाः' इत्यनुवर्त्तते, 'संज्ञायाम्' इति च । निशब्दान्नासिकाया नतेऽभिधेये बिडच्, बिरीसच्-इत्येतौ प्रत्ययौ भवतः । निबिडम् । निबिरीसम् । तद्योगान्नासिकापि । पुरुषोऽपि-निबिडः । निबिरीसः ।

कथं निबिडाः केशाः, निबिडं वस्त्रम्? उपमानाद्भविष्यति ॥

## २०५४. इनच्पिटच्चिक चि च ॥ ३३ ॥ (१८३४)

'नेः' इत्येव, 'नते नासिकायाः' इति च । निशब्दान्नासिकाया नतेऽभिधेये इनच्, पिटच्–इत्येतौ प्रत्ययौ भवतः, तत्संनियोगेन च निशब्दस्य यथासंख्यं चिक, चि – इत्येतावादेशौ भवतः । चिकिनः । चिपिटः ।

ककारः प्रत्ययो वक्तव्यश्चिक्च प्रकृत्याऽऽदेशः । चिक्कः । तथा चोक्तम् – 'इनच्पिटच्काश्चिकचिचिकादेशाश्च वक्तव्याः' (म. भा. ५.२.३३ वा. १) इति ॥

क्लिन्नस्य चिल् पिल्लश्चास्य चक्षुषी (वा.२) । क्लिन्नस्य चिल्, पिल्– इत्येतावादेशौ भवतो लश्च प्रत्ययः 'अस्य चक्षुषी' इत्येतस्मिन्नर्थे । क्लिन्ने अस्य चक्षुषी चिल्लः । पिल्लः ॥

चुल्लादेशो वक्तव्यः (वा,२) । चुल्लः ।

अस्येत्यनेन नार्थः । चक्षुषीरेवाभिधाने प्रत्यय इष्यते । क्लिन्ने चक्षुषी चिल्ले। पिल्ले । चुल्ले । तद्योगात्तु पुरुषस्तथोच्यते ॥

## २०५५. उपाधिभ्यां त्यकन्नासन्नारूढयोः ॥ ३४ ॥ (१८३५)

उप, अधि–इत्येताभ्यां यथासंख्यमासन्नारूढयोर्वर्त्तमानाभ्यां स्वार्थे त्यकन्प्रत्ययो भवति । संज्ञाधिकाराच्च नियतविषयमासन्नारूढं गम्यते । पर्वतस्यासन्नम् = उपत्यका । तस्यैवाऽऽरूढम्=अधित्यका । 'प्रत्ययस्थात्कात्पूर्वस्य' (७.३.४४) इतीत्वमत्र न भवति, संज्ञाधिकारादेव ॥

## २०५६. कर्मणि घटोऽठच् ॥ ३५ ॥ (१८३६)

निर्देशादेव समर्थविभक्तिः । कर्मशब्दात्सप्तमीसमर्थाद् 'घटः' इत्येतस्मिन्नर्थेऽठच् प्रत्ययो भवति । घटत इति घटः । कर्मणि घटते कर्मठः पुरुषः ॥

## २०५७. तदस्य सञ्जातं तारकादिभ्यः इतच् ॥ ३६ ॥ (१८३७)

तदिति प्रथमासमर्थेभ्यस्तारकादिभ्यः शब्देभ्यः 'अस्य' इति षष्ठ्यर्थे इतच् प्रत्ययो भवति । सञ्जातग्रहणं प्रकृतिविशेषणम् । तारकाः सञ्जाता अस्य नभसः तारकितं नभः । पुष्पित्तो वृक्षः ।

तारका । पुष्प । मुकुल । कण्टक । पिपासा । सुख । दुःख । ऋजीष । कुड्मल। रोग । विचार । व्याधि । निष्क्रमण । मूत्र । पुरीष । किसलय । कुसुम.।

प्रचार । तन्द्रा । वेग । बुभुक्षा । श्रद्धा । उत्कण्ठा । भर । द्रोह । गर्भादप्राणिनि (ग. सू. १२०) । तारकादिराकृतिगणः ॥

## २०५८. प्रमाणे द्वयसच्दघ्नञ्मात्रचः ॥ ३७ ॥ (१८३८)

'तदस्य' इत्यनुवर्त्तते । तदिति प्रथमासमर्थाद् 'अस्य' इति षष्ठ्यर्थे द्वयसच्, दघ्नच्, मात्रच् – इत्येते प्रत्यया भवन्ति यत्तत्प्रथमासमर्थं प्रमाणं चेत्तद्भवति । ऊरुः प्रमाणमस्य ऊरुद्वयसम्, ऊरुदघ्नम्, ऊरुमात्रम् । जानुद्वयसम्, जानुदघ्नम् जानुमात्रम्॥

प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम । (म. भा. वा.)

ऊरुद्वयसमुदकम् । ऊरुदघ्नमुदकम् । मात्रच्पुनरविशेषेण, प्रस्थमात्रमित्यपि भवति ।

प्रमाणे लो वक्तव्यः (म.भा. ५.२.३७ वा.) प्रमणशब्दा इति ये प्रसिद्धास्तेभ्य उत्पन्नस्य प्रत्यस्य लुग्भवति । शमः प्रमाणमस्य शमः । दिष्टिः । वितस्तिः ।

द्विगोर्नित्यम् (म. भा. ५.२.३७ वा.) । द्वौ शमौ प्रमणमस्य द्विशमः । त्रिशमः। द्विवितस्तिः । नित्यग्रहणं किम्? संशये श्राविणं वक्ष्यति, तत्रापि द्विगोर्लुगेव यथा स्यात् । द्वे दिष्टी स्यातां वा न वा, द्विदिष्टिः ।

डट् स्तोमे वक्तव्य (म. भा. ५.२.३७ वा.) । पञ्चदशः स्तोमः । पञ्चदशी रात्रिः । टिच्वान् ङीप् ।

शन्शतोर्डिनिर्वक्तव्यः (म. भा. ५.२.३७ वा. ) । पञ्चदशिनोऽर्द्धमासाः, त्रिंशिनो मासाः (तं. सं. ७.५.२०.१) ।

विंशतेश्चेति वक्तव्यम् (म. भा.) । विंशिनोऽङ्गिरसः (गो. ब्रा. १.१.८.१) ।

प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रज्वक्तव्यः (म. भा. वा.) । शममात्रम्। दिष्टिमात्रम् । प्रस्थमात्रम् । कुडवमात्रम् । पञ्चमात्रम् । दशमात्रा गावः.।

वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम् (म. भा. ५.२.३७ वा.) । तावदेव तावद्द्वयसम् । तावन्मात्रम् । एतावद्द्वयसम् । एतावन्मात्रम् । यावद्द्वयसम् । यावन्मात्रम् ॥

## २०५९. पुरुषहस्तिभ्यामण्च ॥ ३८ ॥ (१८३९)

'तदस्य' इत्येव, 'प्रमाणे' इति च । पुरुषहस्तिभ्यां प्रथमासमर्थाभ्यां प्रमाणोपाधिकाभ्यामस्येति षष्ठ्यर्थेऽण् प्रत्ययो भवति, चकाराद्द्वयसजादयश्च । पुरुषः प्रमाणमस्य पौरुषम्, पुरुषद्वयसम्, पुरुषदध्नम्, पुरुषमात्रम् । हास्तिनम्, हस्तिद्वयसम्, हस्तिदध्नम्, हस्तिमात्रम् ।

द्विगोर्नित्यं लुक् – द्विपुरुषमुदकम्, त्रिपुरुषमुदकम् । द्विहस्ति, त्रिहस्ति । द्विपुरुषी, त्रिपुरुषी । द्विहस्तिनी, त्रिहस्तिनी ॥

## २०६०. यत्तदेतेभ्यः परिमाणे वतुप् ॥ ३९ ॥ (१८४०)

'तदस्य' इत्येव । यत्तदेतेभ्यः प्रथमासमर्थेभ्यः परिमाणोपाधिकेभ्यः 'अस्य' इति षष्ठ्यर्थे वतुप् प्रत्ययो भवति । यत्परिमाणमस्य यावान् । तावान् । एतावान् ।

प्रमाणग्रहणेऽनुवर्तमाने परिमाणग्रहणं प्रमाणपरिमाणयोर्भेदात् ।

डावतावथवैशेष्यान्निर्देशः पृथगुच्यते ।

मात्राद्यप्रतिघाताय भावः सिद्धश्च डावतोः ॥ (म. भा. ५.२.३९)

वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम् (म. भा. ५.२.३९ वा. १) 'न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते' (ऋ. ७.३२.२३)। त्वावतः पुरुवसो (ऋ. ८.४६.१) । यज्ञं विप्रस्य मावतः (ऋ. १.१४२.स्) । त्वत्सदृशस्य, मत्सदृशस्येत्यर्थः ॥

## २०६१. किमिदम्भ्यां वो घः ॥ ४० ॥ (१८४१)

किमिदम्भ्यामुत्तरस्य वतुपो वकारस्य घकारादेशो भवति । कियान् । इयान्।

एतदेव चादेशविधानं ज्ञापकम् – किमिदम्भ्यां वतुप्प्रत्ययो भवतीति । अथ वा – योगविभागेन वतुपं विधाय पश्चाद्वो घो विधीयते (म. भा.) ॥

## २०६२. किमः संख्यापरिमाणे इति च ॥ ४१ ॥ (१८४२)

संख्यायाः परिमाणम्, संख्यापरिच्छेद इत्यर्थः । संख्यापरिमाणे वर्त्तमानात् किमः प्रथमासमर्थादस्येति षष्ठ्यर्थे डतिः प्रत्ययो भवति । चकाराद्वतुप् च । तस्य च वकारस्य घादेशो भवति । पृच्छ्यमानत्वात् परिच्छेदोपाधिकायां संख्यायां वर्त्तमानात्किमः प्रत्ययो विज्ञायते । का संख्या परिमाणमेषां ब्राह्मणानां कति ब्राह्मणाः । कियन्तो ब्राह्मणाः ।

अथ वा – संख्यैव परिमाणात्मिका परिच्छेदस्वभावा गृह्यते – का संख्या परिमाणं येषामिति ।

ननु च संख्या एवमात्मिकैव परिच्छेदस्वभावा, सा किमर्थं परिमाणेन विशेष्यते? यत्रापरिच्छेदकत्वेन विवक्ष्यते तत्र मा भूदिति । क्षेपे हि परिच्छेदो नास्ति – केयमेषां संख्या दशानामिति ॥

## २०६३. संख्याया अवयवे तयप् ॥ ४२ ॥ (१८४३)

'तदस्य' इत्येव । संख्याया अवयवे वर्त्तमानाया अस्येति षष्ठ्यर्थे तयप् प्रत्ययो भवति । अवयवा अवयविनः सम्बन्धिन इति सामर्थ्यादवयवी प्रत्ययार्थो विज्ञायते । पञ्च अवयवा अस्य पञ्चतयम् । दशतयम् । चतुष्टयम् । चतुष्टयी ॥

## २०६४. द्वित्रिभ्यां तयस्यायज्वा ॥ ४३ ॥ (१८४४)

पूर्वेण विहितस्य तयस्य द्वित्रिभ्यां परस्य वाऽयजादेशो भवति । द्वाववयवावस्य द्वयम्, द्वितयम् । त्रयम्, त्रितयम् ।

तयग्रहणं स्थानिनिर्देशार्थम्; अन्यथा प्रत्ययान्तरमयज्विज्ञायेत । तत्र को दोषः? त्रयी गतिरिति तयनिबन्धन ईकारो (४.१.१५) न स्यात्, 'प्रथमचरमतय' (१.१.३३) इत्येष विधिश्च न स्यात् । द्वये, द्वयाः । चकारः स्वरार्थः ॥

## २०६५. उभादुदात्तो नित्यम् ॥ ४४ ॥ (१८४५)

उभशब्दात्परस्य तयपो नित्यमयजादेशो भवति स चोदात्तः । वचनसामर्थ्यादादेरुदात्तत्वं विज्ञायते । उभशब्दो यदि लौकिकी संख्या, ततः पूर्वेणैव विहितस्य तयप आदेशविधानार्थं वचनम् । अथ न संख्या, ततो योगविभागेन तयपं विधाय तस्य नित्यमयजादेशो विधीयते । उभयो मणिः । 'उभयेऽस्य देवमनुष्याः' (तै.सं. १.६.७.१) ॥

## २०६६. तदस्मिन्नधिकमिति दशान्तड्डः ॥ ४५ ॥ (१८४६)

तदिति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे दशान्तात्प्रातिपदिकाद् डः प्रत्ययो भवति यत्तत्प्रथमा समर्थमधिकं चेत्तद्भवति । इतिकरणस्ततश्चेद्विवक्षा । एकादश

अधिका अस्मिन् शते एकादशं शतम् । एकादशं सहस्रम् । द्वादशं शतम् । द्वादशं सहस्रम् ।

दशान्तादिति किम्? पञ्चाधिका अस्मिन् शते । अन्तग्रहणं किम्? दशाधिका अस्मिन् शते ।

प्रत्ययार्थेन च समानजातीये प्रकृत्यर्थे सति प्रत्यय इष्यते (म. भा.) – एकादश कार्षापण अधिक अस्मिन् कार्षापणशते एकदशं कार्षापणशतमिति ।

इह तु न भवति – एकादश माषा अधिका अस्मिन् कार्षापणशत इति (म. भा.) ।

'शतसहस्रयोश्चेष्यते' (म. भा. इष्टि) । इह न भवति – एकादशाधिका अस्यां त्रिंशतीति ।

'इतिकरणो विवक्षार्थः' इत्युक्तम्, तत इदं सर्व लभ्यते ।

कथमेकादशं शतसहस्रमिति ? शतानाम् सहस्रम्, सहस्राणां वा शतमिति शतसहस्रमित्युच्यते ।

तत्र 'शतसहस्रयोः' इत्येव सिद्धम् ।

अधिके समानजतातविष्टं शतसहस्रयोः ।
यस्य संख्या तदाधिक्ये डः कर्तव्यो मतो मम ॥ (म. भा. ५.२.४५)

## २०६७. शदन्तविंशतेश्च ॥ ४६ ॥ (१८४७)

'तदस्मिन्नधिकम्' इत्यनुवर्तते, 'डः' इति च । शदन्तात् प्रातिपदिकाद्विंशतेश्च डः प्रत्ययो भवति 'तदस्मिन्नधिकम्' इत्येतस्मिन् विषये । त्रिंशदधिका अस्मिन् शते त्रिंशं शतम् ।

शद्ग्रहणेऽन्तग्रहणं प्रत्ययग्रहणे यस्मात्स तदादेरधिकार्थम् । एकत्रिंशं शतम्। एकचत्वारिंशं शतम् । संख्याग्रहणं च कर्त्तव्यम् । इह मा भूत् – गोत्रिंशदधिका अस्मिन् गोशते इति ।

विंशतेश्च (म. भा. ५.२.४६ वा. ३) । विंश शतम् ।

तदन्तादपीति वक्तव्यम् (वा.) । एकविंशं शतम् ।

संख्याग्रहणं च कर्त्तव्यम् (म. भा. ५.२.४६ वा. २) इह मा भूत् – गोविंशतिरधिकाऽस्मिन्गोशते इति ॥

## २०६८. संख्याया गुणस्य निमाने मयट् ॥ ४७ ॥ (१८४८)

'तदस्य' इत्यनुवर्तते 'तदस्य सञ्जातम्' (५.२.३६) इत्यतः । तदिति प्रथमासमर्थात्संख्यावाचिनः प्रातिपदिकादस्येति षष्ठ्यर्थे मयट् प्रत्ययो भवति यत्तत्प्रथमासमर्थं गुणस्य निमाने चेत्तद् वर्तते । गुणः = भागः । निमानम् = मूल्यम्। गुणो येन निमीयते मूल्यभूतेन सोऽपि सामर्थ्याद्भाग एव विज्ञायते । यवानां द्वौ भागौ निमानमस्योदश्विद्भागस्य द्विमयमुदश्विद् यवानाम् । त्रिमयम् । चतुर्मयम् ।

भागेऽपि तु विधीयमानः प्रत्ययः प्राधान्येन भागवन्तमाचष्टे । तेन सामानाधिकरण्यं भवति द्विमयमुदश्विदिति । गुणस्येति चैकत्वं विवक्षितम्, तेनेह न भवति – द्वौ भागौ यवानां त्रय उदश्वितः (म. भा.) इति ।

भूयसश्च वाचिकायाः संख्यायाः प्रत्यय इष्यते । इह न भवति – एको भागो निमानमस्येति । भूयस इति च प्रत्ययार्थात्प्रकृत्यर्थस्याधिक्यमात्रं विवक्षितम्। वहुत्वमतन्त्रम्, तेन द्विशब्दादपि भवति ।

गुणशब्दः समानावयववचनः । तेनेह न भवति – द्वौ भागौ यवानामध्यर्द्धम् उदश्वितः (म. भा.) इति ।

निमेये चापि दृश्यते (म. भा. ५.२.४७ वा. ५) निमेये वर्त्तमानायाः संख्याया निमाने प्रत्ययो दृश्यते । उदश्वितो द्वौ भागौ निमेयमस्य यवभागस्य द्विमया यवा उदश्वितः । त्रिमया यवा उदश्वितः । चतुर्मयाः (म. भा.) ।

गुणस्येति किम्? द्वौ व्रीहियवौ निमानस्योदश्वितः । निमान इति किम्? द्वौ गुणौ क्षीरस्यैकस्तैलस्य द्विगुणं तैलं पच्यते क्षीरेणेत्यत्र मा भूत् ॥

## २०६९. तस्य पूरणे डट् ॥ ४८ ॥ (१८४९)

तस्येति षष्ठीसमर्थात्संख्यावाचिनः प्रातिपदिकात् 'पूरणे' इत्यस्मिन्नर्थे डट् प्रत्ययो भवति । पूर्यतेऽनेनेति पूरणम् । येन संख्या=संख्यानं पूर्यते=सम्पद्यते स तस्याः पूरणः । एकादशानाम् पूरण एकादशः । त्रयोदशः । यस्मिन्नुपसञ्जातेऽन्या संख्या सम्पद्यते स प्रत्ययार्थः । इह न भवति – पञ्चानां मुष्टिकानां पूरणो घट इति ॥

## २०७०. नान्तादसंख्यादेर्मट् ॥ ४९ ॥ (१८५०)

'डट्' वर्तते । नकारान्तात्सम्ख्यावाचिनः प्रातिपदिकादसंख्यादेः परस्य डटो

मडागमो भवति । नान्तादिति पञ्चमी डट आगमसम्बन्धे षष्ठीं प्रकल्पयति। पञ्चानां पूरणः पञ्चमः । सप्तमः ।

नान्तादिति किम्? विंशतेः पूरणो विंशः । असंख्यादेरिति किम्? एकादशानां पूरण एकादशः ॥

## २०७१. थट् च च्छन्दसि ॥ ५० ॥ (३४९७)

नान्तादसंख्यादेः परस्य डटश्छन्दसि विषये थडागमो भवति । चकारात्पक्षे मडपि भवति । पर्णमयानि पञ्चथानि भवन्ति (काठ. सं. ८.२) । पञ्चथः (काठ. सं. ९.३) । सप्तथः (काठ. सं. ३७.११) । मट् – पञ्चममिन्द्रियमस्यापाक्रामन् (काठ. सं. ९.१२) ।

## २०७२. षट्कतिकतिपयचतुरां थुक् ॥ ५१ ॥ (१८५१)

'डट्' इत्यनुवर्तते, तदिह सप्तम्या विपरिणम्यते । षट्, कति, कतिपय, चतुर् – इत्येतेषां डटि परतस्थुगागमो भवति । कतिपयशब्दो न संख्या । तस्यास्मादेव ज्ञापकाद् डट् प्रत्ययो विज्ञायते । षण्णां पूरणः षष्ठः । कतिथः । कतिपयथः । चतुर्थः।

चतुरश्छयतावाद्यक्षरलोपश्च ( म. भा. ५.२.५१ वा.१) । चतुर्णां पूरणः तुरीयः तुर्यः ॥

## २०७३. बहुपूगगणसङ्घस्य तिथुक् ॥ ५२ ॥ (१८५२)

'डटि' इत्येव । बहु, पूग, गण, सङ्घ–इत्येतेषां डटि परतस्तिथुगागमो भवति। पूगसङ्घशब्दयोरसङ्ख्यात्वादिदमेव ज्ञापकं डटो भावस्य । बहूनां पूरणो बहुतिथः । पूगतिथः । गणतिथः । सङ्घतिथः ॥

## २०७४. वतोरिथुक् ॥ ५३ ॥ (१८५३)

'डटि' इत्येव । वतोर्डटि परत इथुगागमो भवति । वत्वन्तस्य सङ्ख्यात्वात्पूर्वेण इड्विहितस्तस्मिन्नयमागमो विधीयते । यावतां पूरणो यावतिथः । तावतिथः । एतावतिथः॥

## २०७५. द्वेस्तीयः ॥ ५४ ॥ (१८५४)

द्विशब्दात्तीयः प्रत्ययो भवति 'तस्य पूरणे' इत्यस्मिन्विषये । डटोऽपवादः । द्वयोः पूरणो द्वितीयः ॥

### २०७६. त्रेः संप्रसारणं च ॥ ५५ ॥ (१८५५)

त्रिशब्दात्तीयः प्रत्ययो भवति 'तस्य पूरणे' इत्येतद्विषये । तत्सन्नियोगेन त्रेः संप्रसारणं च भवति । डटोऽपवादः । त्रयाणां पूरणस्तृतीयः । 'हलः' (६.४.२) इति संप्रसारणस्य दीर्घत्वं न भवति । 'अणः' इति तत्रानुवर्त्तते – 'ढ्रलोपे' (६.३.१११) इत्यतः, पूर्वेण च णकारेणाण्ग्रहणम् ॥

### २०७७. विंशत्यादिभ्यस्तमडन्यतरस्याम् ॥ ५६ ॥ (१८५६)

विंशत्यादिभ्यः परस्य डटस्तमडागमो भवत्यन्यतरस्याम् । पूरणाधिकाराद् डट् प्रत्यय आगमी विज्ञायते । विंशतेः पूरणः विंशतितमः, विंशः । एकविंशतितमः, एकविंशः । त्रिविंशतितमः, त्रिविंशः । त्रिंशत्तमः, त्रिंशः । एकत्रिंशत्तमः, एकत्रिंशः।

विंशत्यादयो लौकिकाः सङ्ख्याशब्दा गृह्यन्ते, न पङ्क्त्यादिसूत्रसन्निविष्टाः। तद्ग्रहणे ह्येकविंशतिप्रभृतिभ्यो न स्यात्;ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात् (व्या. परि. ८९) । एवं च सति 'षष्ट्यादेश्चासङ्ख्यादेः' (५.२.५८) इति पर्युदासो युज्यत एव ॥

### २०७८. नित्यं शतादिमासार्धमाससंवत्सराच्च ॥ ५७ ॥ (१८५७)

शतादयः संख्याशब्दा लौकिका गृह्यन्ते । शतादिभ्यो मासार्धमास–संवत्सरशब्देभ्यश्च परस्य डटो नित्यं तमडागमो भवति । मासादयः सङ्ख्याशब्दा न भवन्ति, तेभ्योऽस्मादेव ज्ञापकाद् डट् प्रत्ययो विज्ञायते । शतस्य पूरणः शततमः । सहस्रतमः । लक्षतमः । मासस्य पूरणो मासतमो दिवसः । अर्धमासतमः। संवत्सरतमः ।

'षष्ट्यादेश्चासङ्ख्यादेः' (५.२.५८) इति वक्ष्यमाणेन सिद्धे शतादिग्रहणं सङ्ख्याद्यर्थम् । एकशततमः । द्विशततमः ॥

### २०७९. षष्ट्यादेश्चासंख्यादेः ॥ ५८ ॥ (१८५८)

षष्ट्यादेः सङ्ख्याशब्दादसङ्ख्यादेः परस्य डटो नित्यं तमडागमो भवति ।

'विंशत्यादिभ्यः' (५.२.५६) इति विकल्पेन प्राप्ते नित्यार्थम्। षष्टितमः। सप्ततितमः।

असङ्ख्यादेरिति किम्? एकषष्टः। एकषष्टितमः। एकसप्तः। एकसप्ततितमः॥

## २०८०. मतौ छः सूक्तसाम्नोः ॥ ५९ ॥ (१८५९)

'मतौ' इति मत्वर्थ उच्यते। प्रातिपदिकान्मत्वर्थे छः प्रत्ययो भवति सूक्ते सामनि चाभिधेये। मत्त्वर्थग्रहणेन समर्थविभक्तिः प्रकृतिविशेषणम्, प्रत्ययार्थ इति सर्वमाक्षिप्यते। अच्छावाकशब्दोऽस्मिन्निति अच्छावाकीयं सूक्तम्। मित्रावरुणीयम्। यज्ञायज्ञीयं साम। वारवन्तीयम्।

अनुकरणशब्दाश्च स्वरूपमात्रप्रधानाः प्रत्ययमुत्पादयन्ति, तेनानेकपदादपि सिद्धम् – अस्य वामीयम्, कयाशुभीयम् ॥

## २०८१. अध्यायानुवाकयोर्लुक् ॥ ६० ॥ (१८६०)

'मतौ' इत्येव। मत्त्वर्थ उत्पन्नस्य छस्य लुग्भवति, अध्यायानुवाकयोरभिधेययोः। केन पुनरध्यायानुवाकयोः प्रत्ययः? इदमेव लुग्वचनं ज्ञापकं तद्विधानस्य। विकल्पेन च लुगयमिष्यते। गर्दभाण्डशब्दोऽस्मिन्नस्ति गर्दभाण्दोऽध्यायः, अनुवाको वा; गर्दभाण्डीयः (म. भा.)। दीर्घजीवितः दीर्घजीवितीयः। पलितस्तम्भः, पलितस्तम्भीयः॥

## २०८२. विमुक्तादिभ्योऽण् ॥ ६१ ॥ (१८६१)

'मतौ' इत्येव, 'अध्यायानुवाकयोः' इति च। विमुक्तादिभ्यः प्रातिपदिकेभ्योऽण् प्रत्ययो भवति मत्त्वर्थे, अध्यायानुवाकयोरभिधेययोः। विमुक्तशब्दोऽस्मिन्नस्ति वैमुक्तोऽध्यायः, अनुवाको वा। दैवासुरः।

विमुक्त। देवासुर। वसुमत। सत्वत्। उपसत्। दशार्हपयस्। हविर्द्धान। मित्री। सोमापूषन्। अग्नाविष्णु। वृत्रहति। इडा। रक्षोसुर। सदसत्। परिषादक्। वसु। मरुत्वत्। पत्नीवत्। महीयल। दशार्ह। वयस्। पतत्रि। सोम। महित्री। हेतु। विमुक्तादिः ॥

## २०८३. गोषदादिभ्यो वुन् ॥ ६२ ॥ (१८६२)

'मतौ' इत्येव, 'अध्यायानुवाकयोः' इति च। गोषदादिभ्यः प्रातिपदिकेभ्यो वुन्प्रत्ययो भवति मत्त्वर्थेऽध्यायानुवाकयोः। गोषदशब्दोऽस्मिन्नस्ति

गोषदकोऽध्यायोऽनुवाको वा । इषेत्वकः । मातरिश्वकः ।

गोषद । इषेत्वा । मातरिश्वन् । देवस्यात्वा । देवीरापः । कृष्णोस्याखरेष्ठः । दैवींधियम् । रक्षोहण । अञ्जन । प्रभूत । प्रतूर्त । कृशानु । गोषदादिः ॥

## २०७४. तत्र कुशलः पथः ॥ ६३ ॥ (१८६३)

'वुन्' इत्येव । तत्रेति सप्तमीसमर्थात् पथिन्शब्दात् 'कुशलः' इत्यस्मिन्नर्थे वुन्प्रत्ययो भवति । पथि कुशलः पथकः ॥

## २०८५. आकर्षादिभ्यः कन् ॥ ६४ ॥ (१८६४)

'तत्र' इत्येव, 'कुशलः' इति च । आकर्षादिभ्यः प्रातिपदिकेभ्यः सप्तमीसमर्थेभ्यः 'कुशलः' इत्येतस्मिन्नर्थे कन्प्रत्ययो भवति । आकर्षे कुशलः आकर्षकः । त्सरुकः।

आकर्ष । त्सरु । पिपासा । पिचण्ड । अशनि । अश्मन् । विचय । चय । जय। आचय । अय । नय । निपाद । गद्गद । दीप । ह्रद । ह्राद । ह्लाद । शकुनि.। आकर्षादिः ॥

## २०८६. धनहिरण्यात्कामे ॥ ६५ ॥ (१८६५)

'तत्र' इत्येव, 'कन्' इति च । धनहिरण्यशब्दाभ्यां तत्रेति सप्तमीसमर्थाभ्याम् 'कामे' इत्यस्मिन्नर्थे कन्प्रत्ययो भवति । कामः = इच्छा, अभिलाषः । धने कामः धनको देवदत्तस्य । हिरण्यको देवदत्तस्य ॥

## २०८७. स्वाङ्गेभ्यः प्रसिते ॥ ६६ ॥ (१८६६)

'तत्र' इत्येव, 'कन्' इति च । स्वाङ्गवाचिभ्यः शब्देभ्यस्तत्रेति सप्तमीसमर्थेभ्यः 'प्रसिते' इत्येतस्मिन्नर्थे कन्प्रत्ययो भवति । प्रसितः = प्रसक्तः तत्पर इत्यर्थः । केशेषु प्रसितः केशकः । केशादि रचनायां प्रसक्त एवमुच्यते ।

बहुवचनं स्वाङ्गसमुदायशब्दादपि यथा स्यात् – दन्तौष्ठकः । केशनखकः॥

## २०८८. उदराट्ठगाद्यूने ॥ ६७ ॥ (१८६७)

'तत्र' इत्येव, 'प्रसिते' इति च । उदरशब्दात्सप्तमीसमर्थात् 'प्रसिते' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । 'आद्यूने' इति प्रत्ययार्थविशेषणम् ।

उदरेऽविजिगीषुर्भण्यते । यो बुभुक्षयाऽत्यन्तं पीड्यते स एवमुच्यते । उदरे प्रसित औदरिक आद्यूनः । [आद्यूनोऽविजिगीषुः ।] आद्यून इति किम्? उदरकः (५.२.६६)॥

### २०८९. सस्येन परिजातः ॥ ६८ ॥ (१८६८)

कन्प्रत्यय इत्येव स्वर्यते, न ठक् । निर्देशादेव तृतीया समर्थविभक्तिः । सस्यशब्दात्तृतीयासमर्थाति 'परिजातः' इत्यस्मिन्नर्थे कन् प्रत्ययो भवति । सस्यशब्दोऽयं गुणवाची । परिः=सर्वतो भावे वर्त्तते । यो गुणैः सम्बद्धो जायते, यस्य किञ्चिदपि वैगुण्यं नास्ति, तस्येदमभिधानम् । सस्येन परिजातः सस्यकः शालिः । सस्यकः साधुः । सस्यको मणिः । आकरशुद्ध इत्यर्थः ॥

### २०९०. अंशं हारी ॥ ६९ ॥ (१८६९)

अंशशब्दान्निर्देशादेव द्वितीयासमर्थाद् 'हारी' इत्येतस्मिन्नर्थे कन्प्रत्ययो भवति। अंशं हारी अंशको दायादः । अंशकः पुत्रः ।

'हारी' इत्यावश्यके णिनिः (३.३.१७०), तत्र षष्ठीप्रतिषेधात् कर्मणि द्वितीयैव भवति ॥

### २०९१. तन्त्रादचिरापहृते ॥ ७० ॥ (१८७०)

तन्त्रशब्दान्निर्देशादेव पञ्चमीसमर्थाद् 'अचिरापहृते' इत्येतस्मिन्नर्थे कन् प्रत्ययो भवति । अचिरापहृतः = स्तोककालापहृत इत्यर्थः । तन्त्रादचिरापहृतः तन्त्रकः पटः । तन्त्रकः प्रावारः । प्रत्यग्रो नव उच्यते ॥

### २०९२. ब्राह्मणकोष्णिके संज्ञायाम् ॥ ७१ ॥ (१८७१)

ब्राह्मणक, उष्णिक – इत्येतौ शब्दौ कन्प्रत्ययान्तौ निपात्येते संज्ञायां विषये। ब्राह्मणको देशः । उष्णिका यवागूः ।

यत्रायुधजीविनो ब्राह्मणाः सन्ति तत्र 'ब्राह्मणक' इति संज्ञा । अल्पान्ना यवागूः 'उष्णिका' इत्युच्यते ॥

### २०९३. शीतोष्णाभ्यां कारिणि ॥ ७२ ॥ (१८७२)

शीतोष्णशब्दाभ्यां कारिण्यभिधेये कन्प्रत्ययो भवति । क्रियाविशेषणाद् द्वितीयासमर्थादयं प्रत्ययः । शीतं करोति शीतकः = अलसः, जड उच्यते । उष्णं

करोति उष्णकः = शीघ्रकारी, दक्ष उच्यते ॥

## २०९४. अधिकम् ॥ ७३ ॥ (१८७३)

'अधिकम्' इति निपात्यते । अध्यारूढस्योत्तरपदलोपः कँश्च प्रत्ययः (म. भा.) । अधिको द्रोणः खार्याम् । अधिका खारी द्रोणेन ।

कर्त्तरि कर्मणि चाऽध्यारूढशब्दः ॥

## २०९५. अनुकाभिकाभीकः कमिता ॥ ७४ ॥ (१८७४)

अनुक, अभिक, अभीक–इत्येते शब्दाः कन्प्रत्ययान्ता निपात्यन्ते 'कमिता' इत्यस्मिन्नर्थे । अभेः पक्षे दीर्घत्वं च निपात्यते । अनुकामयते अनुकः । अभिकः। अभीकः ॥

## २०९६. पार्श्वेनान्विच्छति ॥ ७५ ॥ (१८७५)

पार्श्वशब्दात्तृतीयासमर्थाद् 'अन्विच्छति' इत्येतस्मिन्नर्थे कन्प्रत्ययो भवति । अनृजुरुपायः – पार्श्वम्, तेनार्थानन्विच्छति पार्श्वकः = मायावी, कौसृतिकः, जालिक उच्यते ॥

## २०९७. अयः शूलदण्डाजिनाभ्यां ठक्ठञौ ॥ ७६ ॥ (१८७६)

'अन्विच्छति' इत्येव । अयःशूलदण्डाजिनाभ्यां तृतीयासमर्थाभ्याम् 'अन्विच्छति' इत्येतस्मिन्नर्था ठक्ठञौ प्रत्ययौ भवतः । तीक्ष्ण उपायः = अयःशूलमुच्यते, तेनान्विच्छति आयःशूलिकः (म.भा.) । साहसिकः इत्यर्थः । दम्भः = दण्डाजिनम्, तेनान्विच्छति दाण्डाजिनिकः । दाम्भिकः इत्यर्थः ॥

## २०९८. तावतिथं ग्रहणमिति लुग्वा ॥ ७७ ॥ (१८७७)

तावतां पूरणं तावतिथम् । गृह्यतेऽनेनेति ग्रहणम् । प्रकृतिविशेषणं चैतत् । पूरणप्रत्ययान्तात्प्रातिपदिकाद् ग्रहणोपाधिकात्स्वार्थे कन्प्रत्ययो भवति । पूरणस्य प्रत्ययस्य वा लुक् । द्वितीयेन रूपेण ग्रन्थं गृह्णाति द्विकं ग्रहणम्, द्वितीयकम् । त्रिकम्, तृतीयकम् । चतुष्कम्, चतुर्थकम् ।

तावतिथेन गृह्णातीति कन्वक्तव्यः, पूरणप्रत्ययस्य च नित्यं लुक् (म. भा.

५.२.७७ वा. १,२) । षष्ठेन रूपेण ग्रन्थं गृह्णाति षट्को देवदत्तः । पञ्चकः चतुष्कः ।

इतिकरणो विवक्षार्थः, तेन ग्रन्थविषयमेव ग्रहणं विज्ञायते, नान्यविषयम् ॥

### २०९९. स एषां ग्रामणीः ॥ ७८ ॥ (१८७८)

'स' इति प्रथमासमर्थाद् 'एषामिति षष्ठ्यर्थे कन्प्रत्यो भवति, यत्तत्प्रथमासमर्थे ग्रामणीश्चेत्स भवति । ग्रामणीः = प्रधानः मुख्यः, इत्यर्थः । देवदत्तो ग्रामणीरेषां – देवदत्तकाः । यज्ञदत्तकाः ।

ग्रामणीरिति किम्? देवदत्तः शत्रुरेषाम् ॥

### २१००. शृङ्खलमस्य बन्धनं करभे ॥ ७९ ॥ (१८७९)

शृङ्खलशब्दात्प्रथमासमर्थादस्येति षष्ठ्यर्थे कन्प्रत्ययो भवति । यत्तत्प्रथमासमर्थं बन्धनं चेत्तद्भवति, यत्तदस्येति निर्दिष्टं करभश्चेत्स भवति । शृङ्खलं बन्धनमस्य करभस्य–शृङ्खलकः । उष्ट्राणां बालकाः = करभा, तेषां काष्ठमयं पाशकं पादे व्यतिषच्यते, तदुच्यते शृङ्खलमिति ।

यद्यपि रज्ज्वादिकमपि तत्रास्ति तथापि शृङ्खलमस्यास्वतन्त्रीकरणे भवति साधनमिति बन्धनमित्युच्यते ॥

### २१०१. उत्क उन्मनाः ॥ ८० ॥ (१८८०)

'उत्कः' इति निपात्यते, उन्मनाश्चेत्स भवति । उद्गतं मनो यस्य स उन्मनाः। उच्छब्दात् ससाधनक्रियावचनात् तद्वति कन्प्रत्ययो निपात्यते । उत्को देवदत्त । उत्कः प्रवासी । उत्सुक इत्यर्थ ॥

### २१०२. कालप्रयोजनाद् रोगे ॥ ८१ ॥ (१८८१)

अर्थलभ्या समर्थविभक्तिः । कालात्प्रयोजनाच्च यथायोगं समर्थविभक्तियुक्ताद् रोगेऽभिधेये कन्प्रत्ययो भवति । कालः = दिवसादिः, प्रयोजनम्=कारणम्, रोगस्य फलं वा । द्वितीयेऽह्नि भवो द्वितीयको ज्वरः । चतुर्थकः । प्रयोजनात् – विषपुष्पैर्जनितो विषपुष्पको ज्वरः । काशपुष्पकः । उष्णं कार्यमस्य उष्णकः, शीतको ज्वरः ।

उत्तरसूत्रादिह संज्ञाग्रहणमपकृष्यते । तेनायं प्रकारनियमः सर्वो लभ्यते ॥

## २१०३. तदस्मिन्नन्नं प्राये संज्ञायाम् ॥ ८२ ॥ (१८८२)

तदिति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे कन् प्रत्ययो भवति, यत्तत्प्रथमासमर्थमन्नं चेत्प्रायविषयं तद् भवति । प्रायः = बाहुल्यम् । संज्ञाग्रहणं तदन्तोपाधिः । गुडापूपाः प्रायेणान्नमस्यां पौर्णमास्यां गुडापूपिका । तिलापूपिका पौर्णमासी ।

वटकेभ्य इनिर्वक्तव्यः (म. भा. ५.२.८२ वा. १) । वटकिनी पौर्णमासी ॥

## २१०४. कुल्माषादञ् ॥ ८३ ॥ (१८८३)

कुल्माषशब्दाञ् प्रत्ययो भवति 'तदस्मिन्नन्नं प्राये संज्ञायाम्' (५.२.८२) इत्येतस्मिन्नर्थे । ञकारो वृद्धिस्वरार्थः । कुल्माषाः प्रायेणान्नमस्यां – कौल्माषी पौर्णमासी ॥

## २१०५. श्रोत्रियँश्छन्दोऽधीते ॥ ८४ ॥ (१८८४)

'श्रोत्रियन्' इति निपात्यते 'छन्दोऽधीते' इत्यस्मिन्नर्थे । नकारः स्वरार्थः । श्रोत्रियो ब्राह्मणः ।

'श्रोत्रियँश्छन्दोऽधीते' इति वाक्यार्थे पदवचनम् (म. भा. ५/२/८४ वा. १).।

छन्दसो वा श्रोत्रभावः, तदधीते इति घँश्च प्रत्ययः । (म. भा. वा. २)

कथं छन्दोऽधीते छान्दसः? वाग्रहणमनुवर्त्तते, 'तावतिथं ग्रहणमिति लुग्वा' (५.२.७७) इत्यतः ॥

## २१०६. श्राद्धमनेन भुक्तमिनिठनो ॥ ८५ ॥ (१८८५)

'श्राद्धम्' इति प्रकृतिः, 'अनेन' इति प्रत्ययार्थः, 'भुक्तम्' इति प्रकृतिविशेषणम्। श्राद्धशब्दाद्द् भुक्तोपाधिकादनेनेत्यस्मिन्नर्थे इनिठनौ प्रत्ययौ भवतः । श्राद्धशब्दः कर्मनामधेयं तत्साधने द्रव्ये वर्तित्वा प्रत्ययमुत्पादयति । श्राद्धं भुक्तमनेन श्राद्धी, श्राद्धिकः । इनिठनोः समानकालग्रहणम् (म. भा.) –अद्य भुक्ते श्राद्धे श्वः श्राद्धिक इति प्रयोगो मा भूत् ॥

### २१०७. पूर्वादिनिः ॥ ८६ ॥ (१८८६)

'अनेन' इति प्रत्ययार्थः कर्ताऽनुवर्त्तते । न च क्रियामन्तरेण कर्त्ता सम्भवतीति यां काञ्चित्क्रियामध्याहृत्य प्रत्ययो विधेयः । पूर्वाद् 'अनेन' इत्यस्मिन्नर्थे इनिः प्रत्ययो भवति । पूर्वं गतमनेन, पीतं भुक्तं, वा पूर्वी, पूर्विणौ,पूर्विणः ॥

### २१०८. सपूर्वाच्च ॥ ८७ ॥ (१८८७)

विद्यमानं पूर्व यस्मादिति सपूर्वं प्रातिपदिकम्, तस्य पूर्वशब्देन तदन्तविधिः.। सपूर्वात्प्रातिपदिकात्पूर्वशब्दान्तादनेनेत्यस्मिन्नर्थे इनिः प्रत्ययो भवति । पूर्वं कृतमनेन कृतपूर्वी कटम् । भूक्तपूर्वी ओदनम् । 'सुप्सुपा' (२.१.४) इति समासं कृत्वा तद्धित उत्पाद्यते ।

योगद्वयेन चानेन – 'पूर्वादिनिः' (५.२.८६) 'सपूर्वाच्च' (५.२.८७) इति–परिभाषाद्वयं ज्ञाप्यते 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' (शाक. परि. ६५), 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' (व्या. परि. ८९) इति ॥

### २१०९. इष्टादिभ्यश्च ॥ ८८ ॥ (१८८८)

'अनेन' इत्येव । इष्टादिभ्यः प्रातिपदिकेभ्योऽनेनेत्यस्मिन्नर्थे इनिः प्रत्ययो भवति। इष्टमनेन इष्टी यज्ञे । पूर्त्ती श्राद्धे । 'क्तस्येन्विषयस्य कर्मणि' इति सप्तम्युपसंख्यायते।

इष्ट । पूर्त । उपसादित । निगदित । परिवादित । निकथित । परिकथित । सङ्कलित । निपठित । सङ्कल्पित । अनर्चित । विकलित । संरक्षित । निपतित । पठित। परिकलित ।अर्चित । परिरक्षित । पूजित । परिगणित । उपगणित । अवकीर्ण । परित। उपकृत । उपाकृत । आयुक्त । आम्नात । श्रुत । अधीत । आसेवित । अपवारित । अवकल्पित । निराकृत । अनुयुक्त । उपनत । अनुगुणित। अनुपठित । व्याकुलित । निगृहीत । इष्टादिः ॥

### २११०. छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि ॥ ८९ ॥ (१८८९)

परिपन्थिन्, परिपरिन्–इत्येतौ शब्दौ छन्दसि विषये निपात्येते पर्यवस्थातरि वाच्ये । पर्यवस्थाता=सम्पन्नप्रतिपक्ष उच्यते । 'मा त्वा परिपन्थिनो विदन् । मा त्वा परिपरिणो विदन्' (वाज.सम्. ४.३४)

## २१११. अनुपद्यन्वेष्टा ॥ ९० ॥ (१८९०)

'अनुपदी' इति निपात्यतेऽन्वेष्टा चेत्स भवति । पदस्य पश्चादनुपदम् । अनुपदी गवाम् । अनुपदी उष्ट्राणाम् ॥

## २११२. साक्षाद् द्रष्टरि संज्ञायाम् ॥ ९१ ॥ (१८९१)

साक्षाच्छब्दोव्ययम् । तस्मादिनिः प्रत्ययो भवति द्रष्टरि वाच्ये । संज्ञाग्रहणमभिधेय नियमार्थम् । साक्षाद् द्रष्टा–साक्षी, साक्षिणौ, साक्षिणः । संज्ञाग्रहणादुपद्रष्टैवोच्यते; नदाता, ग्रहीता वा ॥

## २११३. क्षेत्रियच् परक्षेत्रे चिकित्स्यः ॥ ९२ ॥ (१८९२)

क्षेत्रियजिति निपात्यते । 'परक्षेत्रे चिकित्स्यः' इत्येतस्मिन् वाक्यार्थे पदवचनम्। परक्षेत्राद्वा तत्रेति सप्तमीसमर्थात् 'चिकित्स्यः' इत्येतस्मिन्नर्थे घच् प्रत्ययः परशब्दलोपश्च निपात्यते । परक्षेत्रे चिकित्स्यः क्षेत्रियो व्याधिः । क्षेत्रियं कुष्ठम् । परक्षेत्रम्=जन्मान्तरशरीरम्, तत्र चिकित्स्यः क्षेत्रियः । असाध्योऽप्रत्याख्येयो व्याधिरुच्यते। नामृतस्य निवर्तत इत्यर्थः ।

अथ वा – क्षेत्रियं विषम् । यत्परक्षेत्रे=परशरीरे संक्रमय्य चिकित्स्यते ।

अथ वा – क्षेत्रियाणि तृणानि । यानि सस्यार्थे क्षेत्रे जातानि चिकित्स्यानि=नाशयितव्यानि ।

अथ वा – क्षेत्रियः = पारदारिकः । परदाराः = परक्षेत्रम्, तत्र चिकित्स्यः = निग्रहीतव्यः । सर्व चैतत्प्रमाणम् ॥

## २११४. इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्र–दत्तमिति वा ॥ ९३ ॥ (१८९३)

इन्द्रियमित्यन्तोदात्तं शब्दरूपं निपात्यते । रूढिरेषा चक्षुरादीनां करणानाम् । तथा च व्युत्पत्तेरनियमं दर्शयति । इन्द्रशब्दात्षष्ठीसमर्थात् 'लिङ्गम्' इत्येतस्मिन्नर्थे घच्प्रत्ययो भवति । इन्द्रस्य लिङ्गमिन्द्रियम् । इन्द्रः = आत्मा, स चक्षुरादिना करणेनानुमीयते, नाकर्तृकं करणमस्ति । इन्द्रेण दृष्टम्, तृतीयासमर्थात्प्रत्ययः । आत्मना दृष्टमित्यर्थः । इन्द्रेण सृष्टम् । आत्मना सृष्टम्, तत्कृतेन शुभाशुभेन

कर्मणोत्पन्नमिति कृत्वा । इन्द्रेण जुष्टम्, आत्मना जुष्टम्=सेवितम्; तद्द्वारेण विज्ञानोत्पादनाद् इन्द्रेण दत्तम्, आत्मना विषयेभ्यो दत्तं यथायथं ग्रहणाय ।

इतिकरणः प्रकारार्थः । सति सम्भवे व्युत्पत्तिरन्यथापि कर्तव्या; रूढेरनियमादिति।

वाशब्दः प्रत्येकमभिसम्बध्यमानो विकल्पानां स्वातन्त्र्यं दर्शयति ॥

## २११५. तदस्यास्त्यस्मिन्निति मतुप् ॥ ९४ ॥ (१८९४)

तदिति प्रथमा समर्थविभक्तिः । अस्यास्मिन्निति प्रत्ययार्थौ । अस्तीति प्रकृतिविशेषणम् । इतिकरणो विवक्षार्थः । तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे 'अस्मिन्' इति सप्तम्यर्थे वा मतुप् प्रत्ययो भवति, यत्तत्प्रथमासमर्थमस्ति चेत्तद्भवति। अस्त्यर्थोपाधिकं चेत्तद्भवतीत्यर्थः । इतिकरणस्ततश्चेद्विवक्षा । गावोऽस्य सन्ति गोमान् देवदत्तः । वृक्षा अस्मिन् सन्ति वृक्षवान् पर्वतः । यवमान् । प्लक्षवान् ।

इतिकरणाद्विषयनियमः –

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥ (म. भा. ५.२.९४)

भूम्नि तावत् – गोमान् । निन्दायाम् – कुष्ठी, ककुदावर्तिनी । प्रशंसायाम् – रूपती कन्या । नित्ययोगे – क्षीरिणो वृक्षाः । अतिशायने – उदरिणी कन्या । ससर्गे – दण्डी, छत्री । [अस्तिविवक्षायाम्–अस्तिमान् ॥]

गुणवचनेभ्यो मतुपो लुग्वक्तव्यः (म. भा. ५.२.९४ वा. ३) । शुक्लो गुणोऽस्यास्ति शुक्लः पटः । कृष्णः । श्वेतः ॥

## २११६. रसादिभ्यश्च ॥ ९५ ॥ (१९९५)

रसादिभ्यः प्रातिपदिकेभ्यो मतुप् प्रत्ययो भवति, 'तदस्यास्त्यस्मिन्' इत्येतस्मिन्विषये । रसवान् । रूपवान् ।

किमर्थमिदमुच्यते, न पूर्वसूत्रेणैव मतुप् सिद्धः? रसादिभ्यः पुनर्वचनमन्यनिवृत्त्यर्थम् – अन्ये मत्वर्थीया मा भूवन्निति ।

कथं रूपिणी कन्या, रूपिको दारकः? प्रायिकमेतद्वचनम् ।

इतिकरणो विवक्षार्थोऽनुवर्त्तते ।

अथ वा–'गुणात्' इत्यत्र पठ्यते, तेन ये रसनेन्द्रियादिग्राह्या गुणाः, तेषामेवायं पाठः । इह मा भूत् – रूपिणी, रूपिक इति, शोभायोगः गम्यते । रसिको नट (म.

भा.) इत्यत्र भावयोगः ।

रस । रूप । गन्ध । स्पर्श । शब्द । स्नेह । 'गुणात्' (ग. सू. २१) । 'एकाचः' (ग. सू. १२२) । गुणग्रहणं रसादीनां विशेषणम् । रसादिः ॥

## २११७. प्राणिस्थादातो लजन्यतरस्याम् ॥ ९६ ॥ (१९०३)

प्राणिस्थवाचिनः शब्दादाकारान्ताल्लच् प्रत्ययो भवत्यन्यतरस्यां मत्वर्थे । चूडालः, चूडावान् । कर्णिकालः, कर्णिकावान् ।

प्राणिस्थादिति किम्? शिखावान् प्रदीपः । आदिति किम्? हस्तवान् । पादवान् ।

प्राण्यङ्गादिति वक्तव्यम् (म. भा. ५.२.९६) । इह मा भूत् – चिकीर्षाऽस्यास्ति, जिहीर्षाऽस्यास्ति चिकीर्षावान् जिहीर्षावान् ।

प्रत्ययस्वरेणैवान्तोदात्तत्वे सिद्धे चकारः – चूडालोऽस्तीत्यत्र 'स्वरितो वाऽनुदात्ते पदादो' (८.२.६) इति स्वरितबाधनार्थः ॥

## २११८. सिध्मादिभ्यश्च ॥ ९७ ॥ (१९०४)

'लजन्यतरस्याम्' इति वर्त्तते । सिध्मादिभ्यः प्रातिपदिकेभ्यो लच् प्रत्ययो भवत्यन्यतरस्यां मत्वर्थे । सिध्मलः, सिध्मवान् । गडुलः, गडुमान् ।

अन्यतरस्यांग्रहणेन मतुप्समुच्चीयते, न तु प्रत्ययो विकल्प्यते । तस्मादकारान्तेभ्य इनिठनौ प्रत्ययौ न भवतः ।

सिध्म । गडु । मणि । नाभि । जीव [बीज] । निष्पाव । पांसु । सक्तु । हनु। मांस । परशु । पार्ष्णिधमन्योर्दीर्घश्च (ग. सू. १२३) । पार्ष्णीलः । धमनीलः । पर्ण। उदक । प्रज्ञा । मण्ड । पार्श्व । गण्ड । ग्रन्थि । वातदन्तबलललाटानामूङ् च (ग. सू. १२४) । वातूलः । दन्तूलः । बलूलः । ललाटूल । जटाघटाकलाः क्षेपे (ग. सू. १२५) । जटालः । घटालः । कलालः । सक्थि । कर्ण । स्नेह । शीत । श्याम.। पिङ्ग। पित्त । शुष्क । पृथु । मृदु । मञ्जु । पत्र । चटु । कपि । कण्डु । संज्ञा । क्षुद्रजन्तूपतापयोश्चेष्यते (ग.सू. १२६) । क्षुद्रजन्तु–यूकालः । मक्षिकालः। उपतापात् – विचर्चिकालः । विपादिकालः । मूर्छालः । सिध्मादिः ॥

## २११९. वत्सांसाभ्यां कामबले ॥ ९८ ॥ (१९०५)

वत्सांसशब्दाभ्यां लच्प्रत्ययो भवति यथासंख्यं कामवति, बलवति चार्थे । वत्सलः । अंसलः ।

वृत्तिविषये वत्सांसशब्दौ स्वभावात्कामबलयोर्वर्त्तमानौ तद्वति प्रत्ययमुत्पादयतः। न ह्यत्र वत्सार्थः, अंसार्थो वा विद्यते; वत्सल इति स्नेहवानुच्यते – वत्सलः स्वामी, वत्सलः पितेति ।

अंसल इति चोपचितमांसो बलवानुच्यते । न चायमर्थो मतुपि सम्भवतीति नित्यं लजेव भवति; अन्यत्रांसवती गौः, अंसवान् दुर्बलः ।

### २१२०. फेनादिलच्च ॥ ९९ ॥ (१९०६)

फेनशब्दादिलच् प्रत्ययो भवति मत्वर्थे । चकाराल्लच्च । अन्यतरस्यांग्रहणं मतुप्समुच्चयार्थं सर्वत्रैवानुवर्तते । फेनिलः, फेनलः, फेनवान् ॥

### २१२१. लोमादिपामादिपिच्छादिभ्यः शनेलचः ॥ १०० ॥ (१९०७)

लोमादिभ्यः पामादिभ्यः पिच्छादिभ्यश्च त्रिभ्यो गणेभ्यो यथासंख्यं श, न, इलच् – इत्येते प्रत्यया भवन्ति मत्वर्थे, मतुप् च । लोमादिभ्यः शो भवति – लोमशः, लोमवान् । पामादिभ्यो नो भवति – पामनः, पामवान् । पिच्छादिभ्य इलच् भवति – पिच्छिलः, पिच्छवान् । उरसिलः, उरस्वान् ।

लोमन् । रोमन् । वल्गु । बभ्रु । हरि । कपि । शुनि । तरु । लोमादिः ।

पामन् । वामन् । हेमन् । श्लेष्मन् । कद्रु । बलि । श्रेष्ठ । पलल । सामन्। अङ्गात्कल्याणे (ग. सू. १२७)। शाकीपलालीदद्रूवां ह्रस्वत्वं च (म. भा. ५.२.१०० वा. १) । (ग.सू. १२८) । (शाकिनम् । पलालिनम् । दद्रुणम्) । विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः (म. भा. वा. २) (ग. सू. १२९) । लक्ष्म्या अच्च (ग. सू. १३०) । पामादिः ।

पिच्छ । उरस् । ध्रुवका । क्षुवका । जटाघटाकलाः क्षेपे (ग. सू. १३१) । वर्ण उदक । पङ्क । प्रज्ञा । पिच्छादिः ॥

### २१२२. प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः ॥ १०१ ॥ (१९०८)

प्रज्ञा, श्रद्धा, अर्चा, वृत्ति – इत्येतेभ्यो णः प्रत्ययो भवति मतुबर्थे । मतुप्सर्वत्र समुच्चोयते । प्राज्ञः, प्रज्ञावान् । श्राद्धः, श्रद्धावान् । आर्चः, अर्चावान्।

वार्त्तः, वृत्तिमान् ॥

## २१२३. तपःसहस्राभ्यां विनीनी ॥ १०२ ॥ (१९०९)

तपः सहस्रशब्दाभ्यां विनि इनि–इत्येतौ प्रत्ययौ भवतो मत्वर्थे । प्रत्ययार्थयोस्तु यथासंख्यं सर्वत्रैवास्मिन् प्रकरणे नेष्यते । तपोऽस्यास्मिन् वा विद्यते तपस्वी । सहस्री ।

असन्तत्वाददन्तत्वाच्च सिद्धे प्रत्यये (५.२.१२१, ११५) पुनर्वचनमणा (५.२.१०३) वक्ष्यमाणेन बाधा मा भूदिति । सहस्रात्तु ठनपि बाध्यते ॥

## २१२४. अण् च ॥ १०३ ॥ (१९१०)

तपः सहस्राभ्यामण् च प्रत्ययो भवति । तापसः । साहस्रः । योगविभाग उत्तरार्थः, यथासंख्यार्थश्च ।

अणप्रकरणे ज्योत्स्नादिभ्य उपसंख्यानम् (म. भा. ५.२.१०३ वा. २) । ज्योत्स्ना विद्यतेऽस्मिन्पक्षे ज्यौत्स्नः पक्षः । तामिस्रः । कौण्डलः । कौतपः । वैसर्पः । वैपादिकः ॥

## २१२५. सिकताशर्कराभ्यां च ॥ १०४ ॥ (१९११)

सिकताशर्कराभ्यामणप्रत्ययो भवति मत्वर्थे । सैकतो घटः । शार्करं मधु । अदेशे इहोदाहरणम् । देशे तु लुबिलचौ भविष्यतः ॥

## २१२६. देशे लुबिलचौ च ॥ १०५ ॥ (१९१२)

सिकताशर्कराभ्यां देशेऽभिधेये लुबिलचौ भवतः । चकारादण् च, मतुप् च । कस्य पुनरयं लुप्? मतुबादीनामन्यतमस्य; विशेषाभावात् । सिकता अस्मिन्विद्यन्ते सिकता देशः, सिकतिलः, सैकतः, सिकतावान् । शर्करा देशः, शर्करिलः, शार्करः, शर्करावान् । देश इति किम्? सैकतो घटः । शार्करं मधु ॥

## २१२७. दन्त उन्नत उरच् ॥ १०६ ॥ (१९१३)

'उन्नते' इति प्रकृतिविशेषणम् । दन्तशब्दादुन्नतोपाधिकादुरच् प्रत्ययोभवति मत्वर्थे । दन्ता उन्नता अस्य सन्ति दन्तुरः ।

उन्नत इति किम्? दन्तवान् ॥

## २१२८. ऊषसुषिमुष्कमधो रः ॥ १०७ ॥ (१९१४)

ऊष, सुषि, मुष्क, मधु – इत्येतेभ्यो रः प्रत्ययो भवति मत्वर्थे । ऊषरं क्षेत्रम् । सुषिरं काष्ठम् । मुष्करः पशुः । मधुरो गुडः ।

इतिकरणो विवक्षार्थः सर्वत्राभिधेयनियमं करोति । इह न भवति – ऊषोऽस्मिन् घटे विद्यते, मध्वस्मिन्घटे विद्यते (म. भा.) इति ।

रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम् (म. भा. ५.२.१०७ वा. १) खमस्यास्ति कण्ठविवरं महत् – खरः । मुखमस्यास्तीति सर्वस्मिन्वक्तव्ये मुखरः । कुञ्जावस्य स्तः – कृञ्जरः । हस्तिहन् कुञ्जशब्देनोच्यते ।

नगपांशुपाण्डुभ्यश्चेति वक्तव्यम् (म. भा. वा. २) । नगरम्, पांशुरम्, पाण्डुरम्।

कच्छवा ह्रस्वत्वं च (?) । कच्छुरम् ॥

## २१२९. द्युद्रुभ्यां मः ॥ १०८ ॥ (१९१५)

द्युद्रुशब्दाभ्यां मः प्रत्ययो भवति मत्वर्थे । द्युमः । द्रुमः । रूढिशब्दावेतौ । रूढिषु च पुनर्मतुप् न विकल्प्यते ॥

## २१३०. केशाद्वोऽन्यतरस्याम् ॥ १०९ ॥ (१९१६)

केशशब्दाद्वः प्रत्ययो भवति मत्वर्थेऽन्यतरस्याम् ।

ननु च प्रकृतमन्यतरस्यांग्रहणमनुवर्त्तत एव? मतुप्समुच्चयार्थं तदित्युक्तम्, अनेन त्विनिठनौ प्राप्येते । ततश्चातूरूप्यं भवति – केशवः, केशी, केशिकः, केशवानिति॥

वप्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम् (म. भा. ५.२.१०९ वा. १) । मणिवः । हिरण्यवः । कुरराव । कुमाराव । राजीव । कुञ्जाव । इष्टकाव.। बिम्बाव।

अर्णसो लोपश्च । (?) । अर्णवः ।

छन्दसीवनिपौ च वक्तव्यौ (म. भा.) । वश्च मतुप् च । ''रथीरभून्मुद्गलानी गविष्ठौ'' (ऋ. १०.१०२.२) । ''सुमङ्गलीरियं वधूः'' (ऋ. १०.८५.३३) । वनिप्– ''मघवानमीमहे'' (ऋ. १०.१६७.२) । वकारमतुपौ च, उद्वा च – उद्वती च ।

मेधारथाभ्यामिरन्निरचौ वक्तव्यौ (म. भा. वा. ३) । मेधिरः (ऋ. १.३१.२) ।

रथिरः (ऋ. ३.१.१७) ॥

**२१३१. गाण्ड्यजगात्संज्ञायाम् ॥ ११० ॥ (१९१७)**

गाण्डी, अजग – इत्येताभ्यां वः प्रत्ययो भवति संज्ञायां विषये मत्वर्थे । गाण्डीवं धनुः । अजगवं धनुः । ह्रस्वादपि भवति – गाण्डिवं धनुरिति । तत्र तुल्या हि संहिता दीर्घह्रस्वयोः । उभयथा च सूत्रं प्रणीतम् ॥

**२१३२. काण्डाण्डादीरन्नीरचौ ॥ १११ ॥ (१९१८)**

काण्ड, अण्ड–इत्येताभ्यां यथासंख्यमीरन्नीरचौ प्रत्ययौ भवतो मत्वर्थे । काण्डीरः। अण्डीरः ॥

**२१३३. रजःकृष्यासुतिपरिषदो वलच् ॥ ११२ ॥ (१९१९)**

रजःप्रभृतिभ्यः प्रातिपदिकेभ्यो वलच् प्रत्ययो भवति मत्वर्थे । रजस्वला स्त्री। कृषीवलः कुटुम्बी । आसुतीवलः शौण्डिकः । परिषद्वलो राजा । 'वलः' (६.३.११८) इति दीर्घत्वम् । इतिकरणो विषयनियमार्थः सर्वत्र सम्बध्यते । तेनेह न भवति – रजोऽस्मिन् ग्रामे विद्यत इति ।

वलच्प्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम् (म. भा. ५.२.११२ वा. १) । भ्रातृवलः पुत्रवलः । उत्साहवलः ॥

**२१३४. दन्तशिखात्संज्ञायाम् ॥ ११३ ॥ (१९२०)**

दन्त, शिखा – शब्दाभ्यां वलच् प्रत्ययो भवति मत्वर्थे संज्ञायां विषये । दन्तावलः सैन्यः । दन्तावलो गजः । शिखावलं नगरम् । । शिखावला स्थूणा ॥

**२१३५. ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिन-मलीमसाः ॥ ११४ ॥ (१९२१)**

ज्योत्स्नादयः शब्दा निपात्यन्ते मत्वर्थे संज्ञायां विषये । ज्योतिष उपधालोपो नश्च प्रत्ययो निपात्यते – ज्योत्स्ना चन्द्रप्रभा । तमस उपधाया इकारो रश्च– तमिस्रा रात्रिः । स्त्रीत्वमतन्त्रम् । अन्यत्रापि दृश्यते – तमिस्रं नभः । शृङ्गादिनच्प्रत्ययो निपात्यते – शृङ्गिणः । ऊर्जोऽसुगागमो निपात्यते विनिवलचौ प्रत्ययौ – ऊर्जस्वी ऊर्जस्वलः। गोर्मिनिप्रत्ययो निपात्यते – गोमी । मलशब्दादिनजीमसचौ प्रत्ययौ

निपात्येते – मलिनः, मलीमसः ॥

## २१३६. अत इनिठनौ ॥ ११५ ॥ (१९२२)

अकारान्तात्प्रातिपदिकादिनिठनौ प्रत्ययौ भवतः । दण्डी, दण्डिकः । छत्त्री, छत्त्रिकः ।

अन्यतरस्यामित्यधिकारान्मतुबपि भवति । दण्डवान् । छत्रवान् ।

तपरकरणं किम्? श्रद्धावान् ।

'एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ' । (म. भा. ५.२.११५ श्लोक०)

एकाक्षरात्तावत् – स्ववान् । खवान् । कृतः – कारकवान् । जातेः – व्याघ्रवान् । सिंहवान् । सप्तम्याम् – दण्डा अस्यां सन्ति दण्डवती शालेति ।

'इतिकरणो विषयनियमार्थः सर्वत्र सम्बध्यते' इत्युक्तम्, तेन क्वचिद्भवत्यपि – कार्यी, हार्यी, तण्डुली, तण्डुलिक इति ॥

## २१३७. व्रीह्यादिभ्यश्च ॥ ११६ ॥ (१९२३)

व्रीह्यादिभ्यः प्रातिपदिकेभ्य इनिठनौ प्रत्ययौ भवतो मत्वर्थे । मतुब्भवत्येव । व्रीही, व्रीहिकः, व्रीहिमान् । मायी, मायिकः, मायावान् ।

न च व्रीह्यादिभ्यः सर्वेभ्यः प्रत्ययद्वयमिष्यते, किं तर्हि ?

'शिखादिभ्य इनिर्वाच्य इकन्यवखादिषु' (म. भा. ५.२.११६ श्लोकभाष्यम्)

परिशिष्टेभ्य उभयम् ।

शिखा, मेखला, संज्ञा, बलाका, माला, वीणा, वडवा, अष्टका, पताका, कर्मन्, चर्मन्, हंसा इत्येतेभ्य इनिरेवेष्यते । यवखद, कुमारी, नौ–इत्येतेभ्य इकन्नेवेष्यते । परिशिष्टेभ्यो द्वावपि प्रत्ययौ भवतः ।

व्रीहिग्रहणं किमर्थम्, यावता तुन्दादिषु व्रीहिशब्दः पठ्यते, तत्र इनिठनौ चकारेण विधीयेते ? एवं तर्हि तुन्दादिषु व्रीहिग्रहणमर्थग्रहणं विज्ञायते । शालयोऽस्य सन्ति शालिलः, शाली, शालिकः, शालिमान् इति ।

व्रीहिशिखादयः पूर्वं पठिताः । यवखद । कुमारी । नौ । शीर्षान्नञः (ग. सू. १३२) । अशीर्षी, अशीर्षिकः ॥

### २१३८. तुन्दादिभ्य इलच्च ॥ ११७ ॥ (१९२४)

तुन्दादिभ्यः प्रातिपदिकेभ्य इलच् प्रत्ययो भवति मत्वर्थे । चकारादिनिठनौ मतुप् च । तुन्दिलः, तुन्दी, तुन्दिकः, तुन्दवान् । उदरिलः, उदरी, उदरिकः, उदरवान्।

तुन्द । उदर । पिचण्ड । घट । यव । व्रीहि । स्वाङ्गाद्विवृद्धौ च (ग. सू. १३३).। तुन्दादिः ॥

### २१३९. एकगोपूर्वाट्ठञ् नित्यम् ॥ ११८ ॥ (१९२५)

एकपूर्वाद् गोपूर्वाच्च प्रातिपदिकान्नित्यं ठञ् प्रत्ययो भवति मत्वर्थे । एकशतमस्यास्तीति ऐकशतिकः । ऐकसहस्रिकः । गोपूर्वाच्च – गौशतिकः । गौसहस्रिकः ।

अत इत्येव – एकविंशतिरस्यास्तीति न भवति ।

कथमैकगविकः ? समासान्ते कृते भविष्यति । कथं गौशकटिकः? शकटीशब्देन समानार्थः शकटशब्दोऽस्ति ततो भविष्यति । अवश्यं च 'अत' इत्यनुवर्त्यम्, 'द्वन्द्वोपतापगर्ह्यात्' (५.२.१२८) इत्येवमाद्यर्थम् ।

नित्यग्रहणं मतुपो बाधनार्थम् । कथमेकद्रव्यवत्त्वादिति? नैवायं साधुः । एकेन वा द्रव्यवत्त्वादिति समर्थनीयम् ॥

### २१४०. शतसहस्रान्ताच्च निष्कात् ॥ ११९ ॥ (१९२६)

शतान्तात् सहस्रान्ताच्च प्रातिपदिकाट्ठञ् प्रत्ययो भवति मत्वर्थे । तौ चेच्छतसहस्रशब्दौ निष्कात् परौ भवतः । निष्कशतमस्यास्ति नैष्कशतिकः । नैष्कसहस्रिकः ।

सुवर्णनिष्कशतमस्यास्तीत्यनभिधानान्न भवति ॥

### २१४१. रूपादाहतप्रशंसयोर्यप् ॥ १२० ॥ (१९२७)

आहतप्रशंसे प्रकृत्युपाधी । आहतप्रशंसाविशिष्टार्थे वर्त्तमानाद्रूपशब्दाद्यप् प्रत्ययो भवति मत्वर्थे । आहतं रूपमस्य रूप्यो दीनारः । रूप्यः केदारः । रूप्यं कार्षापणम्। प्रशस्तं रूपमस्यास्ति रूप्यः पुरुषः । निघातिकाताडनादिना दीनारादिषु रूपं यदुत्पद्यते तदाहतमित्युच्यते ।

आहतप्रशंसयोरिति किम्? रूपवान् ।

यप्प्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम् (म. भा. ५.२.१२० वा. १) । हिम्याः पर्वताः । गुण्या ब्राह्मणाः ॥

## २१४२. अस्मायामेधास्रजो विनिः ॥ १२१ ॥ (१९२८)

असन्तात्प्रातिपदिकात्, माया, मेधा, स्रज् – इत्येतेभ्यश्च विनिः प्रत्ययो भवति मत्वर्थे । मतुप् सर्वत्र समुच्चीयत एव । असन्तात्तावत् – यशस्वी, तपस्वी, पयस्वी। मायावी । मेधावी । स्रग्वी ।

मायाशब्दाद् व्रीह्यादिषु पाठादिनिठनावपि भवतः – मायी, मायिकः ॥

## २१४३. बहुलं छन्दसि ॥ १२२ ॥ (३४९८)

छन्दसि विषये बहुलं विनिः प्रत्ययो भवति मत्वर्थे । 'अग्ने तेजस्विन्' (तै. सं. ३.३.११) । न भवति – 'सूर्यो वर्चस्वान्।'

छन्दसि विनिप्रकरणेऽष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घत्वं चेति वक्तव्यम् (म. भा.५.२.१२२ वा. १) । अष्ट्रावी (ऋ. १०.१०२.८) । मेखलावी । द्वयावी (अ.प्रा.३.४.१) । उभयावी (ऋ. ५.७.१०) । रुजावी । हृदयावी । द्वयोभयहृदयानि दीर्घत्वं प्रयोजयन्ति ।

मर्मणश्चेति वक्तव्यम् (म. भा.) । मर्मावी ।

सर्वत्रामयस्योपसंख्यानम् (म. भा. वा.२) । छन्दसि भाषायां च । आमयावी (तै.सं. ३.२.३) ।

शृङ्गवृन्दाभ्यामारकन्वक्तव्यः (म. भा. वा.३) । शृङ्गारकः । वृन्दारकः (श. ब्रा. १४.३.११.१) ।

फलबर्हाभ्यामिनज्वक्तव्यः (म. भा. वा. ४) । फलिनः । बर्हिणः ।

हृदयाच्चालुरन्यतरस्याम् (म. भा. वा. ५) । हृदयालुः, हृदयी, हृदयिकः, हृदयवान् ।

शीतोष्णतृप्रेभ्यस्तन्न सहत इत्यालुज्वक्तव्यः (म. भा. वा. ६) । शीतं न सहते शीतालुः । उष्णालुः । तृप्रालुः ।

तन्न सहत इति हिमाच्चेलुः (म. भा. वा. ७) । हिमं न सहते हिमेलुः ।

बलादूलच् (म. भा. वा. ८) । बलं न सहते बलूलः ।

वातात्समूहे च (म. भा.वा. ९)। वातं न सहत इति च। वातानाम् समूहः, वातं न सहत इति वा वातूलः।

पर्वमरुद्भ्यां तन् 'वक्तव्यः (म. भा. वा. १०) पर्वतः (मं सं ४.१२.५)। मरुत्तः (ऐ.ब्रा. ३९.७)।

अर्थात्तदभावे इनिर्वक्तव्यः (?)। अर्थी। तदभाव इत्येव – अर्थवान्।

तदेतत्सर्वं बहुलग्रहणेन सम्पद्यते॥

## २१४४. ऊर्णाया युस्॥ १२३॥ (१९२९)

ऊर्णाशब्दाद्युस् प्रत्ययो भवति मत्वर्थे। सकारः पदसंज्ञार्थः। ऊर्णाऽस्य विद्यते ऊर्ष्णायुः (वाज. सं. १३.५०)।

केचिच्छन्दोग्रहणनुवर्तयन्ति॥

## २१४५. वाचो ग्मिनिः॥ १२४॥ (१९३०)

वाच्शब्दात् ग्मिनिः प्रत्ययो भवति मत्वर्थे। वाग्ग्मी, वाग्ग्मिनौ, वाग्ग्मिनः॥

## २१४६. आलजाटचौ बहुभाषिणि॥ १२५॥ (१९६)

वाच् शब्दात्प्रथमासमर्थादालच्, आटच् – इत्येतौ भवतो मत्वर्थे बहुभाषिण्यभिधेये। ग्मिनेरपवादः। वाचालः। वाचाटः।

कुत्सित इति वक्तव्यम् (म. भा.)। यो हि सम्यग् बहु भाषते स वाग्मीत्येव भवति (म. भा.)॥

## २१४७. स्वामिन्नैश्वर्ये॥ १२६॥ (१६३२)

'स्वामिन्' इति निपात्यते ऐश्वर्ये गम्यमाने। स्वशब्दादैश्वर्यवाचिनो मत्वर्थे आमिन्प्रत्ययो निपात्यते। स्वमस्यास्तीति = ऐश्वर्यमस्यास्तीति स्वामी, स्वामिनौ, स्वामिनः। ऐश्वर्य इति किम्? स्ववान्॥

## २१४८. अर्शआदिभ्योऽच्॥ १२७॥ (१९३३)

'अर्शस्' इत्येवमादिभ्यः प्रातिपदिकेभ्योऽच्प्रत्ययो भवति मत्वर्थे। अर्शांसि अस्य विद्यन्ते अशसः। उरसः। आकृतिगणश्चायम्।

यत्राभिन्नरूपेण शब्देन तद्वतोऽभिधानं तत्सर्वमिह द्रष्टव्यम्।

अर्शस् । उरस् । तुन्द । चतुर । पलित । जटा । घटा । अभ्र । कर्दम । आम। लवण । स्वाङ्गाद्धीनात् (ग. सू. १३४) । वर्णात् (ग. सू. १३५) । अर्शआदिः ॥

### २१४९. द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः ॥ १२८ ॥ (१९३४)

द्वन्द्वः = समासः, उपतापः = रोगः, गर्ह्यम् = निन्द्यम्, तद्विषयेभ्यः शब्देभ्यः प्राणिस्थार्थवाचिभ्य इनिः प्रत्ययो भवति मत्वर्थे । द्वन्द्वात्तावत् – कटकवलयिनी, शङ्खनूपुरिणी । उपतापात् – कुष्ठी, किलासी । गर्ह्यात् – ककुदावर्त्ती, काकतालुकी।

प्राणिस्थादिति किम्? पुष्पफलवान् वृक्षः ।

प्राण्यङ्गान्नेष्यते – पाणिपादवती ।

अत इत्यनुवर्त्तते, तेनेह न भवति – चित्रललाटिकावती ॥

सिद्धे प्रत्यये पुनर्वचनं ठनादिबाधनार्थम् ।

### २१५०. वातातिसाराभ्यां कुक् च ॥ १२९ ॥ (२९३५)

वातातिसारशब्दाभ्यामिनिः प्रत्ययो भवति, तत्सन्नियोगेन च तयोः कुगागमो भवति । वातातिसारयोरुपतापत्वात् पूर्वेणैव सिद्धे प्रत्यये कुगर्थमेवेदं वचनम् । वातकी । अतिसारकी ।

पिशाचाच्चेति वक्तव्यम् (म. भा.) । पिशाचकी वैश्रवणः (म. भा.) ।

रोगे चायमिष्यते । इह न भवति – वातवती गुहेति ॥

### २१५१. वयसिपूरणात् ॥ १३० ॥ (१९३६)

इनिरनुवर्तते । पूरणप्रत्ययान्तात् प्रातिपदिकादिनिः प्रत्ययो भवति मत्वर्थे वयसि द्योत्ये । पञ्चमो मासोऽस्यास्ति संवत्सरो वा पञ्चमी उष्ट्रः । नवमी । दशमी ।

सिद्धे सति नियमार्थ वचनम् – इनिरेव भवति, ठन्न भवतीति ।

वयसीति किम्? पञ्चमवान् ग्रामरागः ॥

### २१५२. सुखादिभ्यश्च ॥ १३१ ॥ (१९३७)

'सुख' – इत्येवमादिभ्यः प्रातिपदिकेभ्य इनिः प्रत्ययो नियम्यते मत्वर्थे । सुखी । दुःखी ।

'माला क्षेपे' इति पठ्यते, व्रीह्यादिषु च मालाशब्दोऽस्ति । तदिह क्षेपे

मतुब्बाधानार्थं वचनम् ।

सुख । दुःख । तृप्र । कृच्छ्र । आम्र । अलीक । करुणा । कृपण । सोढ । प्रमीप । शील । हल । माला क्षेपे (ग. सू. १३६) । प्रणय । सुखादिः ॥

## २१५३. धर्मशीलवर्णान्ताच्च ॥ १३२ ॥ (१९३८)

अन्तशब्दः प्रत्येकमभिसम्बध्यते, धर्माद्यन्तात्प्रातिपदिकादिनिः प्रत्ययो नियम्यते। ब्राह्मणानां धर्मो ब्राह्मणधर्मः, सोऽस्यास्तीति ब्राह्मणधर्मी । ब्राह्मणशीली। ब्राह्मणवर्णी॥

## २१५४. हस्ताज्जातौ ॥ १३३ ॥ (१९३९)

हस्तशब्दादिनिः प्रत्ययो नियम्यते मत्वर्थे, समुदायेन चेज्जातिरभिधीयते । हस्तोऽस्यास्तीति हस्ती, हस्तिनौ, हस्तिनः । जाताविति किम्? हस्तवान्पुरुषः ॥

## २१५५. वर्णाद् ब्रह्मचारिणि ॥ १३४ ॥ (१९४०)

वर्णशब्दादिनिः प्रत्ययो भवति मत्वर्थे, समुदायेन चेद् ब्रह्मचारी भण्यते । ब्रह्मचारीति त्रैवर्णिकोऽभिप्रेतः, स हि विद्याग्रहणार्थमुपनीतो ब्रह्म चरति, नियममासेवते इत्यर्थः । वर्णी, वर्णिनौ, वर्णिनः ।

ब्रह्मचारिणीति किम्? वर्णवान् ।

ब्राह्मणादयस्त्रयो वर्णा वर्णिन उच्यन्ते ॥

## २१५६. पुष्करादिभ्यो देशे ॥ १३५ ॥ (१९४१)

'पुष्कर' –इत्येवमादिभ्यः प्रातिपदिकेभ्य इनिः प्रत्ययो भवति समुदायेन चेद्देशोऽभिधीयते । पुष्करिणी । पद्मिनी ।

देश इति किम्? पुष्करवान् हस्ती ।

इनिप्रकरणे बलाद्बाहूरुपूर्वादुपसंख्यानम् (म. भा. ५.२.१३५ वा.१) । बाहुबली। ऊरुवली ।

सर्वादेश्चेति वक्तव्यम् (वा.२) । सर्वधनी । सर्वबीजी । सर्वकेशी नटः ।

अर्थाच्चासन्निहिते (वा.३) । अर्थी । असन्निहित इति किम्? अर्थवान् ।

तदन्ताच्चेति वक्तव्यम् (वा.४) धान्यार्थी । हिरण्यार्थी ।

पुष्कर । पद्म । उत्पल । तमाल । कुमुद । नड । कपित्थ । बिस । मृणाल।

कर्दम । शालूक । विगर्ह । करीष । शिरीष । यवास । प्रवास । हिरण्य । पुष्करादिः॥

### २१५७. बलादिभ्यो मतुबन्यतरस्याम् ॥ १३६ ॥ (१९४२)

बलादिभ्यः प्रातिपदिकेभ्यो मतुप्प्रत्ययो भवति । अन्यतरस्यांग्रहणेन प्रकृत इनिः समुच्चीयते । बलवान्, बली । उत्साहवान्, उत्साही ।

बल । उत्साह । उद्भाव । उद्वास । उद्वाम । शिखा । पूग । मूल । दंश । कुल। आयाम । व्यायाम । उपयाम । आरोह । अवरोह । परिणाह । युद्ध । बलादिः ॥

### २१५८. संज्ञायां मन्माभ्याम् ॥ १३७ ॥ (१९४३)

मन्नन्तात्प्रातिपदिकान्मशब्दान्ताच्च इनिः प्रत्ययो भवति मत्वर्थे, समुदायेन चेत्संज्ञा गम्यते । प्रथिमिनी । दामिनी । मशब्दान्तात् – होमिनी । सोमिनी ।

संज्ञायामिति किम्? सोमवान् । होमवान् ॥

### २१५९. कंशंभ्यां बभयुस्तितुतयसः ॥ १३८ ॥ (१९४४)

कम्, शमिति मकारान्तावुदकसुखयोर्वाचकौ; ताभ्यां ब, भ, युस्, ति, तु, त, यस् – इत्येते सप्त प्रत्यया भवन्ति मत्वर्थे । कम्बः, शम्बः । कम्भः शम्भः। कयुः, शंयुः। कन्तिः, शन्तिः । कन्तुः, शन्तुः । कन्तः, शन्तः । कंयः, शंयः ।

सकारः पदसंज्ञार्थः, तेनानुस्वारपरसवर्णौ सिद्धौ भवतः । संज्ञायां हि असत्याम् – कम्यः, शम्य इति स्यात् ॥

### २१६०. तुन्दिबलिवटेर्भः ॥ १३९ ॥ (१९४५)

तुन्दि, बलि, वटि – इत्येतेभ्यो भः प्रत्ययो भवति मत्वर्थे । तुन्दिरिति वृद्धा नाभिरुच्यते, सास्यास्तीति तुन्दिभः, बलिभः वटिभः ।

बलिशब्दः पामादिषु पठ्यते, तेन बलिन इत्यपि भवति ॥

### २१६१. अहंशुभमोर्युस् ॥ १४० ॥ (१९४६)

‘अहम्’ इति शब्दान्तरमहङ्कारे वर्त्तते, ‘शुभम्’ इत्यव्ययम् शुभपर्यायः; ताभ्यां युस्प्रत्ययो भवति मत्वर्थे । सकारः पदसंज्ञार्थः । अहंयुः । अहंकारवानित्यर्थः। शुभंयुः । कल्याणवानित्यर्थः ॥

**॥ इति श्रीजयादित्यविरचितायां काशिकावृत्तौ पञ्चमस्याध्यायस्य द्वितीयः पादः ॥ ५.२ ॥**

# अथ पञ्चमाध्याये तृतीयः पादः

## २१६२. प्राग्दिशो विभक्तिः ॥ १ ॥ (१९४७)

दिक्शब्देभ्य सप्तमीपञ्चमीप्रथमाभ्यः' (५.३.२७).। इति वक्ष्यति, प्रागेतस्माद्दिक्संशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामो विभक्तिसंज्ञास्ते वेदितव्याः । वक्ष्यति – 'पञ्चम्यास्तसिल्' (५.३.७) । ततः । यतः । कुतः ।

तसिलादीनां विभक्तित्वे प्रयोजनम् – त्यदादिविधयः इदमो विभक्तिस्वरश्च। इह । 'ऊडिदम्' (६.१.१७६) इति विभक्त्युदात्तत्वं सिद्धं भवति ।

अतः परं स्वार्थिकाः प्रत्ययाः, तेषु समर्थाधिकारः प्रथमग्रहणं च प्रतियोग्यपेक्षत्वान्नोपयुज्यत इति द्वयमपि निवृत्तम् । वावचनं तु वर्त्तते एव, तेन विकल्पेन तसिलादयो भवन्ति – कुतः, कस्मात्, कुत्र, कस्मिन्निति ॥

## २१६३. किंसर्वनामबहुभ्योऽदयादिभ्यः ॥ २ ॥ (१९४८)

'प्राग्दिशः' इत्येव । किमः सर्वनाम्नो बहुशब्दाच्च प्राग्दिशः प्रत्यया वेदितव्याः। सर्वनामत्वात्प्राप्तेग्रहणे दयादिपर्युदासः क्रियते । कुतः, कुत्र । यतः, यत्र । ततः, तत्र । बहुतः । बहुत्र ।

अदयादिभ्य इति किम्? द्वाभ्याम्, द्वयोः । प्रकृतिपरिसंख्यानं किमर्थम्? वृक्षात्, वृक्षे । प्राग्दिश इत्येव – वैयाकरणपाशः ।

सर्वनामत्वादेव सिद्धे किमो ग्रहणं दयादिपर्युदासाद् ।

बहुग्रहणे संख्याग्रहणम् (म. भा. ५.३.२ वा.१) । इह न भवति – बहोः सूपात्, बहौ सूपे इति ॥

## २१६४. इदम इश् ॥ ३ ॥ (१९४९)

'प्राग्दिशः' इत्येव । इदम इश् इत्ययमादेशो भवति प्राग्दिशीयेषु प्रत्ययेषु परतः । शकारः सर्वादेशार्थः । इह ॥

**२१६५. एतेतौ रथोः ॥ ४ ॥ (१९५०)**

रेफथकारादौ प्राग्दिशीये प्रत्यये परत इदम एतेतावादेशौ भवतः । इशोऽपवादः। रेफेऽकार उच्चारणार्थः । 'इदमो र्हिल्' (५.३.१६) एतर्हि । 'इदमस्थमुः' (५.३.२४), इत्थम् ॥

**२१६६. एतदोऽश् ॥ ५ ॥ (१९५१)**

'प्राग्दिशः' इत्येव । एतदः प्राग्दिशीये परतोऽशित्ययमादेशो भवति । शकारः सर्वादेशार्थः । अतः । अत्र ।

'एतदः' इति योगविभागः कर्त्तव्यः (म. भा.) । एतदो रथोः परत एत, इत्– इत्येतावादेशौ भवतः – एतर्हि, इत्थम् । रेफादिः 'अनद्यतने र्हिलन्यतरस्याम्' (५.३.२१) इति विद्यत एव । थमुप्रत्ययः पुनरेतद उपसंख्येयः ॥

**२१६७. सर्वस्य सोऽन्यतरस्यां दि ॥ ६ ॥ (१९५२)**

सर्वस्य 'स' इत्ययमादेशो भवति प्राग्दिशीये दकारादौ प्रत्यये परतोऽन्यतरस्याम्। सर्वदा । सदा ।

प्राग्दिशीय इत्येव – सर्वं ददातीति सर्वदा ब्राह्मणी ॥

**२१६८. पञ्चम्यास्तसिल् ॥ ७ ॥ (१९५३)**

पञ्चम्यन्तेभ्यः किंसर्वनामबहुभ्यस्तसिल्प्रत्ययो भवति । कुतः । यतः । ततः। बहुतः ॥

**२१६९. तसेश्च ॥ ८ ॥ (१९५५)**

'प्रतियोगे पञ्चम्यास्तसिः' (५.४.४४), 'अपादने चाहीयरुहोः' (५.४.४५) इति वक्ष्यति । तस्य तसेः किंसर्वनामबहुभ्यः परस्य तसिलादेशो भवति । कुत आगतः । यतः । ततः । बहुत आगतः ।

तसेस्तसिल्वचनं स्वर्थं विभक्त्यर्थं च ॥

**२१७०. पर्यभिभ्यां च ॥ ९ ॥ (१९५६)**

परि, अभि – इत्येताभ्यां तसिल् प्रत्ययो भवति ।

सर्वोभयार्थे वर्तमानाभ्यां प्रत्यय इष्यते । परितः । सर्वत इत्यर्थः । अभितः। उभयत इत्यर्थः ॥

**२१७१. सप्तम्यास्त्रल् ॥ १० ॥ (१९५७)**

किंसर्वनामबहुभ्यः सप्तम्यन्तेभ्यः त्रल् प्रत्ययो भवति । कुत्र । यत्र । तत्र । बहुत्र ॥

**२१७२. इदमो हः ॥ ११ ॥ (१९५८)**

इदमः सप्तम्यन्ताद्धः प्रत्ययो भवति । त्रलोऽपवादः । इह ॥

**२१७३. किमोऽत् ॥ १२ ॥ (१९५९)**

किमः सप्तम्यन्तादत्प्रत्ययो भवति । त्रलोऽपवादः । क्व भोक्ष्यसे । क्वाध्येष्यसे।

त्रलमपि केचिदिच्छिन्ति– कुत्र । तत्कथम् ? उत्तरसूत्राद्वावचनं पुरस्तादपकृष्यते॥

**२१७४. वा ह चच्छन्दसि ॥ १३ ॥ (१९६१)**

किमः सप्तम्यन्ताद्वा हः प्रत्ययो भवति छन्दसि विषये । यथाप्राप्तं च । क्व। कुह (ऋ. ८.७३.४) । कुत्रचिदस्य सा दूरे क्व ब्राह्मणस्य चावकाः ॥

**२१७५. इतराभ्योऽपि दृश्यन्ते ॥ १४ ॥ (१९६३)**

सप्तमीपञ्चम्यपेक्षमितरत्वम् । इतराभ्यो विभक्तिभ्यस्तसिलादयो दृश्यन्ते । दृशिग्रहणं प्रायिकविध्यर्थम्, तेन भवदादिभिर्योग एवैतद्विधानम् ।

के पुनर्भवदादयः? भवान्दीर्घायुरायुष्मान् देवानाम्प्रिय इति । स भवान् = ततो भवान्, तत्र भवान् । तं भवन्तम् = तत्र भवन्तम्, ततो भवन्तम् । तेन भवता = तत्र भवता, ततो भवता । तस्मै भवते = ततो भवते, तत्र भवते । तस्माद्भवतः – ततो भवतः, तत्र भवतः । तस्य भवतः = ततो भवतः, तत्र भवतः.। तस्मिन् भवति = ततो भवति, तत्र भवति । एवं दीर्घायुः प्रभृतिष्वप्युदाहार्यम्॥

### २१७६. सर्वैकान्यकिंयत्तदः काले दा ॥ १५ ॥ (१९६४)

'सप्तम्याः' इति वर्त्तते, न तु 'इतराभ्यः' इति । सर्वादिभ्यः प्रातिपदिकेभ्यो दा प्रत्ययो भवति । त्रलोऽपवादः । सर्वस्मिन् काले सर्वदा । एकदा । अन्यदा । कदा । तदा ।

काल इति किम्? सर्वत्र देशे ॥

### २१७७. इदमो र्हिल् ॥ १६ ॥ (१९६५)

'सप्तम्याः' इत्येव । 'काले' इति च । इदमः सप्तम्यन्तात्काले वर्त्तमानाद् र्हिल् प्रत्ययो भवति । हस्यापवादः । लकारः स्वरार्थः । अस्मिन् काले एतर्हि । काले इत्येव – इह देशे ॥

### २१७८. अधुना ॥ १७ ॥ (१९६६)

'अधुना' इति निपात्यते । इदमोऽश्भावो धुना च प्रत्ययः । अस्मिन् काले अधुना ॥

### २१७९. दानीं च ॥ १८ ॥ (१९६७)

इदमः सप्तम्यन्तात्काले वर्तमानाद्दानीं प्रत्ययो भवति । अस्मिन् काले इदानीम् ॥

### २१८०. तदो दा च ॥ १९ ॥ (१९६८)

तदः सप्तम्यन्तात्काले वर्तमानाद् दा प्रत्ययो भवति, चकाराद्दानीं च । तस्मिन्काले तदा, तदानीम् ।

तदो दावचनमनर्थकम्; विहितत्वात् ॥

### २१८१. तयोर्दार्हिलौ चच्छन्दसि ॥ २० ॥ (३४९९)

'तयोः' इति प्रातिपदिकनिर्देशः । तयोरिदमः तदश्च यथासंख्यं दा–र्हिलौ प्रत्ययौ भवतश्छन्दसि विषये । चकराद्यथाप्राप्तं च । इदावत्सरीयः (काठ. सं. १३.१५) । इदं तर्हि । इदानीम् । तदानीम् ॥

### २१८२. अनद्यतने र्हिलन्यतरस्याम् ॥ २१ ॥ (१९६९)

'छन्दसि' इति न स्वर्यते, सामान्येन विधानम् । किंसर्वनामबहुभ्यः सप्तम्यन्तेभ्योऽनद्यतने कालविशेषे वर्त्तमानेभ्यो र्हिल् प्रत्ययो भवत्यन्यतरस्याम् । कर्हि, कदा । यर्हि, यदा । तर्हि, तदा ॥

### २१८३. सद्यः परुत्परार्यैषमः परेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरे-द्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ॥ २२ ॥ (१९७०)

'सप्तम्याः' इति, 'काले' इति च वर्त्तते । सद्यःप्रभृतयः शब्दा निपात्यन्ते । प्रकृतिः, प्रत्ययः, आदेशः, कालविशेष इति सर्वमेतन्निपातनाल्लभ्यते ।

समानस्य सभावो निपात्यते द्यश्च प्रत्ययः (म. भा. ५.३.२२ वा. १), अहन्यभिधेये (म. भा.) । समानेऽहनि सद्यः ।

पूर्वपूर्वतरयोः परभावो निपात्यते, उदारी च प्रत्ययौ, सम्वत्सरेऽभिधेये (म. भा. वा. २) । पूर्वस्मिन्संवत्सरे परुत् । पूर्वतरे संवत्सरे परारि (म. भा.) ।

इदम इश्भावः समसण् प्रत्ययो निपात्यते संवत्सरेऽभिधेये (म. भा. वा.३)। अस्मिन्संवत्सरे ऐषमः (म. भा.) ।

परस्मादेद्यविः प्रत्ययोऽहनि (म. भा. वा.४) । परस्मिन्नहनि परेद्यवि ।

इदमोऽश्भावो द्यश्च (म. भ. वा.५) प्रत्ययोऽहनि (म. भा.) । अस्मिन्नहनि अद्य।

पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युस्-प्रत्ययो निपात्यतेऽहन्यभिधेये (म. भा. वा.६) । पूर्वस्मिन्नहनि पूर्वेद्युः । अन्यस्मिन्नहनि अन्येद्युः । अन्यतरस्मिन्नहनि अन्यतरेद्युः । इतरस्मिन्नहनि इतरेद्युः । अपरस्मिन्नहनि अपरेद्युः । अधरस्मिन्नहनि अधरेद्युः । उभयोरह्नोः उभयेद्युः । उत्तरस्मिन्नहनि उत्तरेद्युः ।

द्युश्चोभयाद्वक्तव्यः (म. भा. वा. ७) । उभयद्युः ॥

### २१८४. प्रकारवचने थाल् ॥ २३ ॥ (१९७१)

'किंसर्वनामबहुभ्योऽदयादिभ्यः' (५.३.२) इति वर्त्तते । 'सप्तम्याः' इति, 'काले' इति च निवृत्तम् । सामान्यस्य भेदको विशेषः = प्रकारः । प्रकृत्यर्थविशेषणं चैतत् । प्रकारवृत्तिभ्यः किंसर्वनामबहुभ्यः स्वार्थे थाल् प्रत्ययो भवति । तेन प्रकारेण तथा । यथा । सर्वथा ।

जातीयरोऽपीदृशमेव लक्षणम्, स तु स्वभावात्प्रकारवति वर्त्तते । थाल्पुनः प्रकारमात्रे ॥

### २१८५. इदमस्थमुः ॥ २४ ॥ (१९७२)

इदम्–शब्दात्प्रकारवचने थमुः प्रत्ययो भवति । थलोऽपवादः । अनेन प्रकारेण इत्थम् । उकारो मकारपरित्राणार्थः ॥

### २१८६. किमश्च ॥ २५ ॥ (१९७३)

किंशब्दात् प्रकारवचने थमुः प्रत्ययो भवति । केन प्रकारेण कथम् । योगविभाग उत्तरार्थः ॥

### २१८७. था हेतौ चच्छन्दसि ॥ २६ ॥ (३५००)

किंशब्दाद्धेतौ वर्तमानात्था प्रत्ययो भवति, चकारात्प्रकारवचने छन्दसि विषये। हेतौ तावत् – 'कथा ग्रामं न पृच्छसि' (ऋ. १०.१५६.१) । केन हेतुना न पृच्छसीत्यर्थः। प्रकारवचने – कथा देवा आसन्पुराविदः ।

विभक्तिसंज्ञायाः पूर्णोऽवधिः ॥

### २१८८. दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ॥ २७ ॥ (१९७४)

दिशां शब्दाः दिक्शब्दाः, तेभ्यो दिक्शब्देभ्यो दिग्देशकालेषु वर्तमानेभ्यः सप्तमीपञ्चमीप्रथमान्तेभ्योऽस्तातिः प्रत्ययो भवति स्वार्थे ।

यथासंख्यमत्र नेष्यते । पुरस्ताद्वसति, पुरस्तादागतः, पुरस्ताद्रमणीयम् । अधस्ताद् वसति अधस्तादागतः, अधस्ताद्रमणीयम् ।

दिक्शब्देभ्य इति किम्? ऐन्द्यां दिशि वसति । सप्तमीपञ्चमीप्रथमाभ्य इति किम्? पूर्व ग्रामं गतः । दिग्देशकालेष्विति किम्? पूर्वस्मिन्गुरौ वसति ।

इकारस्तकारपरित्राणार्थः ॥

### २१८९. दक्षिणोत्तराभ्यामतसुच् ॥ २८ ॥ १९७८)

दक्षिणोत्तराभ्यां दिग्देशकालेषु वर्तमानाभ्यां सप्तमीपञ्चमीप्रथमान्ताभ्यां

स्वार्थेऽतसुच् प्रत्ययो भवति । अस्तातेरपवादः । दक्षिणाशब्दः काले न सम्भवतीति दिग्देशवृत्तिः परिगृह्यते । दक्षिणतो वसति, दक्षिणत आगतः, दक्षिणतो रमणीयम्। उत्तरतो वसति, उत्तरत आगतः, उत्तरतो रमणीयम् ।

अकारो विशेषणार्थः – 'षष्ठ्यतसर्थप्रत्ययेन' (२.३.३०) इति ।

## २१९०. विभाषा परावराभ्याम् ॥ २९ ॥ (१९७९)

परावरशब्दाभ्यां विभाषाऽतसुच्प्रत्ययो भवति अस्तातेरर्थे । परतो वसति, परत आगतः, परतो रमणीयम् । परस्ताद्वसति, परस्तादागतः, परस्ताद्रमणीयम् । अवरतो वसति, अवरत आगतः, अवरतो रमणीयम् । अवरताद्वसति, अवरतादागतः, अवरताद्रमणीयम् ॥

## २१९१. अञ्चेर्लुक् ॥ ३० ॥ (१९८०)

अञ्चत्यन्तेभ्यो दिक्शब्देभ्य उत्तरस्यास्तातिप्रत्ययस्य लुग् भवति । प्राच्यां दिशि वसति । 'लुक्तद्धितलुकि' (१.२.४९) इति स्त्रीप्रत्ययोऽपि निवर्तते । प्राग्वसति, प्रागागतः, प्राग्रमणीयम्, प्रत्यग्वसतिः, प्रत्यगागतः, प्रत्यग्रमणीयम् ॥

## २१९२. उपर्युपरिष्टात् ॥ ३१ ॥ (१९८१)

उपरि, उपरिष्टात् – इत्येतौ शब्दौ निपात्येते अस्तातेरर्थे । ऊर्ध्वस्योपभाव रिल्–रिष्टातिलौ च प्रत्ययौ निपात्येते । उर्ध्वायां दिशि वसति उपरि वसति, उपर्यागतः, उपरि रमणीयम् । उपरिष्टाद् वसति उपरिष्टादागतः, उपरिष्टाद्रमणीयम् ।

## २१९३. पश्चात् ॥ ३२ ॥ (१९८२)

'पश्चात्' इत्ययं शब्दो निपात्यतेऽस्तातेरर्थे । अपरस्य पश्चभाव आतिश्च प्रत्ययः (म. भा.) । अपरस्याम् दिशि वसति पश्चाद्दिशि वसति, पश्चादागतः, पस्चाद्रमणीयम्।

दिक्पूर्वपदस्यापरस्य पश्चभावो वक्तव्यः, आतिश्च प्रत्ययः (म. भा. वा. १,२).। दक्षिणपश्चात् । उत्तरपश्चात् ।

अर्धोत्तरपदस्य दिक्पूर्वपदस्य पश्चभावो वक्तव्यः (म. भा. वा.३) । दक्षिणपश्चार्धः। उत्तरपश्चार्धः ।

विनापि पूर्वपदेन पश्चभवो वक्तव्यः (म. भा. वा.४)। पश्चार्धः। उत्तरपश्चार्धः॥

## २१९४. पश्च पश्चा चच्छन्दसि ॥ ३३ ॥ (३५०१)

पश्च पश्चाशब्दौ निपात्येते छन्दसि विषये अस्तातेरर्थे। चकारात् पश्चादित्यपि भवति। अपरस्य पश्चभावोऽकाराकारौ च प्रत्ययौ निपात्येते। परो व्याप्तो जायते पश्च सिंहः, पश्चा सिंहः, पश्चात्सिंहः ॥

## २१९५. उत्तराधरदक्षिणादातिः ॥ ३४ ॥ (१८९३)

उत्तराधरदक्षिणशब्देभ्य आतिः प्रत्ययो भवति अस्तातेरर्थे। उत्तरस्यां दिशि वसति उत्तराद्वसति, उत्तरादागतः, उत्तराद्रमणीयम्। अधराद्वसति, अधरादागतः, अधराद्रमणीयम्। दक्षिणाद्वसति, दक्षिणादागतः, दक्षिणाद्रमणीयम् ॥

## २१९६. एनबन्यतरस्यामदूरेऽपञ्चम्याः ॥ ३५ ॥ (११९६)

उत्तराधरदक्षिणशब्देभ्य एनप् प्रत्ययो भवत्यन्यतरस्यामस्तातेरर्थे। अदूरे चेदवधिमानवधेर्भवति। विभक्तित्रये प्रकृते 'पञ्चम्याः' इति पञ्चमी पर्युदस्यते। तेनायं सप्तमीप्रथमान्ताद्विज्ञायते प्रत्ययः। उत्तरेण वसति, उत्तराद्वसति, उत्तरतो वसति। उत्तरेण रमणीयम्, उत्तराद्रमणीयम्, उत्तरतो रमणीयम्। अधरेण वसति, अधराद्वसति, अधस्ताद्वसति। अधरेण रमणीयम्, अधराद्रमणीयम्, अधस्ताद्रमणीयम्। दक्षिणेन वसति, दक्षिणाद्वसति, दक्षिणतो वसति। दक्षिणेन रमणीयम्, दक्षिणाद्रमणीयम्, दक्षिणतो रमणीयम्।

अदूर इति किम्? उत्तराद्वसति। अपञ्चम्या इति किम्? उत्तरादागतः।

'अपञ्चम्या इति प्रागसेः' (म. भा. ५.३.३५ वा.१) असिप्रत्ययस्तु पञ्चम्यन्तादपि भवति।

केचिदिहोत्तरादिग्रहणं नानुवर्तयन्ति। दिक्शब्दमात्रात्प्रत्ययं मन्यन्ते – पूर्वेण ग्रामम्, अपरेण ग्रामम् ॥

## २१९७. दक्षिणादाच् ॥ ३६ ॥ (१९८५)

'अदूर' इति न स्वर्यते। 'अपञ्चम्याः' इति वर्तते। दक्षिणशब्दादाच्प्रत्ययो भवति अस्तातेरर्थे। दक्षिणा वसति। दक्षिणा रमणीयम्। अपञ्चम्या इत्येव – दक्षिणत आगतः।

चकारो विशेषणार्थः, 'अञ्चूत्तरपदाजाहियुक्ते' (२.३.२९) इति ॥

### २१९८. आहि च दूरे ॥ ३७ ॥ (१९८६)

दक्षिणशब्दादाहिः प्रत्ययो भवति अस्तातेरर्थे, चकारादाच्, दूरे चेदवधिमानवधेर्भवति। दक्षिणाहि वसति, दक्षिणा वसति । दक्षिणाहि रमणीयम्, दक्षिणा रमणीयम् ।

दूर इति किम्? दक्षिणतो वसति ।

अपञ्चम्या इत्येव – दक्षिणत आगतः ॥

### २१९९. उत्तराच्च ॥ ३८ ॥ (१८८७)

उत्तरशब्दादाजाही प्रत्ययौ भवतः अस्तातेरर्थे, दूरे चेदवधिमानवधेर्भवति । उत्तरा वसति, उत्तराहि वसति । उत्तरा रमणीयम्, उत्तराहि रमणीयम् ।

दूर इत्येव – उत्तरेण प्रयाति ।

अपञ्चम्या इत्येव – उत्तरादगतः ॥

### २२००. पूर्वाधरावराणामसि पुरधवश्चैषाम् ॥ ३९ ॥ (१९७५)

'अपञ्चम्याः' इति निवृत्तम् । तिसृणां विभक्तीनामिह ग्रहणम् । पूर्वाधरावराणामसिः प्रत्ययो भवति अस्तोतेरर्थे । तत्सन्नियोगेन चैषां यथासंख्यं पुर्, अध्, अव् – इत्येते आदेशा भवन्ति । असीत्यविभक्तिको निर्देशः । पुरो वसति, पुर आगतः पुरो रमणीयम् । अधो वसति, अध आगतः, अधो रमणीयम्। अवो वसति, अव आगतः, अवो र्मणीयम् ॥

### २२०१. अस्ताति च ॥ ४० ॥ (१९७६)

सप्तम्यन्तमेतत् । अस्तातिप्रत्यये परतः पूर्वादीनां यथासंख्यं पुरादय आदेशा भवन्ति । इदमेवादेशविधानं ज्ञापकम् – अस्तातिरेभ्यो भवति, असिप्रत्ययेन न बाध्यत इति । पुरस्ताद्वसति, पुरस्तादागतः, पुरस्ताद्रमणीयम् । अधस्तद्वसति, अधस्तादागतः, अधस्ताद्रमणीयम् ॥

### २२०२. विभाषाऽवरस्य ॥ ४१ ॥ (१९७७)

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते । अवरस्यास्तातौ परतो विभाषा 'अव्' इत्ययमादेशो भवति । अवस्ताद्वसति, अवस्तादागतः, अवस्ताद्रमणीयम् ।

अवरस्ताद्वसति, अवरस्तादागतः, अवरस्ताद् रमणीयम् ॥

## २२०३. संख्याया विधार्थे धा ॥ ४२ ॥ (१९८८)

संख्यावाचिभ्यः प्रातिपदिकेभ्यो विधार्थे वर्तमानेभ्यो धा प्रत्ययो भवति स्वार्थे। विधा = प्रकारः, स च सर्वक्रियाविषय एव गृह्यते । क्रियाप्रकारे वर्तमानायाः संख्याया धा प्रत्ययः । एकधा भुङ्क्ते । द्विधा गच्छति । त्रिधा । चतुर्धा । पञ्चधा.॥

## २२०४. अधिकरणविचाले च ॥ ४३ ॥ (१९८९)

'संख्यायाः' इत्येव । अधिकरणम् = द्रव्यम्, तस्य विचालः = सम्ख्यान्तरापादनम् – एकस्यानेकीकरणम्, अनेकस्य वा एकीकरणम् । अधिकरणविचाले गम्यमाने सम्ख्यायाः स्वार्थे धा प्रत्ययो भवति । एकं राशि पञ्चधा कुरु, अष्टधा कुरु, अनेकमेकधा कुरु ॥

## २२०५. एकाद्धो ध्यमुञन्यतरस्याम् ॥ ४४ ॥ (१९९०)

एकशब्दत्परस्य धाप्रत्ययस्य ध्यमुञादेशो भवत्यन्यतरस्याम् । एकधा राशिं कुरु, ऐकध्यं कुरु (म. भा.) । एकधा भुङ्क्ते, ऐकध्यं भुङ्क्ते ।

प्रकरणादेव लब्धे पुनर्धाग्रहणम् – विधार्थे विहितस्यापि यथा स्यात् । अनन्तरस्यैव ह्येतत्प्राप्नोति ॥

## २२०६. द्वित्र्योश्च धमुञ् ॥ ४५ ॥ (१९९१)

'धा' इत्यनुवर्तते । द्वित्र्योः सम्बन्धिनो धाप्रत्ययस्य विधार्थेऽधिकरणविचाले च विहितस्य धमुञादेशो भवत्यन्यतरस्याम् । चकारो विकल्पानुकर्षणार्थः । द्विधा, द्वैधम् । त्रिधा, त्रैधम् ।

धमुञन्तात्स्वार्थे डदर्शनम् (म. भा. ५.३.४५ वा. १) । मतिद्वैधानि संश्रयन्ते। मतित्रैधानि संश्रयन्ते ॥

## २२०७. एधाच्च ॥ ५६ ॥ (१९९२)

द्वित्र्योः सम्बन्धिनो धाप्रत्ययस्य एधाजादेशो भवत्यन्यतरस्याम् । चकारो विकल्पानुकर्षणार्थः । द्वेधा, द्वैधम्, द्विधा । त्रेधा, त्रैधम्, त्रिधा ॥

### २२०८. याप्ये पाशप् ॥ ४७ ॥ (१९९३)

याप्यः = कुत्सित इत्युच्यते । याप्ये वर्तमानात्प्रातिपदिकात्स्वार्थे पाशप् प्रत्ययो भवति । कुत्सितो वैयाकरणो – वैयाकरणपाशः । याज्ञिकपाशः ।

यो व्याकरणशास्त्रे प्रवीणो दुःशीलः, तत्र कस्मान्न भवति ? यस्य गुणस्य सद्भावाद् द्रव्ये शब्दनिवेशः, तस्य कुत्सायां प्रत्ययः ॥

### २२०९. पूरणाद्भागे तीयादन् ॥ ४८ ॥ (१९९४)

पूरणप्रत्ययो यस्तीयः, तदन्तात्प्रातिपदिकाद्भागे वर्तमानात् स्वार्थेऽन् प्रत्ययो भवति । स्वरार्थं वचनम् । द्वितीयो भागः द्वितीयः । तृतीयः ।

भाग इति किम्? द्वितीयम् । तृतीयम् ।

पूरणग्रहणमुत्तरार्थम्, न ह्यपूरणस्तीयोऽस्ति; मुखतीयादिरनर्थकः ॥

### २२१०. प्रागेकादशभ्योऽच्छन्दसि ॥ ४९ ॥ (१९९५)

'पूरणाद्भागे' इत्येव । प्रागेकादशभ्यः संख्याशब्देभ्यः पूरणप्रत्ययान्तेभ्यो भागे वर्तमानेभ्यः स्वार्थेऽन् प्रत्ययो भवति अच्छन्दसि विषये । स्वरार्थं वचनम् । पञ्चमः। सप्तमः । नवमः । दशमः ।

प्रागेकादशभ्य इति किम्? एकादशः, द्वादशः । अच्छन्दसीति किम्? 'पञ्चममिन्द्रियस्यापाक्रामत्' (मै. सं. १.९.४) ॥

### २२११. षष्ठाष्टमाभ्यां ञ च ॥ ५० ॥ (१९९६)

'भागे' इत्येव । 'अच्छन्दसि' इति च । षष्ठाष्टमाभ्यां भागेऽभिधेयेऽच्छन्दसि विषये ञः प्रत्ययो भवति । चकारादेश्च । षष्ठो भागः षाष्ठः, षष्ठः । आष्टमः, अष्टमः॥

### २२१२. मानपश्वङ्गयोः कन्लुकौ च ॥ ५१ ॥ (१९९७)

'भागे' इत्येव । षष्ठाष्टमाभ्यां यथासंख्यं कन्लुकौ च भवतो मानपश्वङ्गयोर्भागयोरभिधेययोः । षष्ठको भागो मानं चेत्तद्भवति । अष्टमो भागः पश्वङ्गं चेत्तद्भवति । कस्य लुक्? ञस्य लुक्, अनो वा । चकाराद्यथा प्राप्तं च । षाष्ठः, षष्ठः । आष्टमः, अष्टमः ।

मानपश्वङ्गयोरिति किम्? षाष्ठः, षष्ठः । आष्टमः, अष्टमः ॥

## २२१३. एकादाकिनिच्चासहाये ॥ ५२ ॥ (१९९८)

एकशब्दादसहायवचिनः स्वार्थे आकिनिच् प्रत्ययो भवति। चकारात्कन्लुकौ च । आकिनिचः, कनो वा लुग्विज्ञायते । स च विधानसामर्थ्यात्पक्षे भवति । एकाकी, एककः, एकः ।

असहायग्रहणं संख्याशब्दनिरासार्थम् । तदुपादाने हि द्विबह्वोर्न स्यात् – एकाकिनौ, एकाकिनः ॥

## २२१४. भूतपूर्वे चरट् ॥ ५३ ॥ (१९९९)

पूर्वं भूत इति विगृह्य 'सुप्सुपा' इति समासः। भूतपूर्वशब्दोऽतिक्रान्त–कालवचनः। प्रकृतिविशेषणं चैतत्। भूतपूर्वत्वविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात्स्वार्थे चरट् प्रत्ययो भवति । आढ्यो भूतपूर्वः आढ्यचरः । सुकुमारचरः। टकारो ङीबर्थः – आढ्यचरी ॥

## २२१५. षष्ठ्या रूप्य च ॥ ५४ ॥ (२०००)

षष्ठ्यन्तात्प्रातिपदिकाद्रूप्यः प्रत्ययो भवति, चकाराच्चरट् च । षष्ठ्यन्तात्प्रात्ययविधानात्सम्प्रति भूतपूर्वग्रहणं प्रत्ययार्थस्य विशेषणम्, न तु पकृत्यर्थविशेषणम् । देवदत्तस्य भूतपूर्वो गौः देवदत्तरूप्यः । देवदत्तचरः ।

## २२१६. अतिशायने तमबिष्ठनौ ॥ ५५ ॥ (२००१)

अतिशयनमतिशायनम् = प्रकर्षः । निपातनाद्दीर्घत्वम् । प्रकृत्यर्थविशेषणं चैतत्। अतिशायनविशिष्टेऽर्थे वर्तमानात्प्रातिपदिकात् स्वार्थे तमबिष्ठनौ प्रत्ययौ भवतः । प्रकृत्यर्थविशेषणं च स्वार्थिकानां द्योत्यं भवति । सर्वे इमे आढ्याः, अयमेषामतिशयेनाढ्य आढ्यतमः । दर्शनीयतमः । सुकुमारतमः । सर्व इमे पटवः, अयमेषामतिशयेन पटुः पटिष्ठः । लघिष्ठ । गरिष्ठः ।

यदा च प्रकर्षवतां पुनः प्रकर्षो विवक्ष्यते तदातिशायिकान्तादपरः प्रत्ययो भवत्येव – 'देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे' (वाज. सं. १.१), 'युधिष्ठिरः श्रेष्ठतमः कुरूणामिति ॥

### २२१७. तिङश्च ॥ ५६ ॥ (२००२)

तिङन्ताच्चातिशायने द्योत्ये तमप् प्रत्ययो भवति । 'ङ्याप्प्रातिपदिकात्' (४.१.१) इत्यधिकारात् तिङो न प्राप्नोतीति इदं वचनम् । सर्व इमे पचन्तीति, अयमेषामतिशयेन पचति पचतितमाम् । जल्पतितमाम् ।

इष्ठन् नोदाह्रियते; गुणवचने तस्य नियतत्वात् ॥

### २२१८. द्विवचनविभज्योपपदे तरबीयसुनौ ॥ ५७ ॥ (२००५)

द्वयोरर्थयोर्वचनं द्विवचनम् । विभक्तव्यः=विभज्यः । निपातनाद् यद्भवति । द्व्यर्थे विभज्ये चोपपदे प्रातिपदिकात् तिङन्ताच्चातिशायने तरबीयसुनौ प्रत्ययौ भवतः । तमबिष्ठनोरपवादः । यथासंख्यमत्र नेष्यते । द्वाविमावाढ्यौ, अयमनयोरतिशयेनाढ्य आढ्यतरः । सुकुमारतरः । पचतितराम् । जल्पतितराम् ।

ईयसुन्खल्वपि–द्वाविमौ पटू, अयमनयोरतिशयेन पटुः पटीयान् । लधीयान्।

विभज्ये चोपपदे – माथुराः पाटलिपुत्रकेभ्य आढ्यतराः । दर्शनीयतराः । पटीयांसः । लघीयांसः ॥

### २२१९. अजादी गुणवचनादेव ॥ ५८ ॥ (२००६)

इष्ठन्नीयसुनावजादी सामान्येन विहितौ, तयोरयं विषयनियमः क्रियते – गुणवचनादेव भवतस्तौ नान्यस्मादिति । पटीयान् । लघीयान् । पटिष्ठः । लघिष्ठः।

इह न भवतः – पाचकतरः, पाचकतम इति ।

एवकार इष्टतोऽवधारणार्थः – प्रत्ययनियमोऽयम्, न प्रकृतिनियम इति । पटुतरः, पटुतमः ॥

### २२२०. तुश्छन्दसि ॥ ५९ ॥ (२००७)

'तुः' इति तृन्तृचोः सामान्येन ग्रहणम् । त्रन्ताच्छन्दसि विषये अजादी प्रत्ययौ भवतः । पूर्वेण गुणवचनादेव नियमे कृते छन्दसि प्रकृत्यन्तराण्यभ्यनुज्ञायन्ते – त्रन्तादप्यजादी भवत इति । 'आसुतिं करिष्ठः' (ऋ. ७.९७.७) । दोहीयसी धेनुः । 'भस्याऽढे तद्धिते' (६.३.३५) इति पुंवद्भावे कृते 'तुरिष्ठेमेयस्सु' (३.४.१५४) इति तृचो निवृत्तिः ॥

## २२२१. प्रशस्यस्य श्रः ॥ ६० ॥ (२००९)

प्रशस्यशब्दस्य 'श्र' इत्ययमादेशो भवति अजाद्योः प्रत्यययोः परतः । 'अजादी' इति प्रकृतस्य सप्तमी विभक्तिर्विपरिणम्यते ।

ननु च प्रशस्यशब्दस्यगुणवचनत्वादजादी न सम्भवतः? एवं तर्हि आदेशविधानसामर्थ्यात् तद्विषयो नियमो न प्रवर्तते – अजादी गुणवचनादेवेति ।

एवमुत्तरेष्वपि योगेषु विज्ञेयम् ।

सर्व इमे प्रशस्याः अयमेषामतिशयेन प्रशस्यः श्रेष्ठः । उभाविमौ प्रशस्यौ, अयमनयोरतिशयेन प्रशस्यः श्रेयान् । अयमस्मात् श्रेयान् । 'प्रकृत्यैकाच्' (६.४.१६३) इति प्रकृतिभावाच्छ्रशब्दस्य टिलोप–यस्येतिलोपौ न भवतः ॥

## २२२२. ज्य च ॥ ६१ ॥ (२०११)

प्रशस्यशब्दस्य 'ज्य' इत्ययमादेशो भवति अजाद्योः प्रत्यययोः परतः । सर्व इमे प्रशस्याः, अयमेषमतिशयेन प्रशस्यः ज्येष्ठः । उभाविमौ प्रशस्यौ, अयमनयोरतिशयेन प्रशस्यः ज्यायान् । अयमस्मात् ज्यायान् । 'ज्यादादीयसः' (६.४.१६०) इत्याकारः॥

## २२२३. वृद्धस्य च ॥ ६२ ॥ (२०१३)

वृद्धशब्दस्य च 'ज्य' इत्ययमादेशो भवत्यजाद्योः प्रत्यययोः परतः । तयोश्च सत्त्वं नियमाभावेन पूर्ववत् ज्ञाप्यते । सर्व इमे वृद्धाः, अयमेषामतिशयेन वृद्धः – ज्येष्ठः । उभाविमौ वृद्धौ, अयमनयोरतिशयेन वृद्धः ज्यायान् । अयमस्मात् ज्यायान्।

'प्रियस्थिर' (६.४.१५७) इत्यादिना वृद्धशब्दस्य वर्षादेशो विधीयते । वचनसामर्थ्यात्पक्षे सोऽपि भवति वर्षिष्ठः, वर्षीयानिति ॥

## २२२४. अन्तिकबाढयोर्नेदसाधौ ॥ ६३ ॥ (२०१४)

अन्तिकबाढयोर्यथासंख्यं नेद, साध – इत्येतावादेशौ भवतोऽजाद्योः परतः। तयोश्च सत्त्वं पूर्ववद्विज्ञेयम् ।

निमित्तभूतयोर्यथासंख्यमत्र नेष्यते ।

सर्वाणीमान्यन्तिकानि, इदमेषामतिशयेनान्तिकं नेदिष्ठम् । उभे इमे अन्तिके,

इदमनयोरतिशयेन नेदीयः । इदमस्मान्नेदीयः सर्व इमे बाढमधीयते, अयमेषामतिशयेन बाढमधीते साधिष्ठः । उभाविमौ बाढमधीयाते, अयमनयोरतिशयेन बाढमधीते साधीयः। अयमस्मात् साधीयोऽधीते ॥

## २२२५. युवाल्पयोः कनन्यतरस्याम् ॥ ६४ ॥ (२०१९)

युवाल्पशब्दयोः कनित्ययमादेशो भवत्यन्यतरस्यामजाद्योः परतः । तयोश्च सत्त्वं पूर्ववज्ज्ञेयम् । सर्व इमे युवानः, अयमेषामतिशयेन युवा कनिष्ठः । द्वाविमौ युवानौ, अयमनयोरतिशयेन युवा कनीयान् । यविष्ठः, यवीयान् । सर्व इमेऽल्पाः, अयमेषामतिशयेनाल्पः कनिष्ठः । उभाविमावल्पौ, अयमनयोरतिशयेनाल्पः कनीयान्। अयमस्मात्कनीयान् अल्पिष्ठः अल्पीयानिति वा ॥

## २२२६. विन्मतोर्लुक् ॥ ६५ ॥ (२०२०)

विनो मतुपश्च लुग् भवति अजाद्योः प्रत्यययोः परतः । इदमेव वचनं ज्ञापकमजादिसभ्दावस्य । सर्वे इमे स्रग्विणः, अयमेषामतिशयेन स्रग्वी स्रजिष्ठः। उभाविमौ स्रग्विणौ, अयमनयोरतिशयेन स्रग्वी स्रजीयान् । अयमस्मात् स्रजीयान्। सर्व इमे त्वग्वन्तः, अयमेषामतिशयेन त्वग्वी त्वचिष्ठः । उभाविमौ त्वग्वन्तौ, अयमनयोरतिशयेन त्वग्वान् त्वचीयान् । अयमस्मात्त्वचीयान् ॥

## २२२७. प्रशंसायां रूपप् ॥ ६६ ॥ (२०२१)

प्रशंसा=स्तुतिः । प्रकृत्यर्थस्य विशेषणं चैतत् । प्रशंसाविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे रूपप् प्रत्ययो भवति । स्वार्थिकाश्च प्रत्ययाः प्रकृत्यर्थविशेषस्य द्योतका भवन्ति । प्रशस्तो वैयाकरणो वैयाकरणरूपः । याज्ञिकरूपः ।

प्रकृत्यर्थस्य वैशिष्ट्ये प्रशंसा भवति । वृषलरूपोऽयं यः पलाण्डुना सुरां पिबति (म. भा.) । चोररूपः । दस्युरूपः, योऽक्ष्णोरप्यञ्जनमपहरेत् ।

'तिङश्च' (५.३.५६) इत्यनुवर्त्तते – पचतिरूपम् । पचतोरूपम् । कियाप्रधानमाख्यातम् ।

एका च क्रियेति रूपप्प्रत्ययान्ताद् द्विवचनबहुवचने न भवतः ।

नपुंसकलिङ्गं तु भवति; लोकाश्रयत्वाल्लिङ्गस्य ॥

## २२२८. ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ॥ ६७ ॥ (२०२२)

सम्पूर्णता = पदार्थानां समाप्तिः । स्तोकेनासम्पूर्णता = ईषदसमाप्तिः । प्रकृत्यर्थविशेषणं चैतत् । ईषदसमाप्तिविशिष्टे स्वार्थे वर्तमानात् कल्पब्, देश्य, देशीयर – इत्येते प्रत्यया भवन्ति । ईषदसमाप्तः पटुः पटुकल्पः । पटुदेश्यः । पटुदेशीयः । मृदुकल्पः । मृदुदेश्यः । मृदुदेशीयः ।

'तिङश्च' (५.३.४६) इत्येव – पचतिकल्पम् । जल्पतिकल्पम् ॥

## २२२९. विभाषा सुपो बहुच् पुरस्तात्तु ॥ ६८ ॥ (२०२३)

ईषदसमाप्तिविशिष्टेऽर्थे वर्तमानात् सुबन्ताद्विभाषा बहुच् प्रत्ययो भवति । स तु पुरस्तादेव भवति, न परतः । चित्करणमन्तोदात्तार्थम् । ईषदसमाप्तः पटुः बहुपटुः । बहुमृदुः । बहुगुडो द्राक्षा ।

विभाषावचनात् कल्पबादयोऽपि भवन्ति ।

सुब्ग्रहणम् – तिङन्तान्मा भूदिति ॥

## २२३०. प्रकारवचने जातीयर् ॥ ६९ ॥ (२०२४)

सामान्यस्य भेदको विशेषः = प्रकारः, तस्य वचने । प्रकृत्यर्थविशेषणं चैतत्। सुबन्तात्प्रकारविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे जातीयर् प्रत्ययो भवति । प्रकारवति चायं प्रत्ययः । थाल्पुनः प्रकारमात्र एव भवति । पटुप्रकारः पटुजातीयः। मृदुजातीयः । दर्शनीयजातीयः ॥

## २२३१. प्रागिवात्कः ॥ ७० ॥ (२०२५)

'इवे प्रतिकृतौ' (५.३.९६) इति वक्ष्यति, प्रागेतस्मादिवसंशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामः, कप्रत्ययस्तेष्वधिकृतो वेदितव्यः । वक्ष्यति – 'अज्ञाते' (५.३.७३) इति – अश्वकः । गर्दभकः ।

तिङन्तादयं प्रत्ययो नेष्यते । अकजिष्यते ।

'तिङश्च' (५.३.५६) इत्यनुवृत्तमुत्तरसूत्रेणैव सम्बन्धनीयम् ॥

## २२३२. अव्ययसर्वनाम्नामकच्प्राक् टेः ॥ ७१ ॥ (२०२६)

'तिङश्च' (५.३.५६) इत्येव । अव्ययानां सर्वनाम्नां च प्रागिवीयेष्वर्थेष्वकच्प्रत्ययो

भवति, स च प्राक् टेः, न परतः । कस्यापवादः । उच्चकैः । नीचकैः । शनकैः। सर्वनाम्नः खल्वपि – सर्वके । विश्वके । उभयके ।

'प्रातिपदिकात्' , 'सुपः' –इति द्वयमिहानुवर्तते, तत्राभिधानतो व्यवस्था भवति – क्वचित्प्रातिपदिकस्य टेः प्राक् प्रत्ययो भवति, क्वचित्सुबन्तस्य टेः प्राक्प्रत्ययः। युष्मकाभिः, अस्मकाभिः , युष्मकासु, अस्मकासु, युवकयोः, आवकयोः – इत्यत्र प्रातिपदिकस्य । त्वयका, मयका, त्वयकि, मयकि – इत्यत्र सुबन्तस्य.।

अकच्प्रकरणे तूष्णीमः काम् प्रत्ययो वक्तव्यः (म. भा. ५.३.७२ वा.१) । स च मित्त्वादन्त्यादचः परो भवति । तूष्णीकामास्ते । तूष्णीकां तिष्ठति ।

शीले को मलोपश्च वक्तव्यः (म. भा. वा.२) । तूष्णींशीलः तूष्णीकः ।

'तिङश्च' (५.३.५६) इति प्रकृतमत्र सम्बध्यते – पचतकि । जल्पतकि ॥

## २२३३. कस्य च दः ॥ ७२ ॥ (२०२७)

ककारान्तस्य प्रातिपदिकस्याकच्सन्नियोगेन दकारादेशो भवति । चकारः सन्नियोगार्थः । सामर्थ्याच्चाव्ययग्रहणमनुवर्तते, न सर्वनामग्रहणम्; ककारान्तस्य सर्वनाम्नोऽसम्भवात् धिक्–धकित् । हिरुक् – हिरकुत् । पृथक् – पृथकत् ॥

## २२३४. अज्ञाते ॥ ७३ ॥ (२०२८)

अज्ञातविशेषः = अज्ञातः । अज्ञातत्वोपाधिकेऽर्थे वर्तमानात्प्रातिपदिकात् तिङन्ताच्च स्वार्थे यथाविहितं प्रत्ययो भवति । स्वेन रूपेण ज्ञाते पदार्थे विशेषरूपेणाज्ञाते प्रत्ययविधानमेतत् । कस्यायमश्व इति स्वस्वामिसम्बन्धेनाज्ञातेऽश्वे प्रत्ययः – अश्वकः। गर्दभकः । उष्ट्रकः ।

एवमन्यत्रापि यथायोगमज्ञातता विज्ञेया । उच्चकैः । नीचकैः । सर्वके । विश्वके । पचतकि । जल्पतकि ॥

## २२३५. कुत्सिते ॥ ७४ ॥ (२०२९)

कुत्सितः = गर्हितः, निन्दितः । प्रकृत्यर्थविशेषणं चैतत् । कुत्सितत्वोपाधिकेऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे यथाविहित्तं प्रत्ययो भवति । कुत्सितोऽश्वः अश्वकः। उष्ट्रकः । गर्दभकः । नीचकैः । सर्वके । विश्वके । पचतकि । जल्पतकि ॥

## २२३६. संज्ञायां कन् ॥ ७५ ॥ (२०३०)

'कुत्सिते' इत्येव । कुत्सितत्वोपाधिकेऽर्थे वर्तमानात् प्रातिपदिकात् कन् प्रत्ययो भवति, प्रत्ययान्तेन चेत्संज्ञा गम्यते । कस्यापवादः । शूद्रकः । धारकः । पूर्णकः ॥

## २२३७. अनुकम्पायाम् ॥ ७६ ॥ (२०३१)

कारुण्येनाभ्युपपत्तिः परस्य = अनुकम्पा, तस्यां गम्यमानायां सुबन्तात्तिङन्ताच्च यथाविहितं प्रत्ययो भवति । पुत्रकः । वत्सकः । दुर्बलकः । बुभुक्षितकः । स्वपितकि। श्वसितकि ॥

## २२३८. नीतौ च तद्युक्तात् ॥ ७७ ॥ (२०३२)

सामदानादिरुपायः = नीतिः । नीतौ च गम्यमानायां तद्युक्तादनुकम्पायुक्ताद्यथा–विहितं प्रत्ययो भवति । हन्त ते धानकाः । हन्त ते तिलकाः। एहकि । अद्धकि । अनुकम्प्यमानो दानेनाराधयति ।

पूर्वेण प्रत्यासन्नानुकम्पासम्बन्धाद् अनुकम्प्यमानादेव प्रत्ययो विहितः; सम्प्रति व्यवहितादपि यथा स्यादिति वचनम् ॥

## २२३९. बह्वचो मनुष्यनाम्नष्ठज्वा ॥ ७८ ॥ (२०३३)

'अनुकम्पायाम्' (५.३.७६) इति, 'नीतौ च तद्युक्तात्' (५.३.७७) इति च वर्त्तते । बह्वचः प्रातिपदिकान्मनुष्यनामधेयाद्वा ठच्प्रत्ययो भवति अनुकम्पायां गम्यमानायां नीतौ च, देविकः । देवदत्तकः । यज्ञिकः, यज्ञदत्तकः । बह्वच इति किम्? दत्तकः । गुप्तकः । मनुष्यनाम्न इति किम्? मद्रबाहुकः । भद्रबाहुकः ॥

## २२४०. घनिलचौ च ॥ ७९ ॥ (२०३४)

'अनुकम्पायाम्' इत्यादि सर्वमनुवर्तते । पूर्वेण ठचि विकल्पेन प्राप्ते वचनम्। बह्वचो मनुष्यनाम्नो घन्, इलच् – इत्येतौ प्रत्ययौ भवतः । चकाराद्यथाप्राप्तं च.। देवियः, देविलः, देविकः, देवदत्तकः । यज्ञियः, यज्ञिलः, यज्ञिकः, यज्ञदत्तकः ॥

## २२४१. प्राचामुपादेरडज्वुचौ च ॥ ८० ॥ (२०३६)

पूर्ववत् सर्वमनुवर्तते । उपशब्द आदिर्यस्य तस्मादुपादेः प्रातिपदिकाद् बह्वचो

मनुष्यनाम्नः – अडच्, वुच्–प्रत्ययौ भवतः । चकाराद् घनिलचौ प्रत्ययौ भवतः, ठच्च वा । उपडः, उपकः, उपियः, उपिलः, उपिकः, उपेन्द्रदत्तकः ।

प्राचांग्रहणं पूजार्थम् । 'वा' इत्येव हि वर्तते ॥

## २२४२. जातिनाम्नः कन् ॥ ८१ ॥ (२०३७)

'बह्वचः' इति नानुवर्तते । सामान्येन विधानम् । जातिशब्दो यो मनुष्यनामधेयो व्याघ्र, सिंह – इत्येवमादिः, तस्मादनुकम्पायां नीतौ च कन्प्रययो भवति । व्याघ्रकः। सिंहकः । शरभकः ।

वावचनानुवृत्तेर्यथादर्शनम् अन्योऽपि भवति – व्याघ्रिलः, सिंहिलः ।

नामग्रहणं स्वरूपनिवृत्त्यर्थम् ॥

## २२४३. अजिनान्तस्योत्तरपदलोपश्च ॥ ८२ ॥ (२०३९)

'कन्' इत्यनुवर्तते, 'मनुष्यनाम्नः' इति च । अजिनशब्दान्तात् प्रातिपदिकान्मनुष्यनाम्नोऽनुकम्पायां कन्प्रत्ययो भवति, तस्य चोत्तरपदलोपः । व्याघ्राजिनो नाम कश्चिन्मनुष्यः सोऽनुकम्पितः व्याघ्रकः । सिंहकः ॥

## २२४४. ठाजादावूर्ध्वं द्वितीयादचः ॥ ८३ ॥ (२०३५)

'लोप' इत्यनुवर्तते । अस्मिन्प्रकरणे यष्ठोऽजादिश्च प्रत्ययस्तस्मिन् परतः प्रकृतेर्द्वितीयादच ऊर्ध्वं यच्छब्दरूपं तस्य लोपो भवति । ऊर्ध्वग्रहणं सर्वलोपार्थम्। अनुकम्पितो देवदत्तः देविकः, देवियः, देविलः । यज्ञिकः, यज्ञियः यज्ञिलः । उपडः, उपकः, उपियः, उपिलः, उपिकः ।

ठग्रहणमुको द्वितीयत्वे कविधानार्थम् (म. भा. ५.३.८३ वा.१) । अजादिलक्षणे हि माथितिकादिवत्प्रसङ्गः । वायुदत्तः, वायुकः । पितृदत्तः, पितृकः ।

चतुर्थादच ऊर्ध्वस्य लोपो वक्तव्यः (म. भा.) । अनुकम्पितो बृहस्पतिदत्तः बृहस्पतिकः, बृहस्पतियः, बृहस्पतिलः ।

अनजादौ विभाषा लोपो वक्तव्यः (म. भा.) । देवदत्तकः, देवकः । यज्ञदत्तकः, यज्ञकः ।

लोपः पूर्वपदस्य च ठाजादावनजादौ च वक्तव्यः (म. भा.) । दत्तिकः, दत्तिलः, दत्तियः, दत्तकः ।

विनाऽपि प्रत्ययेन पूर्वोत्तरपदयोर्विभाषा लोपो वक्तव्यः (म. भा.) । देवदत्तो दत्तः, देव इति वा ।

उवर्णाल्ल इलस्य च (म. भा.) । भानुदत्तो भानुलः । वसुदत्तो वसुलः ।

चतुर्थादनजादौ च लोपः पूर्वपदस्य च ।

अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च ॥ (म. भा. पूर्वाचार्यकारिका)

द्वितीयादचो लोपे सन्ध्यक्षरद्वितीयत्वे तदादेर्लोपवचनम् (मा. भा. ५.३.८३ वा.३) । लहोडः, लहिकः । कहोडः, कहिकः ।

एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः (म. भा. ५.३.८४ वा.७) । वागाशीः वाचिकः । स्रचिकः । त्वचिकः ।

कथं षडंगुलिदत्तः षडिक इति? षषष्ठाजादिवचनात्सिद्धम् (म. भा. ५.३.८४ वा.८) ॥

## २२४५. शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात् ॥ ८४ ॥ (२०३८)

शेवलादीनां मनुष्यनाम्नां ठाजादौ प्रत्यये परतः तृतीयादच ऊर्ध्वस्य लोपो भवति । पूर्वस्यायमपवादः । अनुकम्पितः शेवलदत्तः शेवलिकः, शेवलियः, शेवलिलः। सुपरिकः, सुपरियः, सुपरिलः । विशालिकः, विशालियः, विशालिलः। वरुणिकः, वरुणियः, वरुणिलः । अर्यमिकः, अर्यमियः, अर्यमिलः ।

शेवलादीनां तृतीयादचो लोपः स चाकृतसन्धीनामिति वक्तव्यम् (?) । शेवलेन्द्रदत्तः, सुपर्याशीर्दत्तः–शेवलिकः, सुपरिक इति यथा स्यात्; शेवलयिकः, सुपर्यिक इति मा भूत् ॥

## २२४६. अल्पे ॥ ८५ ॥ (२०४०)

परिमाणापचये अल्पशब्दः प्रकृतिविशेषणं चैतत् । अल्पत्वविशिष्टेऽर्थे वर्तमानात्प्रातिपदिकाद्यथाविहितं प्रत्ययो भवति । अल्पं तैलं तैलकम् । घृतकम् । सर्वकम् । विश्वकम् । उच्चकैः । नीचकैः । पचतकि । जल्पतकि ॥

## २२४७. ह्रस्वे ॥ ८६ ॥ (२०४१)

ह्रस्वत्वविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकाद् यथाविहितं प्रत्ययो भवति ।

दीर्घप्रतियोगी ह्रस्वः । ह्रस्वो वृक्षो वृक्षकः । प्लक्षकः । स्तम्भकः ॥

### २२४८. संज्ञायां कन् ॥ ८७ ॥ (२०४२)

'ह्रस्वे' इत्येव । ह्रस्वत्वहेतुका या संज्ञा तस्यां गम्यमानायां कन् प्रत्ययो भवति । पूर्वस्यायमपवादः । वंशकः । वेणुकः । दण्डकः ॥

### २२४९. कुटीशमीशुण्डाभ्यो रः ॥ ८८ ॥ (२०४३)

'ह्रस्वे' इत्येव । संज्ञाग्रहणं नानुवर्तते, सामान्येन विधानम् । कुटो–शमी–शुण्डाभ्यो ह्रस्वार्थे द्योत्ये रः प्रत्ययो भवति । कस्यापवादः । ह्रस्वा कुटी कुटीरः। शमीरः । शुण्डारः ।

स्वार्थिकत्वेऽपि पुंल्लिङ्गता; लोकश्रयत्वाल्लिङ्गस्य ( व्या. परि. ७४) ॥

### २२५०. कुत्वा डुपच् ॥ ८९ ॥ (२०४४)

'ह्रस्वे' इत्येव । कुतूशब्दाद्ध्रस्वत्वे द्योत्ये डुपच्प्रत्ययो भवति । कस्यापवादः। ह्रस्वा कुतूः कुतुपम्=चर्ममयं स्नेहभाजनमुच्यते । कुतूरित्यावपनस्याख्या ॥

### २२५१. कासूगोणीभ्यां ष्टरच् ॥ ९० ॥ (२०४५)

'ह्रस्वे' इत्येव । कासू–गोणीशब्दाभ्यां ह्रस्वत्वे द्योत्ये ष्टरच्प्रत्ययो भवति । कस्यापवादः । षकारो ङीषर्थः । ह्रस्वा कासूः कासूतरी । गोणीतरी । कासूरिति शक्तिः, आयुधविशेष उच्यते ॥

### २२५२. वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ॥ ९१ ॥ (२०४६)

'ह्रस्वे' इति निवृत्तम् । वत्स, उक्षन्, अश्व, ऋषभ–इत्येतेभ्यस्तनुत्वे द्योत्ये ष्टरच्प्रत्ययो भवति । यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशः, तस्य तनुत्वे प्रत्ययः (म. भा.) । वत्सतरः । उक्षतरः । अश्वतरः । ऋषभतरः ।

प्रथमवया वत्सः, तस्य तनुत्वं द्वितीयवयसः प्राप्तिः । तरुण उक्षा, तस्य तनुत्वं तृतीयवयः प्राप्तिः । अश्वेनाश्वायामुत्पन्नोऽश्वः, तस्य तनुत्वमन्यपितृकता । अनड्वानृषभः, तस्य तनुत्वं भारोद्वहने मन्दशक्तिता ॥

### २२५३. किंयत्तदो निर्द्धारणे द्वयोरेकस्य डतरच् ॥ ९२ ॥ (२०४७)

किं, यत्, तत्–इत्येतेभ्यः प्रातिपदिकेभ्यो द्वयोरेकस्य निर्द्धारणे डतरच् प्रत्ययो भवति । निर्धार्यमाणवाचिभ्यः स्वार्थे प्रत्ययः । जात्या, क्रियया, गुणेन, संज्ञया वा समुदायादेकदेशस्य पृथक्करणं निर्धारणम् । कतरो भवतोः कठः? कतरो भवतोः कारकः? कतरो भवतोः पटुः? कतरो भवतोर्देवदत्तः? यतरो भवतोः कारकः । यतरो भवतोः पटुः । यतरो भवतोर्देवदत्तः, ततर आगच्छतु ।

महाविभाषयाऽत्र प्रत्ययो विकल्प्यते । को भवतोर्देवदत्तः, स आगच्छतु ।

'निर्धारणे' इति विषयसप्तमीनिर्देशः । 'द्वयोः' इति समुदायान्निर्धारणविभक्तिः। 'एकस्य' इति निर्देशो निर्धार्यमाणनिर्देशः ॥

## २२५४. वा बहूनां जातिपरिप्रश्ने डतमच् ॥ ९३ ॥ (२०४८)

'किंयत्तदः' इति वर्तते, 'निर्धारणे' ,'एकस्य' इति च । 'बहूनाम्' इति निर्धारणे षष्ठी । बहूनां मध्ये एकस्य निर्धारणे गम्यमाने जातिपरिप्रश्नविषयेभ्यः किमादिभ्यो वा डतमच् प्रत्ययो भवति । कतमो भवतां कठः? यतमो भवतां कठः, ततम आगच्छतु ।

वावचनमकजर्थम् – यको भवतां कठः, सक आगच्छतु ।

महाविभाषा च प्रत्ययविकल्पार्थाऽनुवर्तत एव – को भवतां कठः । यो भवतां कठः, स आगच्छतु ।

जातिपरिप्रश्न इति किम्? को भवताम् देवदत्तः ।

परिप्रश्नग्रहणं च किम एव विशेषणम्, न यत्तदोः; असम्भवान् । जातिग्रहणं तु सर्वैः सम्बध्यते ।

किमोऽस्मिन्विषये डतरमपीच्छन्ति केचित् – कतरो भवतां कठः, कतरो भवतां कालाप इति । तत्र 'कतरकतमौ जातिपरिप्रश्ने' (२.१.६३) इति वचनात्सिद्धम्॥

## २२५५. एकाच्च प्राचाम् ॥ ९४ ॥

एकशब्दात्प्राचामाचार्याणां मतेन डतरच्, डतमच्–इत्येतौ प्रत्ययौ भवतः स्वस्मिन्विषये । चकारो डतरचोऽनुकर्षणार्थः । द्वयोर्निर्द्धारणे डतरच् । बहूनाम् निर्द्धारणे डतमच् । 'जातिपतिप्रश्ने' इति नानुवर्तते, सामान्येन विधानम् । एकतरो भवतोर्देवदत्तः । एकतमो भवतां देवदत्तः ।

प्राचांग्रहणं पूजार्थम्; विकल्पोऽनुवर्तते एव ॥

## २२५६. अवक्षेपणे कन् ॥ ९५ ॥ (२०५०)

अवक्षिप्यते येन तदवक्षेपणम् । तस्मिन्वर्तमानात्प्रातिपदिकात्कन् प्रत्ययो भवति। व्याकरणकेन नाम त्वं गर्वितः । याज्ञिककेन नाम त्वं गर्वितः ।

परस्य कुत्सार्थं यदुपादीयते तदिहोदाहरणम्; यत्पुनः स्वयमेव कुत्सितम्, तत्र 'कुत्सिते' (५.३.७४) इत्यनेन कन्प्रत्ययो भवति – देवदत्तकः यज्ञदत्तक (म. भा.) इति ।

प्रागिवीयस्य पूर्णोऽवधिः ॥

## २२५७. इवे प्रतिकृतौ ॥९६ ॥ (२०५१)

'कन्' इत्यनुवर्तते । इवार्थे यत्प्रातिपदिकं वर्तते तस्मात्कन्प्रत्ययो भवति । इवार्थः सादृश्यम्, तस्य विशेषणं प्रतिकृतिग्रहणम् । प्रतिकृतिः = प्रतिरूपकम्, प्रतिच्छन्दकम् । अश्व इवायमश्वप्रतिकृतिः अश्वकः । उष्ट्रकः । गर्दभकः ।

प्रतिकृताविति किम्? गौरिव गवयः ॥

## २२५८. संज्ञायां च ॥ ९७ ॥ (२०५२)

'इव' इत्यनुवर्तते, 'कन्' इति च । इवार्थे गम्यमाने कन्प्रत्ययो भवति, समुदायेन चेत् संज्ञा गम्यते । अप्रतिकृत्यर्थ आरम्भः । अश्वसदृशस्य संज्ञा अश्वकः । उष्ट्रकः। गर्दभकः ॥

## २२५९. लुम्मनुष्ये ॥ ९८ ॥ (२०५३)

'संज्ञायाम्' इत्येव । संज्ञायाम् विहितस्य कनो मनुष्येऽभिधेये लुब् भवति। चञ्चेव मनुष्यः चञ्च । दासी । खरकुटी (म. भा.) ।

मनुष्य इति किम्? अश्वकः । उष्ट्रकः । गर्दभकः ।

देवपथादेराकृतिगणत्वात्तस्यैवायं प्रपञ्चो वेदितव्यः ॥

## २२६०. जीविकार्थे चापण्ये ॥ ९९ ॥ (२०५४)

जीविकार्थं यदपण्यं तस्मिन्नभिधेये कनो लुब् भवति । विक्रीयते यत्तत्=पण्यम्। वासुदेवः । शिवः । स्कन्दः । विष्णुः । आदित्यः ।

देवलकादीनां जीविकार्था देवप्रतिकृतय उच्यन्ते ।

अपण्य इति किम्? हस्तिकान्विक्रीणीते । अश्वकान् । रथकान् ।

देवपथादेरेवायं प्रपञ्चः ॥

## २२६१. देवपथादिभ्यश्च ॥ १०० ॥ (२०५५)

'इवे प्रतिकृतौ' (५.३.९६) संज्ञायां च (५.३.९७) विहितस्य कनो देवपथादिभ्य उत्तरस्य लुब् भवति । आदिशब्दः प्रकारे । आकृतिगणश्चायम् । देवपथः । हंसपथः।

**अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च ।**
**इवे प्रतिकृतौ लोपः कनो देवपथादिषु ॥**

अर्चासु तावत् – शिवः, विष्णुः । चित्रकर्मणि – अर्जुनः दुर्योधनः । ध्वजेषु – कपिः, गरुडः, सिंहः ।

देवपथ । हंसपथ । वारिपथ । जलपथ । राजपथ । शतपथ । सिंहगति । उष्ट्रग्रीवा । चामरज्जु । रज्जु । हस्त । इन्द्र । दण्ड । पुष्प । मत्स्य । देवपथादिः ॥

## २२६२. वस्तेर्ढञ् ॥ १०१ ॥ (२०५६)

'इव' इत्यनुवर्तते । इतः प्रभृति प्रत्ययाः सामान्येन भवन्ति, प्रतिकृतौ च, अप्रतिकृतौ च । वस्तिशब्दादिवार्थे द्योत्ये ढञ्प्रत्ययो भवति । वस्तिरिव वास्तेयः.। वास्तेयी ॥

## २२६३. शिलाया ढः ॥ १०२ ॥ (२०५७)

शिलाशब्दादिवार्थे ढः प्रत्ययो भवति । शिलेव शिलेयं दधि ।

केचिदत्र ढञमपीच्छन्ति, तदर्थं योगविभागः कर्त्तव्यः । 'शिलायाः' ढञ्प्रत्ययो भवति – शैलेयम् । ततः 'ढः' – शिलेयम् ॥

## २२६४. शाखादिभ्यो यत् ॥ १०३ ॥ (२०५८)

'शाखा' इत्येवमादिभ्यः प्रातिपदिकेभ्यो यत्प्रत्ययो भवति इवार्थे । शाखेव शाख्यः । मुख्यः । जघन्यः ।

शाखा । मुख । जघन । शृङ्ग । मेघ । चरण । स्कन्ध । शिरस । उरस् । अग्र। शरण । शाखादिः ।

**२२६५. द्रव्यं च भव्ये ॥ १०४ ॥ (२०५९)**

द्रव्यशब्दो निपात्यते भव्येऽभिधेये । द्रुशब्दादिवार्थे यत्प्रत्ययो निपात्यते । द्रव्यम् = भव्यः, आत्मवान्; अभिप्रेतानामर्थानां पात्रभूत उच्यते । द्रव्योऽयं राजपुत्रः । द्रव्योऽयं माणवकः॥

**२२६६. कुशाग्राच्छः ॥ १०५ ॥ (२०६०)**

कुशाग्रशब्दादिवार्थे छः प्रत्ययो भवति । कुशाग्रमिव सूक्ष्मत्वात् कुशाग्रीया बुद्धिः । कुशाग्रीयं वस्त्रम् ॥

**२२६७. समासाच्च तद्विषयात् ॥ १०६ ॥ (२०६१)**

तदित्यनेन प्रकृत इवार्थो निर्दिश्यते । इवार्थविषयात्समासादपरस्मिन्निवार्थे एव छः प्रत्ययो भवति । काकतालीयम् । अजाकृपाणीयम् । अन्धकवर्त्तकीयम् ।

अतर्कितोपनतं चित्रीकरणमुच्यते । तत्कथम्? काकस्यागमनं यादृच्छिकम्, तालस्य पतनं च, तेन तालेन पतता काकस्य वधः कृतः एवमेव देवदत्तस्य तत्रागमनम्, दस्यूनां चोपनिपातः, तैश्च तस्य वधः कृतः । तत्र यो देवदत्तस्य दस्यूनां च समागमः, स काकतालसमागमसदृश इत्येक उपमार्थः । अतश्च देवदत्तस्य वधः, स काकतालवधसदृश इति द्वितीय उपमार्थः । तत्र प्रथमे समासः, द्वितीये प्रत्ययः ।

समासश्चायमस्मादेव ज्ञापकात् । न ह्यस्यापरं लक्षणमस्ति ।

'सुप्सुपा' इति वा समासः । स चैवंविषय एव ॥

**२२६८. शर्करादिभ्योऽण् ॥ १०७ ॥ (२०६२)**

'शर्करा' –इत्येवमादिभ्यः प्रातिपदिकेभ्य इवार्थेऽण्प्रत्ययो भवति । शर्करेव शार्करम् । कापालिकम् ।

शर्करा । कपालिका । पिष्टिक । पुण्डरीक । शतपत्र । गोलोमन् । गोपुच्छ। नरालि । नकुला । सिकता । शर्करादिः ॥

**२२६९. अङ्गुल्यादिभ्यष्ठक् ॥ १०८ ॥ (२०६३)**

अङ्गुल्यादिभ्य इवार्थे ठक् प्रत्ययो भवति । अङ्गुलीवाङ्गुलिकः । भारुजिकः।

अङ्गुलि । भरुज । बभ्रु । वल्गु । मण्डर । मण्डल । शष्कुल । कपि । उदश्वित्। गोणी । उरस् । शिखा । कुलिश । अङ्गुल्यादिः ॥

**२२७०. एकशालायाष्ठजन्यतरस्याम् ॥ १०९ ॥ (२०६४)**

एकशालाशब्दादिवार्थेऽन्यतरस्यां ठच्प्रत्ययो भवति । अन्यतरस्यांग्रहणेनानन्तरष्ठक् प्राप्यते । एकशालेव एकशालिकः, ऐकशालिकः॥

**२२७१. कर्कलोहितादीकक् ॥ ११० ॥ (२०३५)**

कर्कलोहितशब्दाभ्यामिवार्थे ईकक् प्रत्ययो भवति । कर्कः = शुक्लोऽश्वः, तेन सदृशः कार्कीकः । लौहितीकः स्फटिकः । स्वयमलोहितोऽप्युपाश्रयवशात्तथा प्रतीयते ॥

**२२७२. प्रत्नपूर्वविश्वेमात्थाल् छन्दसि ॥ १११ ॥ (३५०२)**

प्रत्न, पूर्व, विश्व, इम–इत्येतेभ्य इवार्थे थाल् प्रत्ययो भवति छन्दसि विषये। 'तं प्रत्नथा पूर्वथा विश्वथेमथा' (ऋ. ५.४४.१) ।

**२२७३. पूगाञ्ञ्योऽग्रामणीपूर्वात् ॥ ११२ ॥ (२०६६)**

'इवार्थे' इति निवृत्तम् । नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः सङ्घाः = पूगाः, पूगवाचिनः प्रातिपदिकादग्रामणीपूर्वात्स्वार्थे ञ्यः प्रत्ययो भवति । लौहध्वज्यः, लौहध्वज्यौ, लौहध्वजाः । शैब्यः, शैब्यौ, शिबयः । चातक्यः, चातक्यौ, चातकाः ।

अग्रामणीपूर्वादिति किम्? देवदत्तो ग्रामणीरेषां त इमे देवदत्तकाः । यज्ञदत्तकाः॥

**२२७४. व्रातच्फञोरस्त्रियाम् ॥ ११३ ॥ (११००)**

नानजातीया अनियतवृत्तय उत्सेधजीविनः सङ्घाः = व्राताः । व्रातवाचिभ्यः प्रातिपदिकेभ्यश्च स्वार्थे ञ्यः प्रत्ययो भवत्यस्त्रियाम् । कापोतपाक्यः, कापोतपाक्यौ, कपोतपाकाः । व्रैहिमत्यः, वैहिमत्यौ, व्रीहिमताः । च्फञः खल्वपि कौञ्जायन्यः – कौञ्जायन्यौ, कौञ्जायानाः । ब्राध्नायन्यः, ब्राध्नायन्यौ, ब्राध्नायनाः ।

अस्त्रियामिति किम्? कपोतपाकी । व्रीहिमती । कौञ्जायनी । ब्राध्नायनी ॥

सुखादयस्तृतीयेऽध्याये (३.१.१८) पठ्यन्ते ॥

### २८३४. वा जाते ॥ १७१ ॥ (३९०५)

जातशब्द उत्तरपदे वाऽन्त उदात्तो भवति बहुव्रीहौ समासे जातिकालसुखादिभ्यः। दन्तजातः। दन्तुजतः। स्तनजातः। स्तनजातः। कालात्–मासजातः। मासजातः। संवत्सरजातः। संवत्सरजातः। सुखादिभ्यः – सुखजातः। सुखजातः। दुःखजातः। दुःखजातः।

### २८३५. नञ्सुभ्याम् ॥ १७२ ॥ (३९०६)

नञ्सुभ्यां परमुत्तरपदं बहुव्रीहौ समासेऽन्तोदात्तं भवति। अयवो देशः। अव्रीहिः। अमाषः। सुयवः। सुव्रीहिः। सुमाषः।

समासस्यैतदन्तोदात्तत्वमिष्यते। समासान्ताश्चावयवा भवन्तीति–अनृचः, बहुवृच इत्यत्र कृते समासान्तेऽन्तोदात्तत्वं भवति।

### २८३६. कपि पूर्वम् ॥ १७३ ॥ (३९०७)

नञ्सुभ्यां कपि परतः पूर्वमन्तोदात्तं भवति। अकुमारीको देशः। अवृषलीकः। अब्रह्मबन्धूकः। सुकुमारीकः। सुवृषलीकः। सुब्रह्मबन्धूकः ॥

### २८३७. ह्रस्वाऽन्तेऽन्त्यात्पूर्वम् ॥ १७४ ॥ (३९०८)

ह्रस्वोऽन्तो यस्य तदिदं ह्रस्वान्तमुत्तरपदं समासो वा, तत्रान्त्यात् पूर्वमुदात्तं भवति कपि परतो नञ्सुभ्यां परं बहुव्रीहौ समासे। अयवको देशः। अव्रीहिकः। अमाषकः। सुयवकः। सुव्रीहिकः। सुमाषकः।

पूर्वमिति वर्त्तमाने पुनः पूर्वग्रहणं प्रवृत्तिभेदेन नियमप्रैतिपत्त्यर्थम् – ह्रस्वान्तेऽन्त्यादेव पूर्वमुदात्तं भवति, न कपि पूर्वमिति। तेन अज्ञकः, सुज्ञकः इत्यत्र कबन्तस्यैवान्तोदात्तत्वं भवति ॥

### २८३८. बहोर्नञ्वदुत्तरपदभूम्नि ॥ १७५ ॥ (३९०९)

उत्तरपदार्थबहुत्वे यो बहुशब्दो वर्तते तस्मान्नञ इव स्वरो भवति। 'नञ्सुभ्याम् (३.२.१७२) इत्युक्तम्, बहोरपि तथा भवति – बहुयवो देशः, बहुव्रीहिः, बहुतिलः।

'कपि पूर्वम्' (६.२.१७३) इत्युक्तम्, बहोरपि तथा भवति – बहुकुमारीको देशः, बहुवृषलीकः, बहुब्रह्मबन्धूकः । ह्रस्वान्तेऽन्त्यात्पूर्वम् (६.२.१७४) इत्युक्तम्, बहोरपि तथा भवति–बहुयवको देशः, बहुव्रीहिकः, बहुमाषकः । 'नञो जरमरमित्त्रमृताः' (६.२.११६) इत्युक्तम्, बहोरपि तथा भवति – बहुजरः । बहुमरः । बहुमित्त्रः । बहुमृतः ।

उत्तरपदभूम्नीति किम् ? बहुषु मनोऽस्य बहुमना अयम् ॥

## २८३९. न गुणादयोऽवयवाः ॥ १७६ ॥ (३९१०)

गुणादयोऽवयववाचिनो बहोरुत्तरे बहुव्रीहौ नान्तोदात्ता भवन्ति । बहुगुणा रज्जुः। बह्वक्षरं पदम् । बहुच्छन्दोमानम् । बहुसूक्तः बह्वध्यायः ।

गुणादिराकृतिगणो द्रष्टव्यः ।

अवयवा इति किम्? बहुगुणो ब्राह्मणः । अध्ययनश्रुतसदाचारादयोऽत्र गुणाः॥

## २८४०. उपसर्गात् स्वाङ्गं ध्रुवमपर्शु ॥ १७७ ॥ (३९११)

उपसर्गात् स्वाङ्गं ध्रुवं पर्शुवर्जितमन्तोदात्तं भवति बहुव्रीहौ समासे । प्रपृष्ठः। प्रोदरः । प्रललाटः ।

'ध्रुवम्' इत्येकरूपमुच्यते । ध्रुवमस्य शीतमिति यथा । सततं यस्य प्रगतं पृष्ठं भवति स प्रपृष्ठः ।

उपसर्गादिति किम्? दर्शनीयललाटः । स्वाङ्गमिति किम्? प्रशाखो वृक्षः । ध्रुवमिति किम्? उद्बाहुः क्रोशति । अपर्श्विति किम्? उत्पर्शुः । विपर्शुः ॥

## २८४१. वनं समासे ॥ १७८ ॥ (३९१२)

समासमात्रे 'वनम्' इत्येतदुत्तरपदमुपसर्गात्परमन्तोदात्तं भवति । प्रवणे यष्टव्यम्। निर्वणे प्रणिधीयते । 'प्रनिरन्तः' (८.४.५) इति णत्वम् ।

समासग्रहणं समासमात्रपरिग्रहार्थम्, बहुव्रीहावेव हि स्यात् ॥

## २८४२. अन्तः ॥ १७९ ॥ (३९१३)

अन्तश्शब्दादुत्तरं वनमन्तोदात्तं भवति । अन्तर्वणो देशः ।

अनुपसर्गार्थ आरम्भः ॥

## २८४३. अन्तश्च ॥ १८० ॥ (३९१४)

अन्तश्शब्दश्चोत्तरपदमुपसर्गादन्तोदात्तं भवति । प्रान्तः । पर्यन्तः । बहुव्रीहिरयम्, प्रादिसमासो वा ॥

## २८४४. न निविभ्याम् ॥ १८१ ॥ (३९१५)

नि, वि–इत्येताभ्यामुत्तरोऽन्तशब्दो नान्तोदात्तो भवति । न्यन्तः । व्यन्तः (तै.ब्रा. २.१.३.१) । पूर्वपदप्रकृतिस्वरत्वे कृते यणादेशः । तत्र 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (८.२.४) इति स्वरितो भवति ॥

## २८४५. परेरभितोभावि मण्डलम् ॥ १८२ ॥ (३९१६)

'परेरुत्तरमभिरोभाविवचनं मण्डलं चान्तोदात्तं भवति । परिकूलम् । परितीरम् । परिमण्डलम् । बहुव्रीहिरयम्, प्रादिसमासः, अव्ययीभावो वा । अव्ययीभावपक्षेऽपि हि 'परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु' (६.२.३३) इति पूर्वपदप्रकृतिस्वरत्वं प्राप्तमनेन बाध्यते ।

अभित इत्युभयतः, अभितो भावोऽस्यास्तीति तदभितोभावि । यच्चैवं स्वभावं कूलादि, तदभितोभाविग्रहणेन गृह्यते ॥

## २८४६. प्रादस्वाङ्गं संज्ञायाम् ॥ १८३ ॥ (३९१७)

प्रादुत्तरपदमस्वाङ्गवाचि संज्ञायां विषयेऽन्तोदात्तं भवति । प्रकोष्ठम् । प्रगृहम्। प्रद्वारम् ।

अस्वाङ्गम्मिति किम्? प्रहस्तम् । प्रपदम् । संज्ञायामिति किम्? प्रपीठम् ॥

## २८४७. निरुदकादीनि च ॥ १८४ ॥ (३९१८)

निरुदकादीनि च शब्दरूपण्यन्तोदात्तानि भवन्ति । निरुदकम् । निरुलपम् । निरुपलमित्यन्ये पठन्ति । निर्मक्षिकम् । निर्मशकम् । एषां प्रादिसमासः, बहुव्रीहिर्वा। अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम् ।

निष्कालकः । निष्क्रान्तः कालकादिति कन्प्रत्ययान्तेन कालब्देन प्रादिसमासः। निष्कालिकः–इत्यन्ये पठन्ति ।

निष्पेषः, दुस्तरीपः 'अवितृस्तृतन्त्रिभ्यः ईः (उणादि ४४६)–तरीः, तां पातीति तरीपः, कुत्सितस्तरीपो दुस्तरीपः । निस्तरीप इति केचित् पठन्ति । अपरे–निस्तरीक इति । ते तरिशब्दान्ते बहुव्रीहौ कपं कुर्वन्ति ।

निरजिनम् । उदजिनम् । उपाजिनम् ।

परेर्हस्तपादकेशकर्षाः (ग.सू. १७५) । परिहस्तः । परिपादः । परिकेशः । परिकर्षः । निरुदकादिराकृतिगणः ॥

## २८४८. अभेर्मुखम् ॥ १८५ ॥ (३९१९)

अभेरुत्तरं मुखमन्तोदात्तं भवति । अभिमुखः । बहुव्रीहिरयम्, प्रादिसमासो वा। अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम् ।

'उपसर्गात्स्वाङ्गम्' (६.२.१७७) इति सिद्धे वचनमबहुव्रीह्यर्थम्, अध्रुवार्थम्, अस्वाङ्गार्थं च । अभिमुखा शाला ॥

## २८४९. अपाच्च ॥ १८६ ॥ (२९२०)

अपाच्चोत्तरं मुखमन्तोदात्तं भवति । अपमुखः । अपमुखम् । अव्ययीभावोऽप्यत्र प्रयोजयति । तत्रापि हि परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु' (६.२.३३) इत्युक्तम्।

योगविभाग उत्तरार्थः ॥

## २८५०. स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनामनाम च ॥ १८७ ॥ (३९२१)

स्फिग, पूत, वीणा, अञ्जस् अध्वन्, कुक्षि – इत्येतान्युत्तरपदानि सीरनामानि च नामशब्दश्च अपादुत्तराण्यन्तोदात्तानि भवन्ति । अपस्फिगम् । अपपूतम् । अपवीणम्। अपाञ्जः । अपाध्वा ।

'उपसर्गादध्वनः' (५.४.८५) इति यदा समासान्तो नास्ति, तदाऽनेनान्तोदात्तत्वं भवति । तस्मिन् हि सत्यच्प्रत्ययस्य चित्त्वादेव सिद्धम् । 'अनित्यश्च समासान्तः' इत्येतदेव ज्ञापकम् ।

अपकुक्षिः । अपसीरः । अपहलम् । अपलाङ्गलम् । अपनाम । सर्वत्र प्रादिसमासः, बहुव्रीहिः, अव्ययीभावो वा ।

स्फिगपूतकुक्षीणां ग्रहणमबहुव्रीह्यर्थम्, अध्रुवार्थम्, (म. भा.) अस्वाङ्गार्थं च ॥

### २८४१. अधेरुपरिस्थम् । १८८ ॥ (३९२२)

अधेरुत्तरमुपरिस्थवाचि अन्तोदात्तं भवति । अधिदन्तः । अधिकर्णः । अधिकेशः। अध्यारूढो दन्त इति प्रादिसमासः । अध्यारूढो वा दन्त इति समानाधिकरण उत्तरपदलोपी समासः ।

दन्तस्योपरि योऽन्यो दन्तो जायते स उच्यते=अधिदन्त इति ।

उपरिस्थमिति किम्? अधिकरणम् ॥

### २८५२. अनोरप्रधानकनीयसी ॥ १८९ ॥ (३९२३)

अनोरुत्तरमप्रधानवाचि कनीयश्चान्तोदात्तं भवति । अनुगतो ज्येष्ठमनुज्येष्ठः । अनुमध्यमः । पूर्वपदार्थप्रधानः प्रादिसमासोऽयम् । अनुगतः कनीयान् अनुकनीयान्। उत्तरपदार्थप्रधानोऽयम् । प्रधानार्थं च कनीयोग्रहणम् ।

अप्रधानकनीयसी इति किम्? अनुगतो ज्येष्ठोऽनुज्येष्ठः ॥

### २८५३. पुरुषश्चान्वादिष्टः ॥ १९० ॥ (३९२४)

पुरुषशब्दोऽन्वादिष्टवाची चानोरुत्तरोऽन्तोदात्तो भवति । अन्वादिष्टः पुरुषः अनुपुरुषः। अन्वादिष्टः= अन्वाचितः, कथितानुकथितो वा । अन्वादिष्ट इति किम्? अनुगतः पुरुषोऽनुपुरुषः ॥

### २८५४. अतेरकृत्पदे ॥ १९१ ॥ (३९२५)

अतेः परमकृदन्तं पदशब्दश्चान्तोदात्तो भवति । अत्यङ्कुशो नागः । अतिकशोऽश्वः। पदशब्दः खल्वपि – अतिपदा शक्वरी ।

अकृत्पदे इति किम्? अतिकारकः ।

अतेर्धातुलोप इति वक्तव्यम् (का. वा.१) । इह मा भूत् शोभनो गार्ग्यः अतिगार्ग्यः । इह च यथा स्यात् – अतिक्रान्तः कारकादतिकारक इति ॥

### २८५५. नेरनिधाने ॥ १९२ ॥ (३९२६)

नेः परमुत्तरपदमन्तोदात्तं भवत्यनिधाने । निधानम्=अप्रकाशता,

[तद्भिन्नमनिधानम्=प्रकाशनम् ।] निमूलम् । न्यक्षम् । नितृणम् । बहुव्रीहिरयम् प्रादिसमासो वा । अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम् ।

अनिधान इति किम्? निवाग्वृषलः । निदण्डः । निहितवाक्, निहितदण्ड इत्यर्थः । निशब्दोऽत्र निधानार्थं ब्रवीति । प्रादयो हि वृत्तिविषये ससाधनां क्रियामाहुः॥

## २८५६. प्रतेरंश्वादयस्तत्पुरुषे ॥ १९३ ॥ (३१२७)

प्रतेरंश्वादयस्तत्पुरुषे समासेऽन्तोदात्ता भवन्ति । प्रतिगतोंऽशुः प्रत्यंशुः । प्रतिजनः। प्रतिराजा ।

राज्कशब्दः समासान्तस्यानित्यत्वाद्यदा टज नास्ति तदा प्रयोजयति । तस्मिन्हि सति चित्वादेवान्तोदात्तत्वं सिद्धम् ।

तत्पुरुष इति किम्? प्रतिगता अंशवोऽस्य प्रत्य शुरयमुष्ट्रः ।

अंशु । जन । राजन् । उष्ट्र । खेटक । अजिर । आर्द्रा । श्रवण । कृत्तिका.। अर्द्ध। पुर । अंश्वादि ॥

## २८५७. उपाद् द्व्यजजिनमगौरादयः ॥ १९४ ॥ (३९२८)

उपादुत्तर द्व्यजजिनं चान्तोदात्तं भवति तत्पुरुषे समासे गौरादीन् वर्जयित्वा। उपगतो देवमुपदवः । उपसोमः । उपेन्द्रः । उपहोडः । अजिन–उपाजिनम् ।

अगौरादय इति किम्? उपगौरः । उपतैषः ।

तत्पुरुष् इत्येव – उपगतः सोमोऽस्य उपसोमः ।

गौर । तैष । नैष । तैट । लेट । लोट । जिह्वा । कृष्णा । कन्या । गुड । कल्य। वाह । गौरादिः ॥

## २८५८. सोरवक्षेपणे ॥ १९५ ॥ (३९२९)

सुशब्दात्परमुत्तरपदं तत्पुरुषे समासेऽन्तोदात्तं भवति अवक्षेपणे गम्यमाने । अवक्षेपणम्=निन्दा । इह खल्विदानिं सुस्थण्डिले सुस्फिगाभ्यां सुप्रत्ययसितः । सुशब्दोऽत्र पूजायामेव । वाक्यार्थस्तु अवक्षेपणम्, असूयया अथाभिधानात् ।

सोरिति किम्? कुब्राह्मणः । अवक्षेपण इति किम्? शोभनेषु तृणेषु सुतृणेषु॥

## २८५९. विभाषोत्पुच्छे ॥ १९३ ॥ (३९३०)

उत्पुच्छशब्दे तत्पुरुषे विभाषाऽन्त उदात्तो भवति । उत्क्रान्तः पुच्छाद् उत्पुच्छः,

उत्पुच्छः ।

यदा तु पुच्छमुदस्यति उत्पुच्छयति, उत्पुच्छयतेरच् उत्पुच्छः, तदा थाथादिसूत्रेण (६.२.१४४) नित्यमन्तोदात्तत्वे प्राप्ते विकल्पोऽयमिति सेयमुभयत्र विभाषा भवति।

अत्पुरुष इत्येव – उदस्तं पुच्छमस्य उत्पुच्छः ॥

## २८६०. द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ॥ १९७ ॥ (३९३१)

द्वि, त्रि – इत्येताभ्यामुत्तरेषु पाद्, दत्, मूर्धन्–इत्येषूत्तरपदेषु यो बहुव्रींहिस्तत्र विभाशाऽन्त उदात्तो भवति । द्वौ पादावस्य द्विपात् (मै.सं. २.६.८.३) द्विपात् । त्रिपात्, त्रिपात् । द्विद्वन् द्विदन् । त्रिदन् त्रिदन् । द्विमूर्धा द्विमूर्धा । त्रिमूर्धा त्रिमूर्धा। पादिति कृताकारलोपः पादशब्दो गृह्यते । ददिति कृतददादेशो दन्तशब्दः ।

मूर्धन्निति त्वकृतसमासान्तो नान्त एव मून्शब्दः । तस्यैतत्प्रयोजनम् – असत्यपि समासान्तेऽन्तोदात्तत्वं यथा स्यात् । एतदेव ज्ञापकम् – अनित्यः समासान्तो भवतीति।

यदापि समान्तः क्रियते, तदापि बहुव्रीहेः कार्यित्वात् तदेकदेशत्वाच्च समासान्तस्यान्तोदात्तत्वं पक्षे भवत्येव – द्विमूर्धः, त्रिमूर्धः ।

द्वित्रिभ्यामिति किम्? कल्याणामूर्धा । पादादिष्विति किम्? द्विहस्तम् । बहुव्रीहाविति किं? द्वयोर्मूर्धा द्विमूर्धा ॥

## २८६१. सक्थं चाक्रान्तात् ॥ १९८ ॥ (३९३२)

सक्थमिति कृतसमासान्तः सक्थिशब्दोऽत्र गृह्यते, सोऽक्रान्तात्परो विभाषान्तोदात्तो भवति । गौरसक्थः गौरसक्थः । श्लक्षणसक्थः श्लक्ष्णसक्थः।

अक्रान्तादिति किम्? चक्रसक्थः । षचश्चित्त्वान्नित्यमन्तोदात्तत्वं भवति ॥

## २८६२. परादिश्छन्दसि बहुलम् ॥ १९९ ॥ (३९३३)

छन्दसि विषये परादिरुदात्तो भवति बहुलम् । परशब्देनात्र सक्थशब्द एव गृह्यते । अञ्जिसक्थमालभेत । त्वाष्ट्रौ लोमशसक्थौ (तै. सं. ५.५.२३.१) । ऋजुबाहुः। वाक्पतिः । चित्पतिः ।

> परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते ।
> पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं ततः ॥ (म.भा.)

परादिरुदाहृतः ।

परान्तश्च – अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसंख्यानम् (म. भा.) । त्रिबन्धुरेण त्रिवृता रथेन त्रिचक्रेण (ऋ. १.११८.२) ।

पूर्वान्तः – पूर्वपदान्तोदात्तप्रकरणे मरुद्वृद्धादीनां छन्दस्युपसंख्यानम् । मरुद्वृद्धः ।

पूर्वादिः – पूर्वपदाद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम् । 'दिवोदासाय सामगाय ते' इत्येवमादि सर्वं संगृहेतं भवति ॥

## ॥ इति श्रीवामनविरचितायां काशिकावृत्तौ षष्ठाध्यायस्य द्वितीयः पादः ॥ २ ॥

# अथ षष्ठाध्याये तृतीयः पादः

### २८६३. अलुगुत्तरपदे ॥ १ ॥ (१५८)

'अलुक्' इति च 'उत्तरपदे इति च एतदधिकृतं वेदितव्यम् । यदित ऊर्ध्वमनुक्रमिष्यामोऽलुगुत्तरपद इत्येवं तद्वेदितव्यम् । वक्ष्यति – 'पञ्चम्याः स्तोकादिभ्यः' (६.३.२) । स्तोकान्मुक्तः । 'अल्पान्मुक्तः' ।

उत्तरपद इति किम्? निष्क्रान्तः स्तोकाद् निःस्तोकः ।

अन्यार्थमिदमुत्तरपदग्रहणमिहाप्यलुको निवृत्तिं करोतीत्येवमर्थं 'लक्षणप्रतिपदोक्त' (व्या.परि. ३) परिभाषा नाश्रयितव्या ।

अलुगधिकारः प्रागानङः (६.३.२५) । उत्तरपदाधिकारः प्रागङ्गाधिकारात् (६.४.१) ॥

### २८६४. पञ्चम्याः स्तोकादिभ्यः ॥ २ ॥ (९५९)

स्तोकान्तिकदूरार्थकृच्छ्राणि स्तोकादीनि, तेभ्यः परस्याः पञ्चम्या उत्तरपदेऽलुग्भवति । स्तोकान्मुक्तः । अल्पान्मुक्तः । अन्तिकादागतः । अभ्याशादागतः। दूरादागतः । विप्रकृष्टादागतः । कृच्छ्रान्मुक्तः ।

समासे कृते प्रातिपदिकत्वात्सुपो लुकि प्राप्ते प्रतिषेधः क्रियते ।

द्विवचनबहुवचनान्तानां तु स्तोकादीनामनभिधानात्समास एव न भवति – स्तोकाभ्यां मुक्तः, स्तोकेभ्यो मुक्त इति । तेनात्र न कदाचिदप्यैकपद्यम्, ऐकस्वर्यं च भवति ।

ब्राह्मणाच्छंसिन उपसंख्यानं कर्तव्यम् (का.वा.) । ब्राह्मणादादाय शंसतीति ब्राह्मणाच्छंसी इति । ऋत्विग्विशेषस्य रूढिरियम् । तस्या व्युत्पत्तिरसता सता वाऽवयवार्थेन क्रियते ॥

## २८६५. ओजः सहोम्भस्तमसस्तृतीयायाः ॥ ३ ॥ (९६०)

ओजस्, सहस्, अम्भस्, तमस्–इत्येतेभ्य उत्तरस्यास्तृतीयाया अलुग्भवति उत्तरपदे । ओजसाकृतम् । सहसाकृतम् । अम्भसाकृतम् । तमसाकृतम् ।

अञ्जस उपसंख्यानं कर्तव्यम् (का.वा.१) । अञ्जसाकृतम् ।

पुंसानुजो जनुषान्ध इति वक्तव्यम् (का.वा.२) । पुंसानुजः ॥

## २८६६. मनसः संज्ञायाम् ॥ ४ ॥ (९६१)

मनस उत्तरस्यास्तृतीयायाः संज्ञायामलुग्भवति । मनसादत्ता । मनसागुप्ता । मनसासङ्गता ।

संज्ञायामिति किम्? मनोदत्ता । मनोगुप्ता ॥

## २८६७. आज्ञायिनि च ॥ ५ ॥ (९६२)

आज्ञायिन्युत्तरपदे मनस उत्तरस्यास्तृतीयाया अलुग्भवति । मनसाऽऽज्ञातुं शीलमस्य मनसाज्ञायी ॥

## २८६८. आत्मनश्च पूरणे ॥ ६ ॥ (९६३)

आत्मन उत्तरस्यास्तृतीयायाः पूरणप्रत्ययान्त उत्तरपदेऽलुग्भवति । आत्मनापञ्चमः.। आत्मनाषष्ठः । 'तृतीयाविधाने प्रकृत्यादिभ्य उपसंख्यानम्' (का.वा.) इति तृतीया । 'तृतीया' (३.१.३०) इति योगविभागात्समासः । आत्मना वा कृतः पञ्चम आत्मनापञ्चमः ।

कथं 'जनार्दनस्त्वात्मचतुर्थ एव' इति ? बहुव्रीहिरयम्–आत्मा चतुर्थोऽस्यासावात्मचतुर्थः (म. भा.) ॥

## २८६९. वैयाकरणाख्यायां चतुर्थ्याः ॥ ७ ॥ (९६४)

वैयाकरणानामाख्या वैयाकरणाख्या । आख्या=संज्ञा । यया संज्ञया वैयकरणा एव व्यवहरन्ति तस्यामात्मन उत्तरस्याश्चतुर्थ्या अलुग्भवति । आत्मनेपदम् । आत्मनेभाषा.। तादर्थ्ये चतुर्थी (का.वा.) । 'चतुर्थी' इति योगविभागात्समासः ॥

## २८७०. परस्य च ॥ ८ ॥ (९६५)

परस्य च या चतुर्थी तस्या वैयाकरणाख्यायामलुग्भवति । परस्मैपदम् । परस्मैभाषा ॥

## २८७१. हलदन्तात्सप्तम्याः संज्ञायाम् ॥ ९ ॥ (९६६)

हलन्ताददन्ताच्चोत्तरस्याः सप्तम्याः संज्ञायामलुग्भवति । युधिष्ठिरः । त्वचिसारः। गविष्ठिर इत्यत्र तु 'गवियुधिभ्यां स्थिरः' (६.३.९५) इत्यत एव वचनादलुक् । अदन्तात्–अरण्येतिलकाः । अरण्येमाषकाः । वनेकिंशुकाः । वनेहरिद्रकाः । वनेबल्बजकाः । पूर्वाह्णस्फोटकाः । कूपेपिशाचकाः ।

हलदन्तादिति किम्? नद्याः कुक्कुटिका नदीकुक्कुटिका । भूम्यां पाशाः भूमिपाशाः.। संज्ञायामिति किम्? अक्षशौण्डः ।

हृद्द्युभ्यां ङेः (का.वा. १) । हृद, दिव् – इत्येताभ्यामुत्तरस्य ङेरलुक् भवति.। हृदिस्पृक् । दिविस्पृक् ॥

## २८७२. कारनाम्नि च प्राचां हलादौ ॥ १० ॥ (९६८)

प्राचां देशे यत्कारनाम तत्र हलादावुत्तरपदे हलदन्तादुत्तरस्याः सप्तम्या अलुग्भवति । कूपेशाणम् । दृषदिमाषकः । हलेद्विपदिका । हलेत्रिपदिका ।

कारविशेषस्य संज्ञा एताः, तत्र पूर्वेणैव सिद्धे नियमार्थमिदम् । एते च त्रयो नियमविकल्पा अत्रेष्यन्ते – कारनाम्न्येव, प्राचामेव, हलादावेवेति ।

कारनाम्नीति किम्? अभ्यर्हिते पशुः अभ्यर्हितपशुः । कारादन्यस्यैतद्देयस्य नाम । प्राचामिति किम्? यूथे पशुः यूथपशुः । हलादाविति किम्? अविकटे उरणः अविकटोरणः । हलदन्तादित्येव – नद्यां दोहनी नदीदोहनी ॥

## २८७३. मध्याद् गुरौ ॥ ११ ॥ (९६९)

मध्यादुत्तरस्याः सप्तम्या गुरावुत्तरपदेऽलुग्भवति । मध्येगुरुः ।

अन्ताच्चेति वक्तव्यम् (का.वा.१) । अन्तेगुरुः । 'सप्तमी' इति योगविभागात् समासः ॥

## २८७४. अमूर्द्धमस्तकात् स्वाङ्गादकामे ॥ १२ ॥ (९७०)

मूर्द्धमस्तकवर्जितात् स्वाङ्गादुत्तरस्याः सप्तम्या अकाम उत्तरपदेऽलुग्भवति। कण्ठे कालोऽस्य कण्ठेकालः । उरसिलोमा । उदरेमणिः ।

अमूर्द्धमस्तकादिति किम्? मूर्द्धशिखः । मस्तकशिखः । अकाम इति किम्? मुखे कामोऽस्य मुखकामः । स्वाङ्गादिति किम्? अक्षशौण्डः ।

हलदन्तादित्येव–अङ्गुलित्राणः । जङ्घावलिः ॥

## २८७५. बन्धे च विभाषा ॥ १३ ॥ (९७१)

'बन्धे' इति घञन्तो गृह्यते, तस्मिन्नुत्तरपदे हलदन्तादुत्तरस्याः सप्तम्या विभाषाऽलुग्भवति। हस्तेबन्धः, हस्तबन्धः। चक्रेबन्धः, चक्रबन्धः। उभयत्रविभाषेयम्। स्वाङ्गाद्धि बहुव्रीहौ पूर्वेण नित्यमलुक् प्राप्नोति; तत्पुरुषे तु स्वाङ्गादस्वाङ्गाच्च 'नेन्त्सिद्धबध्नातिषु च' (६.३.१९) । इति प्रतिषेधः प्राप्नोति ।

हलदन्तादित्येव = गुप्तिबन्धः ॥

## २८७६. तत्पुरुषे कृति बहुलम् ॥ १४ ॥ (९७२)

तत्पुरुषे समासे कृदन्त उत्तरप्दे सप्तम्या बहुलमलुग्भवति । स्तम्बेरमः । कर्णेजपः ।

न च भवति – कुरुचरः, मद्रचरः ॥

## २८७७. प्रावृट्शरत्कालदिवां जे ॥ १५ ॥ (९७३)

प्रावृट्, शरत्, काल, दिव्–इत्येतेषां जे उत्तरपदे सप्तम्या बहुलमलुग्भवति। प्रावृषिजः । शरदिजः । कालेजः । दिविजः । पूर्वस्यैवायं प्रपञ्चः ॥

## २८७८. विभाषा वर्षक्षरशरवरात् ॥ १६ ॥ (९७४)

वर्ष, क्षर, शर, वर–इत्येतेभ्यः उत्तरस्याः सप्तम्या ज उत्तरपदे विभाषाऽलुग्भवति.। वर्षेजः, वर्षजः । शरेजः, शरजः । वरेजः, वरजः ॥

### २८७९. घकालतनेषु कालनाम्नः ॥ १७ ॥ (९७५)

घसंज्ञके प्रत्यये कालशब्दे तनप्रत्यये च परतः कालनाम्न उत्तरस्याः सप्तम्या विभाषाऽलुग्भवति । घ–पूर्वाह्णेतरे, पूर्वाह्णतरे । पूर्वाह्णेतमे, पूर्वाह्णतमे । काल–पूर्वाह्णेकाले, पूर्वाह्णकाले । तन–पूर्वाह्णेतने, पूर्वाह्णतने ।

कालनाम्न इति किम्? शुक्लतरे, शुक्लतमे ।

हलदन्तादित्येव–रात्रितरायाम् । उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्नेष्यते; 'हृदयस्य हृल्लेख' (६–३–५०) इति लेखग्रहणाल्लिङ्गात् । तेन घतनग्रहणे तदन्तग्रहणं न भवति ।

कालेति न स्वरूपग्रहणम् ।

### २८८०. शयवासवासिष्वकालात् ॥ १८ ॥ (९७६)

शय, वास, वासिन्–इत्येतेषूत्तरपदेष्वकालवाचिन उत्तरस्याः सप्तम्या विभाषाऽलुग्भवति । खेशयः, खशयः । ग्रामेवासः, ग्रामवासः । ग्रामेवासी, ग्रामवासी।

अकालादिति किम्? पूर्वाह्णशयः ।

हलन्तादित्येव–भूमिशयः ।

अपो योनियन्मतुषु सप्तम्या अलुग्वक्तव्यः । अप्सुयोनिः । अप्सव्यः । अप्सुमन्तौ । अप्सु भव इति दिगादित्वात् (४–३–५४) यत् प्रत्ययः । सर्वत्र 'सप्तमी' इति योगविभागात्समासः ॥

### २८८१. नेन्सिद्धबध्नातिषु च ॥ १९ ॥ (९७७)

इन्नन्ते उत्तरपदे सिद्धशब्दे बध्नातौ च परतः सप्तम्या अलुग्न भवति । स्थण्डिलवर्ती । सिद्धसांकाश्यसिद्धः । काम्पिल्यसिद्धः । बध्नाति – चक्रबद्धः। चारबद्धः । 'सप्तमी' इति योगविभागात् समासः ।

चक्रबन्ध इति केचिदुदाहरन्ति, तत्पचाद्यजन्तं द्रष्टव्यम् । घञन्ते हि 'बन्धे च विभाषा' (६–३–१३) इत्युक्तम् ॥

### २८८२. स्थे च भाषायाम् ॥ २० ॥ (९७८)

स्थे चोत्तरपदे भाषायां सप्तम्या अलुग्न भवति । समस्थः । विषमस्थः ।

कूटस्थः । पर्वतस्थः ।

भाषायामिति किम्? कृष्णोऽस्याखरेष्ठः । [कृष्णोम्यारेष्ठः । वा. स. २–१] । 'पूर्वपदात्' (८–३–१०६) इति षत्वम् ॥

## २८८३. षष्ठ्या आक्रोशे ॥ २१ ॥ (९७९)

आक्रोशे गम्यमाने उत्तरपदे षष्ठ्या अलुग्भवति । चौरस्य कुलम् । वृषलस्य कुलम् ।

आक्रोशे इति किम्? ब्राह्मणकुलम् ।

षष्ठीप्रकरणे वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु यथासंख्यमलुग् वक्तव्यः (का. वा.१) । वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः ।

आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति चालुग्वक्तव्यः (का.वा.२) । अमुष्यापत्यमामुष्यायणः । नडादित्वात् (४–१–९९) फक् । अमुष्य पुत्रस्य भाव आमुष्यपुत्रिका । मनोज्ञादित्वाद्वुञ् (४–१–१३३) तथा–आमुष्यकुलिकेति ।

देवानाम्प्रिय इत्यत्र च षष्ठ्या अलुग् वक्तव्यः (का.वा.३) । देवानाम्प्रियः ।

शेपपुच्छलाङ्गूलेषु शुनः संज्ञायां षष्ठ्या अलुग्वक्तव्यः (का.वा. ४) । शुनःशेपः। शुनः पुच्छः । शुनोलाङ्गूलः ।

दिवश्च दासे षष्ठ्या अलुग्वक्तव्यः (का.वा.५) । दिवोदासाय गायति ॥

## २८८४. पुत्रेऽन्यतरस्याम् ॥ २२ ॥ (९८०)

पुत्रशब्द उत्तरपदे आक्रोशे गम्यमानेऽन्यतरस्यां षष्ठ्या अलुग् भवति । दास्याः पुत्रः दासीपुत्रः । वृषल्याः पुत्रः, वृषलीपुत्रः ।

आक्रोश इत्येव – ब्राह्मणीपुत्रः ॥

## २८८५. ऋतो विद्यायोनिसम्बन्धेभ्यः ॥ २३ ॥ (९८१)

ऋकारान्तेभ्यो विद्यासम्बन्धवाचिभ्यो योनिसम्बन्धवाचिभ्यश्चोत्तरस्याः षष्ठ्या अलुग्भवति होतुरन्तेवासी । होतुः पुत्रः । पितुरन्तेवासी । पितुः पुत्रः ।

ऋत इति किम्? आचार्यपुत्रः । मातुलपुत्रः ।

विद्यायोनिसम्बन्धेभ्यस्तात्पूर्वोत्तरपदग्रहणम् (का.वा.१) । विद्यायोनिसम्बन्धवाचिन्येवोत्तरपदे यथा स्याद्, अन्यत्र मा भूत् – होतृधनम् । पितृधनम् । होतृगृहम् । पितृगृहम् ॥

## २८८६. विभाषा स्वसृपत्योः ॥ २४ ॥ (९८२)

स्वसृ, पति–इत्येतयोरुत्तरपदयोर्ऋकारान्तेभ्यो विद्यायोनिसम्बन्धवाचिभ्यो विभाषाऽलुग्भवति । मातुःष्वसा । मातुःस्वसा । मातृष्वसा । पितुःष्वसा । पितुःस्वसा। पितृष्वसा । यदा लुक् तदा 'मातृपितृभ्यां स्वसा' (८–३–८४) इति नित्यं षत्वम्.। यदा त्वलुक् तदा 'मातृपितृभ्यामन्यतरस्याम्' (८–३–८५) इति विकल्पेन षत्वम् । दुहितुःपतिः । दुहतृपतिः । ननान्दुपतिः । ननान्दृपतिः ॥

## २८८७. आनङ् ऋतो द्वन्द्वे ॥ २५ ॥ (९२१)

ऋकारान्तानां विद्यायोनिसम्बन्धवाचिनां यो द्वन्द्वस्तत्रोत्तरपदे पूर्वपदस्यानङादेशो भवति । होतापोतारौ । नेष्टोद्गातारौ । प्रशास्ताप्रतिहर्तारौ । योनिसम्बन्धेभ्यः – मातापितरौ । याताननान्दरौ ।

नकारोच्चारणं (र) परत्वनिवृत्त्यर्थम् ।

ऋत इति किम्? पितृपितामहौ । 'पुत्रे' इत्यत्रानुवर्त्तते, 'ऋतः' इति च । तेन पुत्रशब्देऽप्युत्तरपदे ऋकारान्तस्यानङादेशो भवति । पितापुत्रौ । मातापुत्रौ ॥

## २८८८. देवताद्वन्द्वे च ॥ २६ ॥ (९२२)

देवतावाचिनां यो द्वन्द्वस्तत्रोत्तरपदे पूर्वपदस्यानङादेशो भवति । इन्द्रावरुणौ (ऋ. ६–६८–१) । इन्द्रासोमौ (ऋ. ६–७२–३) । इन्द्राबृहस्पती (ऋ ४–६९–१).।

'द्वन्द्वे' इति वर्तमाने पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्यार्थम् । अत्यन्तसहचरिते लोकविज्ञाते द्वन्द्वमित्येतन्निपात्यते । तत्र ये लोके प्रसिद्धसाहचर्याः वेदे च ये सहवापनिर्दिष्टास्तेषामिह ग्रहणं भवति । तेन ब्रह्मप्रजापती, शिववैश्रवणावित्येवमादौ न भवति ।

उभयत्र वायोः प्रतिषेधो वक्तव्यः (का.वा.१) । अग्निवायू । वाय्वग्नी ॥

## २८८९. ईदग्नेः सोमवरुणयोः ॥ २७ ॥ (९२३)

सोम, वरुण– इत्येतयोर्देवताद्वन्द्वेऽग्नेरीकारादेशो भवति । अग्नीषोमौ (ऋ. १.९३.१) । अग्नीवरुणौ । 'अग्नेः स्तुत्स्तोमसोमाः' (८.३.८२) इति षत्वम् ॥

## २८९०. इद् वृद्धौ ॥ २८ ॥ (९२५)

कृतवृद्धावुत्तरपदे देवताद्वन्द्वेऽग्नेरिकारादेशो भवति । आग्निवारुणी-मनड्वाहीमालभेत (काठ, १३.६) आग्निमारुतं कर्म क्रियते । अग्नीवरुणौ देवते अस्य, अग्नीमरुतौ देवते अस्येति तद्धितः । तत्र 'देवताद्वन्द्वे च' (७.३.२१) इत्युभयपदवृद्धौ कृतायामानङ्, ईत्वं च बाधितुमिकारः क्रियते ।

वृद्धाविति किम्? आग्नेन्द्रः । 'नेन्द्रस्य परस्य' (७.३.२४) इत्युत्तरपदवृद्धिः प्रतिषिध्यते ।

इद् वृद्धौ विष्णोः प्रतिषेधो वक्तव्यः (म. भा.) । आग्नावैष्णवं चरुं निर्वपेत् (मै.सं. १.५.१) ॥

## २८९१. दिवो द्यावा ॥ २९ ॥ (९२६)

दिवित्येतस्य 'द्यावा' इत्ययमादेशो भवति देवताद्वन्द्वे उत्तरपदे । द्यावाक्षामे (ऋ. ८.१८.१६) । द्यावाभूमी (ऋ. १०.६५.४) ॥

## २८९२. दिवसश्च पृथिव्याम् ॥ ३० ॥ (९२७)

पृथिव्यामुत्तरपदे देवताद्वन्द्वे दिवः 'दिवस्' -इत्ययमादेशो भवति, चकाराद् 'द्यावा' च । दिवस्पृथिव्यौ (ऋ. २.२.३) द्यावापृथिव्यौ ।

अकारोच्चारणं सकारस्य विकाराभावप्रतिपत्त्यर्थम् । तेन रुत्वादीनि न भवन्ति।

कथम् 'द्यावा चिदस्मै पृथिवी नमेते' (ऋ २.१२.१३) इति? कर्तव्योऽत्र यत्नः ॥

## २८९३. उषासोषसः ॥ ३१ ॥ (९२८)

उषसः 'उषासा' इत्ययमादेशो भवति देवताद्वन्द्वे उत्तरपदे । उषासासूर्यम् । उषासानक्ता (ऋ. १.१२२.२) ॥

## २८९४. मातरपितरावुदीचाम् ॥ ३२ ॥ (९२९)

'मातरपितरौ' इत्युदीचामाचार्याणां मतेनारङादेशो मातृशब्दस्य निपात्यते । मातरपितरौ ।

उदीचामिति किम्? मातापितरौ ॥

## २८९५. पितरामातरा च च्छन्दसि ॥ ३३ ॥ (३५३८)

'पितरामातरा' इति छन्दसि निपात्यते । आ मा गन्तां पितरामातरा च (वा.सं. ९.१९) । पूर्वपदस्य अराङादेशो निपात्यते । उत्तरपदे तु 'सुपां सुलुक्' (७.१.३९) इति आकारादेशः, तत्र 'ऋतो ङिसर्वनामस्थानयोः' (७.३.११०) इति गुणः ।

छन्दसीति किम्? मातापितरौ ॥

## २८९६. स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ॥ ३४ ॥ (८३१)

भाषितः पुमान्येन समानायामाकृतावेकस्मिन्प्रवृत्तिनिर्मित्ते स भाषितपुंस्कः शब्दः । तदेतदेवं कथं भवति? भाषितः पुमान् यस्मिन्नर्थे प्रवृत्तिनिमित्ते स भाषितपुंस्कशब्देनोच्यते, तस्य प्रतिपादको यः शब्दः सोऽपि भाषितपुंस्कः । ऊङोऽभावः अनूङ्, भाषितपुंस्कादनूङ् यस्मिन् स्त्रीशब्दे स भाषितपुंस्कादनूङ् स्त्रीशब्दः । बहुव्रीहिरयम्, अलुग् निपातनात् पञ्चम्याः । तस्य भाषितपुंस्कादनूङः स्त्रीशब्दस्य पुंशब्दस्येव रूपं भवति  समानाधिकरणे उत्तरपदे स्त्रीलिङ्गे पूरणीप्रियादिवर्जिते । दर्शनीयभार्यः ।  श्लक्ष्णचूडः । दीर्घजङ्घः ।

स्त्रिया इति किम्? ग्रामणि ब्राह्मणकुलं दृष्टिरस्य ग्रामणिदृष्टिः । भाषितपुंस्कादिति किम्? खट्वाभार्यः । समानायामाकृताविति किम्? द्रोणीभार्यः ।

कथं गर्भिभार्यः, प्रसूतभार्यः, प्रजातभार्य इति । कर्तव्योऽत्र यत्नः ।

अनूङ इति किम्? ब्रह्मबन्धूभार्यः । समानाधिकरण इति किम्? कल्याण्या माता कल्याणीमाता । स्त्रियामिति किम्? कल्यणी प्रधानमेषां कल्याणीप्रधाना इमे.।

प्रधानपूरणीग्रहणं कर्तव्यम्, इह मा भूत्–कल्याणपञ्चमीकः पक्ष इति । 'अप् पूरणीप्रमाण्योः' ।

अपूरणीति किम्? कल्याणी पञ्चमी यासां ताः कल्याणीपञ्चमा रात्रयः । कल्याणीदशमाः । (५.४.११६) इत्यत्रापि प्रधानपूरणीग्रहणमेवेत्यप्प्रत्ययो न भवति.।

अप्रियादिष्विति किम्? कल्याणीप्रियः ।

प्रिया । मनोज्ञा । कल्याणी । सुभगा । दुर्भगा भक्तिः । सचिवा । अम्बा । कान्ता । क्षान्ता । समा । चपला । दुहिता । वामा प्रियादिः । दृढभक्तिरित्येवमादिषु स्त्रीपूर्वपदस्याविवक्षितत्त्वात् सिद्धमिति समाधेयम् ॥

## २८९७. तसिलादिष्वाकृत्वसुचः ॥ ३५ ॥ (८३६)

'पञ्चम्यास्तसिल्' (५.३.७) इत्यतः प्रभृति 'सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' (५.४.१७) इति प्रागेतस्माद् ये प्रत्ययास्तेषु भाषितपुंस्कादनूङ्स्त्रियाः पुंवद्भवति । तस्याः शालायाः=ततः । तस्यां=तत्र यस्या=यतः । यस्यां=यत्र ।

तसिलदिषु परिगणनं कर्तव्यम्–त्रतसौ (५.३.१०), (५.३.७) । तरप्तमपौ (५.३.४७) (५.३.५५) चरट्जातीयरौ (५.३.५३), (५.३.६९) । कल्पब्देश्यदेशीयरः (५.३.६७) । रूपप्पाशपौ (५.३.६६), (५.३.४७) । थम्थालौ (५.३.२४), (५.३.३३)। दार्हिलौ (५.३.१५–१६) । तिल्तातिलौ (५.४.४१) ।

शसि बह्वल्पार्थस्य पुंवद्भावो वक्तव्यः (म. भा.) । बह्वीभ्यो देहि, अल्पाभ्यो देहि=बहुशो देहि, अल्पशो देहि ।

त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यः (म. भा.) । पट्व्या भावः पटुत्वम् । पटुता । गुणवचनस्येति किम्? कठ्या भावः कठीत्वम्, कठीता ।

कथमाग्नायो देवताऽस्य आग्नेयः स्थालीपाक इति ? कर्तव्योऽत्र यत्नः ।

भस्याढे तद्धिते पुंवद्भवो वक्तव्यः (म. भा.) । हस्तिनीनां समूहो हास्तिकम्। अढ इति किम्? श्यैनेयः । रौहिणेयः ।

ठक्छसोश्च पुंवद्भावो वक्तव्यः (का.वा.१२) । भवत्याश्छात्रा भावत्काः । भवदीयाः ॥

## २८९८. क्यङ्मानिनोश्च ॥ ३६ ॥ (८३७)

क्यङि परतो मानिनि च स्त्रिया भाषितपुंस्कादनूङ् पुंवद्भवति । एनी–एतायते । श्येनी–श्येतायते । मानिनि–दर्शनीयमानी अयमस्याः । दर्शनीयमानिनीयमस्याः ॥

मानिनोग्रहणामस्त्र्यर्थम्, असमानाधिकरणार्थं च (का.वा.१) । इह तु दर्शनीयमात्मानं मन्यते दर्शनीयमानिनीति पूर्वेणैव सिद्धम् ॥

## २८९९. न कोपधायाः ॥ ३७ ॥ (८३८)

कोपधायाः स्त्रियाः पुंवद्भावो न भवति । पाचिकाभार्यः । कारिकाभार्यः । मद्रिकाभार्यः । वृजिकाभार्यः । मद्रिकाकल्प । वृजिकाकल्पा । मद्रिकायते । वृजिकायते । मद्रिकामानिनी । वृजिकायते । मद्रिकामानिनी । विजिकामानिनी । विलेपिकाया धर्म्यं वैलेपिकम् (म.भा.) ।

कोपधप्रतिषेधे तद्धितवुग्रहणं कर्तव्यम् (का.वा.१) । इह मा भूत्–पाकभार्यः, भेकभार्य इति ॥

## २९००. संज्ञापूरण्योश्च ॥ ३८ ॥ (९३९)

संज्ञायाः पूरण्याश्च स्त्रियाः पुंवद्भावो न भवति । दत्ताभार्यः । गुप्ताभार्यः । दत्तापाशा । गुप्तापाशा । दत्तायते । गुप्तायते । दत्तामानिनी । गुप्तामानिनी ।

पूरण्याः–पञ्चमीभार्यः । दशमीभार्यः । पञ्चमीपाशा । दशमीपाशा । पञ्चमीयते.। दशमीयते पञ्चमीमानिनी । दशमीमानिनी ।

## २९०१. वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे ॥ ३९ ॥ (९४०)

'न' इति वर्तते । वृद्धेर्निमित्तं यस्मिन् स वृद्धिनिमित्तस्तद्धितः स यदि रक्तेऽर्थे विकारे च न विहितः, तदन्तस्य स्त्रीशब्दस्य न पुंवद्भवति । स्रौघ्नीभार्यः। माथुरीभार्यः । स्रौघ्नीपाशा । स्रौघ्नीयते । माथुरीयते । स्रौघ्नीमानिनी । माथुरीमानिनी.।

वृद्धिनिमित्तस्येति किम्? मध्यमभार्यः । तद्धितस्येति किम्? काण्डलावभार्यः। बहुव्रीहिपरिग्रहः किमर्थः? तावद्भार्यः । यावद्भार्यः ।

अरक्तविकार इति किम्? कषायेण रक्ता काषायी, काषायी बृहतिका यस्य स काषायबृहतिकः लोहस्य विकारो लौही, लौही ईषा यस्य रथस्य स लौहेषः । खादिरेषः ॥

## २९०२. स्वाङ्गाच्चेतोऽमानिनि ॥ ४० ॥ (८४१)

स्वाङ्गादुत्तरो य ईकारस्तदन्तायाः स्त्रिया न पुंवद्भवति अमानिनि परतः । दीर्घकेशीभार्यः । श्लक्ष्णकेशीभार्यः । दीर्घकेशीपाशा । श्लक्षणकेशीपाशा । दीर्घकेशीयते । श्लक्ष्णकेशीयते ।

स्वाङ्गादिति किम्? पटुभार्यः । ईत इति किम्? अकेशभार्यः । अमानिनीति

किम्? दीर्घकेशमानिनी ॥

## २९०३. जातेश्च ॥ ४१ ॥ (८४२)

जातेश्च स्त्रिया न पुंवद्भवति अमानिनि परतः । कठीभार्यः । बह्वृचीभार्यः। कठीपाशा । बह्वृचीपाशा । कठीयते । बह्वृचीयते ।

अमानिनीत्येव – कठमानिनी । बहवृचमानिनी ।

अयं प्रतिषेध औपसङ्ख्यानिकस्य पुंवद्भावस्य नेष्यते । [म.भा. ६.३.३५.११] हस्तिनीनां समूहो हास्तिकम् ॥

## २९०४. पुंवत्कर्मधारयजातीयदेशीयेषु ॥ ४२ ॥ (८४६)

कर्मधारये समासे जातीय, देशीय–इत्येतयोश्च प्रत्यययो र्भाषितपुंस्कादनूङ् स्त्रियाः पुंवद्भवति प्रतिषेधार्थोऽयमारम्भः ।

'न कोपधायाः' (६.३.३७) इत्युक्तम्, तत्रापि भवति । पाचकवृन्दारिका । पाचकजातीया । पाचकदेशीया ।

'संज्ञापूरणयोश्च' (६.३.३८) इत्युक्तम्, तत्रापि भवति । दत्तवृन्दारिका । दत्तजातीया । दत्तदेशीया । पूरण्याः– पञ्चमवृन्दारिका । पञ्चमजातीया । पञ्चमदेशीया.।

'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' (६.३.३९) इत्युक्तम्, तत्रापि भवति। स्त्रौध्नजातीया । स्त्रौघ्नदेशीया ।

'स्वाङ्गाच्चेतोऽमानिनि' (६.३.४०) इत्युक्तम्, तत्रापि भवति । श्लक्ष्णमुखवृन्दारिका । श्लक्ष्णमुखजातीया । श्लक्ष्णमुखदेशीया ।

'जातेश्च' (६.३.४१) इत्युक्तम्, तत्रापि भवति । कठवृन्दारिका । कठजातीया। कठदेशीया ।

भाषितपुंस्कादित्येव–खट्वावृन्दारिका ।

अनूङित्येव–ब्रह्मबन्धूवृन्दारिका ॥

कुक्कुट्यादीनामण्डादिषु पुंवद्भावो वक्तव्यः (का.वा.१) । कुक्कुट्या अण्डं कुक्कुटाण्डम् । मृग्याः पदं मृगपदम् । मृग्याः क्षीरं मृगक्षीरम् । काक्याः शावः काकशावः ।

न वाऽस्त्रीपूर्वपदस्य विवक्षितत्वात् (का.वा.२) । स्त्रीत्वेन विना पूर्वपदार्थोऽत्र

जातिः सामान्येन विवक्षितः ।

पुंवद्भावाद् ह्रस्वत्वं खिद्घादिषु भवति विप्रतिषेधेन (म. भा.) । खित्–कालिम्मन्या हरिणिम्मन्या । घादि–पट्वितरा । पट्वितमा । पट्विरूपा । पट्विकल्पा.। क–पट्विका । मृद्विका ।

इहेडबिड्, दरद्, पृथ, उशिजित्येते जनपदशब्दाः क्षत्त्रियवचनाः । तत्र तद्राजप्रत्ययस्य स्त्रियाम् 'अतश्च' (४.१.१७७) इति लुकि कृते इडबिट्वृन्दारिकेति विगृह्य समासः क्रियते । ततः पुंवद्भावेन ऐडबिडादयः पुंशब्दाः क्रियन्ते । ऐडबिडवृन्दारिका । औशिजवृन्दारिका । दारदवृन्दारिका । पार्थवृन्दारिका ॥

## २९०५. घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ॥ ४३ ॥ (९८५)

घ, रूप, कल्प, चेलट्, ब्रुव, गोत्र, मत, हत–इत्येतेषु परतो भाषितपुंस्कात् परो यो ङीप्रत्ययस्तदन्तस्यानेकाचो ह्रस्वो भवति । घ–ब्राह्मणितरा, ब्राह्मणितमा । रूप–ब्राह्मणिरूपा । कल्प–ब्राह्मणिकल्पा । चेलट्–ब्राह्मणिचेली । ब्रुव–ब्राह्मणिब्रुवा। गोत्र–ब्राह्मणिगोत्रा । मत–ब्राह्मणिमता । हत ब्राह्मणिहता ।

घरूपकल्पाः प्रत्ययाश्चेलडादीन्युत्तरपदानि ।

'ब्रुव' इति – ब्रवीतीति ब्रुवः पचाद्यचि, वच्यादेशो गुणश्च निपातनान्न भवति ।

ङ्य इति किम्? दत्तातरा । गुप्तातरा । अनेकाच इति किम्? 'नद्याः शेषस्यान्यतरस्याम्' (६.३.४४) इति वक्ष्यति ।

भाषितपुंस्कादित्येव–आमलकीतरा । कुवलीतरा ॥

## २९०६. नद्याः शेषस्यान्यतरस्याम् ॥ ४४ ॥ (९८६)

नद्याः शेषस्य घादिषु परतो ह्रस्वो भवति अन्यतरस्याम् । कश्च शेषः? अङी च या नदी ङ्यन्तं च यदेकाच् । ब्रह्मबन्धूतरा, ब्रह्मन्धुतरा । वीरबन्धूतरा, वीरबन्धुतरा। स्त्रितरा, स्त्रीतरा । स्त्रितमा, स्त्रीतमा ।

कृन्नद्याः प्रतिषेधो वक्तव्यः (म. भा. सौनागवा.) । लक्ष्मीतरा । तन्त्रीतरा ॥

## २९०७. उगितश्च ॥ ४५ ॥ (९८७)

उगितश्च परस्या नद्या घादिषु अन्यतरस्यां ह्रस्वो भवति । श्रेयसितरा, श्रेयसीतरा, श्रेयस्तरा । विदुषितरा, विदुषीतरा, विद्वत्तरा ।

पुंवद्भावोऽप्यत्र पक्षे वक्तव्यः प्रकर्षयोगात्प्राक् स्त्रीत्वस्याविवक्षितत्वाद्वा सिद्धम्॥

## २९०८. आन्महतः समानाधिकरणजातीययोः ॥ ४६ ॥ (८०७)

समानाधिकरण उत्तरपदे जातीये च प्रत्यये परतो महत आकारादेशो भवति। महादेवः । महाब्राह्मणः । महाबाहुः । महाबलः । जातीये–महाजातीयः ।

समानाधिकरणजातीययोरिति किम्? महतः पुत्रो महत्पुत्रः । लक्षणोक्तत्वादेवात्र न भविष्यतीति चेद्? बहुव्रीहावपि न स्याद्–महाबाहुरिति । तदर्थं समानाधिकरणग्रहणं वक्तव्यम् ।

अमहान् महान् सम्पन्नो महद्भूतश्चन्द्रमाः – इत्यत्र गौणत्वान्महदर्थस्य न भवत्यात्त्वम् ।

महदात्त्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्वचनं चासमानाधिकरणार्थम् (का.वा.१).। महत्या घासः महाघासः । महत्याः करः महाकरः । महत्या विशिष्टः महाविशिष्टः ।

अष्टनः कपाले हविष्युपसंख्यानम् (का.वा.२) । अष्टाकपालं चरुं निर्वपेत् । हविषीति किम्? अष्टकपालं ब्राह्मणस्य ।

गवि च युक्तेऽष्टन उपसंख्यानं कर्त्तव्यम् (का.वा.३) । अष्टागवेन शकटेन । युक्त इति किम्? अष्टगवं ब्राह्मणस्य ।

गवि च युक्तेऽष्टन उपसंख्यानं कर्त्तव्यम् (का.वा.३) । अष्टागवेन शकटेन । युक्त इति किम्? अष्टगवं ब्राह्मणस्य ।

तपरकरणं विस्पष्टार्थम् ॥

## २९०९. द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ॥ ४७ ॥ (८०८)

द्वि, अष्टन्–इत्येतयोराकारादेशो भवति संख्यायामुत्तरपदे अबहुव्रीह्यशीत्योः। द्वादश । द्वाविंशतिः । द्वात्रिंशत् । अष्टादश । अष्टाविंशतिः । अष्टात्रिंशत् ।

द्व्यष्टन इति किम्? पञ्चदश । संख्यायामिति किम्? द्वैमातुरः । आष्टमातुरः। अबहुव्रीह्यशीत्योरिति किम्? द्वित्रः । द्विदशाः । द्व्यशीतिः ।

प्राक् शतादिति वक्तव्यम् [म. भा.] । इह मा भूत्–द्विशतम् । द्विसहस्रम् । अष्टशतम् । अष्टसहस्रम् ॥

## २९१०. त्रेस्त्रयः ॥ ४८ ॥ (८०९)

'त्रि' इत्येतस्य 'त्रयस्' इत्ययमादेशो भवति संख्यायामबहुव्रीह्यशीत्योः । त्रयोदश । त्रयोविंशतिः । त्रयस्त्रिंशत् ।

'संख्यायाम्' इत्येव–त्रैमातुरः ।

'अबहुव्रीह्यशीत्योः' इत्येव–त्रिदशाः । त्र्यशीतिः ।

'प्राक् शतात्' इत्येव–त्रिशतम् । त्रिसहस्रम् ॥

## २९११. विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ॥ ४९ ॥ (८१०)

चत्वारिंशत्प्रभृतौ सङ्ख्यायामुत्तरपदेऽबहुव्रीह्यशीत्योः सर्वेषां द्व्यष्टन्, त्रि– इत्येतेषां यदुक्तं तद्विभाषा भवति । द्विचत्वारिंशत्, द्वाचत्वारिंशत् । त्रिंपञ्चाशत्, त्रयःपञ्चाशत् । अष्टपञ्चाशत्, अष्टापञ्चाशत् ।

सर्वेषाम्–ग्रहणं त्रयाणामपि यथा स्यात् ।

प्राक् शतादित्येव–द्विशतम् । अष्टशतम् । त्रिशतम् ॥

## २९१२. हृदयस्य हृल्लेखयदण्लासेषु ॥ ५० ॥ (९८८)

हृदयस्य 'हृत्' इत्ययमादेशो भवति लेख, यत्, अण्, लास–इत्येतेषु परतः। हृदयं लिखतीति हृल्लेखः । यत्–हृदयस्य प्रियं हृद्यम् । अण्–हृदयस्येदं हार्दम्। लास–हृदयस्य लासो हृल्लासः ।

'लेख' इत्यणन्तस्य ग्रहणमिष्यते । घञि तु – हृदयस्य लेखो हृदयलेखः ।

एतदेव लेखग्रहणं ज्ञापकम्–उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्ताग्रहणस्य ॥

## २९१३. वा शोकष्यञ्रोगेषु ॥ ५१ ॥ (९८९)

शोक, ष्यञ्, रोग– इत्येतेषु परतो हृदयस्य वा 'हृत्' इत्ययमादेशो भवति। हृच्छोकः, हृदयशोकः । ष्यञ्–सौहार्द्यम्, सौहृदयम् । ब्राह्मणादित्वात् ष्यञ्

(५.१.१२४) । हृदादेशपक्षे 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' (७.३.१९) इत्युभयपदवृद्धिः । रोगे – हृद्रोगः, हृदयरोगः ।

हृदयशब्देन समानार्थो हृत्–शब्दः प्रकृत्यन्तरमस्ति, तेनैव सिद्धे विकल्पविधानं प्रपञ्चार्थम् ॥

## २९१४. पादस्य पदाज्यातिगोपहतेषु ॥ ५२ ॥ (९९०)

पादस्य 'पद' इत्ययमादेशो भवति आजि, आति, ग, उपहत–इत्येतेषूत्तरपदेषु। पादाभ्यामजतीति पदाजिः । पादाभ्यामततीति पदातिः । 'अज्यतिभ्यां पादे च' (उणादि ५८०–८१) इत्यौणादिक इण्प्रत्ययः । तत्राजेर्वीभावो न भवति, अत एव निपातनात् । पादाभ्यां गच्छतीति पदगः । पादेनोपहतः पदोपहतः । पादशब्दो वृषादित्वादाद्युदात्तः, तस्य स्थाने पदादेश उपदेश एवान्तोदात्तो निपात्यते । तेन पदोपहत इति 'तृतीया कर्मणि' (६.२.४८) इति पूर्वपदप्रकृतिस्वरत्वेनान्तोदात्तत्वं भवति । पदाजिः, पदातिः, पदगः–इत्येतेषु कृत्स्वरेण समासस्यैवान्तोदात्तत्वम् ॥

## २९१५. पद्यत्यतदर्थे ॥ ५३ ॥ (९९१)

यत्प्रत्यये परतः पादस्य पदित्ययमादेशो भवत्यतदर्थे । पादौ विध्यन्ति पद्याः शर्कराः । पद्याः कण्टकाः ।

अतदर्थ इति किम्? पादार्थमुदकं पाद्यम् ।

पद्भावे इके चरतावुपसङ्ख्यानम् (का.वा.१) । पादाभ्यां चरति पदिकः । 'पर्पादिभ्यः ष्ठन्' (४.४.१०) इति पादशब्दात् ष्ठन्प्रत्ययः ।

शरीरावयववचनस्य पादशब्दस्य ग्रहणमिहेष्यते, तेन 'पणपादमाषशताद्यद्' (५.१.३४) इत्यत्र पदादेशो न भवति । द्विपाद्यम् । त्रिपाद्यम् ॥

## २९१६. हिमकाषिहतिषु च ॥ ५४ ॥ (९९२)

हिम, काषिन्, हति–इत्येतेषु पादशब्दस्य पदित्ययमादेशो भवति । हिम–पद्धिमम् । काषिन्–अथ पत्काषिणो यान्ति । हति – पद्धतिः ॥

## २९१७. ऋचः शे ॥ ५५ ॥ (९९३)

ऋक्सम्बन्धिनः पादशब्दस्य शे परतः पदित्ययमादेशो भवति । पच्छो गायत्रीं शंसति । पादंपादं शंसतीति 'संख्यैकवचनाच्च वीप्सायाम्' (५.४.४३)

इति शस्प्रत्ययः ।

ऋच इति किम्? पादशः कार्षापणं ददातीति ॥

### २९१८. वा घोषमिश्रशब्देषु ॥ ५६ ॥ (९९४)

घोष, मिश्र, शब्द–इत्येतेषु चोत्तरपदेषु पादस्य वा 'पद्' इत्ययमादेशो भवति । पद्घोषः । पादघोषः । पन्मिश्रः, पादमिश्रः । पच्छब्दः, पादशब्दः ।

निष्के चेति वक्तव्यम् (का.वा. १) । पन्निष्कः, पादनिष्कः ॥

### २९१९. उदकस्योदः संज्ञायाम् ॥ ५७ ॥ (९९५)

उदकशब्दस्य संज्ञायां विषये 'उद' –इत्ययमादेशो भवति उत्तरपदे परतः । उदमेघो नाम यस्य औदमेघिः पुत्रः । उदवाहो नाम यस्य औदवाहिः पुत्रः ।

संज्ञायामिति किम्? उदकगिरिः ।

संज्ञायामुत्तरपदस्य उदकशब्दस्य उदादेशो भवतीति वक्तव्यम् (का.वा.१) । लोहितोदः । नीलोदः । क्षीरोदः ॥

### २९२०. पेषंवासवाहनधिषु च ॥ ५८ ॥ (९९६)

पेषं, वास, वाहन, धि– इत्येतेषु चोत्तरपदेषु उदकस्य 'उद' इत्ययमादेशो भवति । उदपेषं पिनष्टि 'स्नेहने पिषः' (३.४.६८) इति णमुल् । वास–उदकस्य वास उदवासः । वाहन–उदकस्य वाहन उदवाहनः । धि–उदकं धीयतेऽस्मिन्नित्युदधिः.॥

### २९२१. एकहलादौ पूरयितव्येऽन्यतरस्याम् ॥ ५९ ॥ (९९७)

'उदकस्योदः' इति वर्त्तते । एकः=असहायः तुल्यजातीयेनानन्तरेण हलादिना.। हल् आदिर्यस्योत्तरपदस्य तदेकहलादिः, तस्मिन्नेकहलादौ पूरयितव्यवाचिन्यन्य–तरस्यामुदकस्य 'उद' इत्ययमादेशो भवति । उदकुम्भः, उदककुम्भः । उदपात्रम्। उदकपात्रम् ।

एकहलादाविति किम्? उदकस्थालम् । पूरयितव्य इति किम्? उदकपर्वतः॥

### २९२२. मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च ॥ ६० ॥

(९९८)

मन्थ, ओदन, सक्तु, बिन्दु, वज्र, भार, हार, वीवध, गाह–इत्येतेषूत्तरपदेषूदकस्य 'उद' इत्ययमादेशो भवति अन्यतरस्याम् । उदकेन मन्थ उदमन्थः, उदकमन्थः । ओदन–उदकेनौदनः उदौदनः, उदकौदनः । सक्तु–उदकेन सक्तुः उदसक्तुः, उदकसक्तुः । बिन्दु–उदकस्य बिन्दुः उदबिन्दुः उदकबिन्दुः । वज्र–उदकस्य वज्रः उदवज्रः, उदकवज्रः । भार–उदकं बिभर्तीति उदभारः उदकभारः । हार–उदकं हरतीति उदहारः, उदकहारः । वीवध–उदकस्य वीवधः उदवीवधः, उदकवीवधः.। गाह – उदकं गाहत इति उदगाहः, उदकगाहः ॥

## २९२३. इको ह्रस्वोऽङ्यो गालवस्य ॥ ६१ ॥ (९९९)

इगन्तस्याङ्यन्तस्योत्तरपदे ह्रस्वो भवति गालवस्याचार्यस्य मतेनान्यतरस्याम्। ग्रामणिपुत्रः, ग्रामणीपुत्रः । ब्रह्मबन्धुपुत्रः, ब्रह्मबन्धूपुत्रः ।

इक इति किम्? खट्वापादः । मालापादः । अङ्य इति किम्? गार्गीपुत्रः । वात्सीपुत्रः ।

गालवग्रहणं पूजार्थम्, 'अन्यतरस्याम्' इति हि वर्तते ।

व्यवस्थितविभाषा चेयम् । तेनेह न भवति – कारीषगन्धीपुत्र इति ।

इयङुवङ्भाविनामव्ययानां च न भवति – श्रीकुलम्, भ्रूकुलम् । काण्डीभूतम्, वृषलीभूतम् ।

भ्रुकुंसादीनां तु भवत्येव–भ्रुकुंसः, भ्रुकुटिः ।

अपर आह–भ्रुकुंसादीनामकारो भवतीति वक्तव्यम् (म. भा.) भ्रकुंसः । भ्रकुटिः ॥

## २९२४. एक तद्धिते च ॥ ६२ ॥ (१०००)

एकशब्दस्य तद्धिते उत्तरपदे च ह्रस्वो भवति । एकस्या आगतमेकरूप्यम्। एकमयम् । एकस्या भाव एकत्वम् । एकता । उत्तरपदे–एकयाः क्षीरम् एकक्षीरम्। एकदुग्धम् ।

लिङ्गविशिष्टस्य ग्रहणमेकशब्दह्रस्वत्वं प्रयोजयति । अचा हि गृह्यमाणमत्र विशेष्यते, न पुनरच् गृह्यमाणेनेति ॥

## २९२५. ङ्यापोः संज्ञाछन्दसोर्बहुलम् ॥ ६३ ॥ (१००१)

ङ्यन्तस्याबन्तस्य च संज्ञाछन्दसोर्बहुलं ह्रस्वो भवति । ङ्यन्तस्य संज्ञायाम्–रेवतिपुत्रः, रोहिणिपुत्रः, भरणिपुत्रः । न च भवति – नान्दीकरः, नान्दीघोषः, नान्दीविशालः । ङ्यन्तस्य छन्दसि – कुमारिदा, उर्विदा [कुमारिदा प्रफर्विदा । काठ. ३९.९] । न च भवति = फाल्गुनीपौर्णमासी, जगतीच्छन्दः ।

आबन्तस्य संज्ञायाम्–शिलवहम्, शिलप्रस्थम् । न च भवति – लोमकागृहम्। लोमकाषण्डम् । आबन्तस्य छन्दसि – अजक्षीरेण जुहोति, ऊर्णमृदा [ऊर्णम्रदा]पृथिवी विश्ववधायसम् । न च भवति – ऊर्णा सूत्रेणकवयो वयन्ति ॥

## २९२६. त्वे च ॥ ६४ ॥ (१००२)

त्वप्रत्यये परतो ङ्यापोर्बहुलं ह्रस्वो भवति । तदजाया भावः अजत्वम् । अजात्वम् । तद्रोहिण्या भावो रोहिणित्वम् (काठ. सं. ८.१) संज्ञायामसम्भ–वाच्छन्दस्येवोदाहरणानि भवन्ति ॥

## २९२७. इष्टकेषीकामालानां चिततूलभारिषु ॥ ६५ ॥ (१००६)

इष्टकेषीकामालानां चित्, तूल, भारिन्–इत्येतेषूत्तरपदेषु यथासंख्यं ह्रस्वो भवति । इष्टकचितम् । इषीकतूलम । मालभारिणी कन्या ।

इष्टकादिभ्यस्तदन्तस्यापि ग्रहणं भवति । पक्वेष्टकचितम् । मुञ्जेषीकतूलम्। उत्पलमालभारिणी कन्या ॥

## २९२८. खित्यनव्ययस्य ॥ ६६ ॥ (२९४३)

खिदन्ते उत्तरपदेऽनव्ययस्य ह्रस्वो भवति । कालिम्मन्या । हरिणिम्मन्या । मुमा ह्रस्वो न बाध्यते; अन्यथा हि ह्रस्वशासनमनर्थकं स्यात् ।

अनव्ययस्येति किम्? दोषामन्यमहः । दिवामन्या रात्रिः ।

'अनव्ययस्य' इत्येतदेव ज्ञापकमिह खिदन्तग्रहणस्य ॥

## २९२९. अरुर्द्विषदजन्तस्य मुम् ॥ ६७ ॥ (२९४२)

अरुस्, द्विषत्–इत्येतयोरजन्तानां च खिदन्त उत्तरपदे मुमागमो भवति अनव्ययस्य । अरुन्तुदः । द्विषन्तपः । अजन्तानाम्–कालिम्मन्या ।

अरुर्द्विषदजन्तस्येति किम्? विद्वन्मन्यः ।

अनव्ययस्येत्येव–दोषामन्यमहः । दिवामन्या रात्रिः ।

अन्तग्रहणं किम्? कृताजन्तकार्यप्रतिपत्त्यर्थम् । अतो ह्रस्वे कृते मुम्भवति॥

## २९३०. इच एकाचोऽम्प्रत्ययवच्च ॥ ६८ ॥ (२९९४)

इजन्तस्य एकाचः खिदन्ते उत्तरपदेऽमागमो भवति, अम्प्रत्ययवच्च द्वितीयैकवचनवच्च स भवति । अमिति हि द्विरावर्तते । गाम्मन्यः । स्त्रीम्मन्यः, स्त्रियम्मन्यः । नरम्मन्यः । श्रियम्मन्यः । भ्रुवम्मन्यः । 'अम्प्रत्ययवच्च' – इत्यतिदेशादात्वपूर्वसवर्णगुणेयङुवङादेशा भवन्ति ।

इच इति किम्? त्वङ्मन्यः । एकाच इति किम्? लेखाभ्रुम्मन्यः ।

अथेह कथं भवितव्यम्–श्रियमात्मानं ब्राह्मणकुलं मन्यत इत्युपक्रम्य? 'श्रिमन्यमिति भवितव्यम्' इति भाष्ये स्थितम् । तत्रेदं भाष्यकारस्य दर्शनम्–अत्र विषये परित्यक्तस्वलिङ्गः श्रीशब्दो ब्राह्मणकुले वर्तते, यथा–प्रष्ठादयः स्त्रियाम् । तत्र 'स्वमोर्नपुंसकात्' (७.१.२३) इत्यमो लुग्भवति ॥

## २९३१. वाचंयमपुरन्दरौ च ॥ ६९ ॥ (२९५७)

वाचंयम, पुरन्दर–इत्येतौ निपात्येते । वाचंयम आस्ते । पुरं दारयतीति पुरन्दरः ॥

## २९३२. कारे सत्यागदस्य ॥ ७० ॥ (१००७)

कारशब्द उत्तरपदे सत्य, अगद–इत्येतयोर्मुमागमो भवति । सत्यं करोतीति, सत्यस्य वा कारः सत्यङ्कारः । एवम्–अगदङ्कारः ।

अस्तुसत्यागदस्य कार इति वक्तव्यम् (का.वा.१) । अस्तुङ्कारः ।

भक्षस्य छन्दसि कारे मुम् वक्तव्यः (का.वा.१) । भक्षं करोतीति, भक्षस्य वा कारः भक्षङ्कारः । छन्दसीति किम्? भक्षकारः ।

चेनोर्भव्ययां मुम्वक्तव्यः (का.वा. ३) । धेनुम्भव्या ।

लोकस्य पृणे मुम्वक्तव्यः (का.वा.४) लोकम्पृणः ।

इत्येऽनभ्याशस्य मुम्वक्तव्यः (का.वा.५) अनभ्याशमित्यः ।

भ्राष्ट्राग्न्योरिन्धे मुम्वक्तव्यः (का.वा.६) भ्राष्ट्रमिन्धः । अग्निमिन्धः ।

गिलेऽगिलस्य मुम्वक्तव्यः (का.वा.७) तिमिङ्गिलः । अगिलस्येति किम्? गिलगिलः ।

गिलगिले चेति वक्तव्यम् (का.वा.८) तिमिङ्गिलगिलः ।

उष्णभद्रयोः करणे मुम्वक्तव्यः (का.वा.९) उष्णङ्करणम् । भद्रङ्करणम् ।

सूतोग्रराजभोजमेर्वित्येतेभ्य उत्तरस्य दुहितृशब्दस्य पुत्रडादेशो वा वक्तव्यः (का.वा. १०) सूतपुत्री । सूतदुहिता । उग्रपुत्री । उग्रदुहिता । राजपुत्री । राजदुहिता। भोजपुत्री । भोजदुहिता । मेरुपुत्री । मेरुदुहिता ।

केचित्तु शार्ङ्गरवादिषु पुत्रशब्दं पठन्ति, तस्य पुत्रीति भवति ।

अन्यत्रापि हि दृश्यते– शैलपुत्रीति ॥

### २९३३. श्येनतिलस्य पाते ञे ॥ ७१ ॥ (१२६८)

श्येन, तिल–इत्येतयोः पातशब्द उत्तरपदे ञप्रत्यये परे मुमागमो भवति । श्येनपातोऽस्यां क्रीडायाम् श्यैनम्पाता मृगया । तैलम्पाता ।

ञ इति किम्? श्येनपातः ॥

### २९३४. रात्रेः कृति विभाषा ॥ ७२ ॥ (१००८)

रात्रेः कृदन्ते उत्तरपदे विभाषा मुमागमो भवति । रात्रिञ्चरः, रात्रिचरः । रात्रिमटः, रात्र्यटः । अप्राप्तविभाषेयम् ।

खिति हि नित्यं मुम् भवति – रात्रिम्मन्यः ॥

### २९३५. नलोपो नञः ॥ ७३ ॥ (७५७)

नञो नकारस्य लोपो भवत्युत्तरपदे । अब्राह्मणः । अवृषलः । असुरापः । असोमपः ।

नञो नलोपोऽवक्षेपे तिङ्युपसंख्यानं कर्तव्यम् (का.वा.१) । अपचसि त्वं जाल्म । अकरोषि त्वं जाल्म ॥

### २९३६. तस्मान्नुडचि ॥ ७४ ॥ (७५८)

तस्माल्लुप्तनकारान्नञः नुडागमो भवति अजादावुत्तरपदे । अनजः । अनश्वः।

तस्मादिति किम्? नञ एव हि स्यात् । पूर्वान्ते हि 'ङमो ह्रस्वादचि ङमुण्नित्यम्' [८.३.३२] इति ङमुट् प्राप्नोति ॥

**२९३७. नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसक–नक्षत्रनक्रनाकेषु प्रकृत्या ॥ ७५ ॥ (७५९)**

नभ्राट्, नपात्, नवेदाः, नासत्याः, नमुचि, नकुल, नख, नपुंसक, नक्षत्र, नक्र, नाक–इत्येतेषु नञ् प्रकृत्या भवति । न भ्राजत इति नभ्राट्–भ्राजतेः क्विबन्तस्य नञ्समासः । न पातीति नपात्–पातिः शत्रन्तः । न वेत्तीति नवेदाः – वेत्तिरसुन्प्रत्ययान्तः.। नासत्याः–सत्सु साधवः सत्याः, न सत्या असत्याः, न असत्याः न आसत्याः नासत्याः । न मुञ्चतीति नमुचिः – मुचेरौणादिकः किप्रत्ययः। नास्य कुलमस्ति नकुलः । नख–नास्य खमस्तीति नखम् । नपुंसक–न स्त्री न पुमान्नपुंसकम्–स्त्रीपुंसयोः पुंसकभावो निपात्यते । नक्षत्र–न क्षरते क्षीयत इति वा नक्षत्रम्–क्षियः, क्षरतेर्वा क्षत्रमिति निपात्यते । नक्र–न क्रामतीति नक्रः – क्रमेर्डप्रत्ययो निपातनात् । नाक–नास्मिन्नकमस्ति नाकम् ।

**२९३८. एकादिश्चैकस्य चादुक् ॥ ७६ ॥ (८११)**

एकादिश्च नञ्प्रकृत्या भवति एकशब्दस्य चादुगागमो भवति । एकेन न विंशतिः एकान्नविंशतिः । एकान्नत्रिंशत् । 'तृतीया' इति योगविभागात्समासः ।

पूर्वान्तोऽयमादुक् क्रियते । पदान्तलक्षणोऽत्रानुनासिको विकल्पेन यथा स्याद् इति ॥

**२९३९. नगोऽप्राणिष्वन्यतरस्याम् ॥ ७७ ॥ (७६०)**

नञ्प्रकृत्या भवत्यन्तरस्याम् । नगा वृक्षाः, अगा वृक्षाः । नगाः पर्वताः, अगाः पर्वताः । न गच्छन्तीति नगाः । गमेर्डप्रत्ययः (उणादि २३५) ।

अप्राणिष्विति किम्? अगो वृषलः शीतेन ॥

**२९४०. सहस्य सः संज्ञायाम् ॥ ७८ ॥ (१००९)**

सहशब्दस्य स इत्ययमादेशो भवति संज्ञायां विषये । साश्वत्थम् । सपलाशम्। सशिंशपम् ।

संज्ञायामिति किम्? सहयुध्वा । सहकृत्वा ।

सादेश उदात्तो निपात्यते (म. भा.) । उदात्तानुदात्तवतो हि सहशब्दस्यान्तर्यतः स्वरितः स्यात् स च निपातस्वरः पूर्वपदप्रकृतिस्वरत्वं यत्र, तत्र उपयुज्यते ।

अन्यत्र समासान्तोदात्तत्वेन बाध्यत एव – सेष्टि सपशुबन्धमिति ॥

**२९४१. ग्रन्थान्ताधिके च ॥ ७९ ॥ (१०१०)**

ग्रन्थान्ते, अधिके च वर्त्तमानस्य सहशब्दस्य स इत्ययमादेशो भवति । सकलं ज्यौतिषमधीते समुहूर्तम् । ससंग्रहं व्याकरणमधीयते । कलान्तम्, मुहूर्त्तान्तम्, संग्राहन्तमिति 'अन्तवचने' (२.१.६) – अव्ययीभावः समासः । तत्र 'अव्ययीभावे चाकाले' (६.३.८१) इति कालवाचिन्युत्तरपदे सभावो न प्राप्नोतीत्ययमारम्भः ।

अधिके–सद्रोणा खारी । समाषः कार्षापणः । सकाकिणीको माषः ॥

**२९४२. द्वितीये चानुपाख्ये ॥ ८० ॥ (१०११)**

द्वयोः सहयुक्तयोरप्रधानो यः स द्वितीयः । उपाख्यायते=प्रत्यक्षत उपलभ्यते यः स उपाख्यः, उपाख्यादन्योऽनुपाख्यः=अनुमेयस्तस्मिन् द्वितीयेऽनुपाख्ये सहस्य स इत्ययमादेशो भवति । साग्निः कपोतः । सपिशाचा वात्या । सराक्षसीका शाला । अग्न्यादयः साक्षादनुपलभ्यमानाः कपोतादिभिरनुमीयमानास्तदुपाख्या भवन्ति॥

**२९४३. अव्ययीभावे चाकाले ॥ ८१ ॥ (६६०)**

अव्ययीभावे च समासेऽकालवाचिन्युत्तरपदे सहस्य स इत्ययमादेशो भवति। सचक्रंधेहि । सधुरं प्राज ।

अकाल इति किम्? सहपूर्वाह्णम् ॥

**२९४४. वोपसर्जनस्य । ८२ ॥ (८४९)**

उपसर्जनसर्वावयवः समास उपसर्जनम्, यस्य सर्वेऽवयवा उपसर्जनीभूताः स सर्वोपसर्जनो बहुव्रीहिर्गृह्यते । तदवयवस्य सहशब्दस्य वा स इत्ययमादेशो भवति । सपुत्रः । सहपुत्रः । सच्छात्रः । सहच्छात्रः ।

उपसर्जनस्येति किम्? सहयुध्वा । सहकृत्वा ।

सहकृत्वप्रियः, प्रियसहकृत्वेति, इह बहुव्रीहौ यदुत्तरपदं तत्परः सहशब्दो न भवतीति सभावो न भवति ॥

**२९४५. प्रकृत्याशिष्यगोवत्सहलेषु ॥ ८३ ॥ (८५०)**

प्रकृत्या सहशब्दो भवति आशिषि विषयेऽगोवत्सहलेषु । स्वस्ति देवदत्ताय सहपुत्राय सहच्छात्राय सहामात्याय ।

अगोवत्सहलेष्विति किम्? स्वस्ति भवते सहगवे, सगवे । सहवत्साय, सवत्साय । सहहलाय, सहलाय । 'वोपसर्जनस्य' (६.३.८२) इति पक्षे भवत्येव सभावः ॥

## २९४६. समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु ॥ ८४ ॥ (१०१२)

'सः' इति वर्तते । समानस्य 'स' इत्ययमादेशो भवति छन्दसि विषये मूर्द्धन्, प्रभृति, उदर्क–इत्येतान्युत्तरपदानि वर्ज्जयित्वा । अनुभ्राता सगर्भ्यः (वा.सं.४.२०) । अनुसखा सयूथ्यः (वा.सं. ४.२०) यो नः सनुत्यः (ऋ. २.३०.९)। समानो गर्भः सगर्भः, तत्र भवः सगर्भ्यः । 'सगर्भसयूथसनुताद्यत्' (४.४.१३४) इति यप्रत्ययः ।

अमूर्धप्रभृत्युदर्केष्विति किम्? समानमूर्धा । समानप्रभृतयः । समानोदर्काः।

'समानस्य' इति योगविभाग इष्टप्रसिध्यर्थः क्रियते । तेन सपक्षः, साधर्म्यम्, सजातीयः – इत्येवमादयः सिद्धा भवन्ति ॥

## २९४७. ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु ॥ ८५ ॥ (१०१३)

ज्योतिस्, जनपद, रात्रि, नाभि, नामन्, गोत्र, रूप, स्थान, वर्ण, वयस्, वचन, बन्धु–इत्येतेषूत्तरपदेषु समानस्य 'स' इत्ययमादेशो भवति । सज्योतिः । सजनपदः । सरात्रिः । सनाभिः । सनामा । सगोरः । सरूपः । सस्थानः । सवर्णः.। सवयाः । सवचनः । सबन्धुः ॥

## २९४८. चरणे ब्रह्मचारिणि ॥ ८६ ॥ (१०१४)

चरणे गम्यमाने ब्रह्मचारिण्युत्तरपदे समानस्य स इत्ययमादेशो भवति । समानी ब्रह्मचारी । ब्रह्म=वेदः, तदध्ययनार्थं यद् व्रतं तदपि ब्रह्म, तच्चरतीति ब्रह्मचारी । समानः, तस्यैव ब्रह्मणः, समानत्वादित्ययमर्थो भवति । समाने ब्रह्मणि व्रतचारी=सब्रह्मचारीति ॥

**२९४९. तीर्थे ये ॥ ८७ ॥ (१०१५)**

तीर्थशब्दे उत्तरपदे यत्प्रत्ययपरे परतः समानस्य स इत्ययमादेशो भवति । सतीर्थ्यः । 'समानतीर्थे वासी' (४.४.१०७) इति यत्प्रत्ययः ॥

**२९५०. विभाषोदरे ॥ ८८ ॥ (१०१६)**

उदरशब्द उत्तरपदे यत्प्रत्ययान्ते समानस्य विभाषा स इत्ययमादेशो भवति । सोदर्यः, समानोदर्यः । 'समानोदरे शयित ओ चोदात्तः' (४.४.१०८) इति यत् ॥

**२९५१. दृग्दृशवतुषु ॥ ८९ ॥ (१०१७)**

दृक्, दृश, वतु–इत्येतेषु परतः समानस्य स इत्ययमादेशो भवति । सदृक्, सदृशः । 'त्यदादिषु दृशोऽनालोचने कञ्च' (३.२.६०) इत्यत्र 'समानान्ययोश्चेति वक्तव्यम्' (का.वा.) इति कञ्क्विनौ प्रत्ययौ क्रियेते ।

दृक्षे चेति वक्तव्यम् (का.वा.१) । सदृक्षः ॥

दृशेः क्सप्रत्ययोऽपि तत्रैव वक्तव्यः (म. भा.) । वतुग्रहणमुत्तरार्थम् ॥

**२९५२. इदंकिमोरीश्की ॥ ९० ॥ (१०१८)**

इदम्, किम्–इत्येतयोरीश्, की–इत्येतौ यथासङ्ख्यमादेशौ भवतो दृग्दृशवतुषु। ईदृक्, ईदृशः, इयान् । कीदृक्, कीदृशः, कियान् । 'किमिदम्भ्यां वो घः' (५.२.४०) इति वतुप् ।

दृक्षे चेति वक्तव्यम् (म. भा.) । ईदृक्षः । कीदृक्षः ॥

**२९५३. आ सर्वनाम्नः ॥ ९१ ॥ (४३०)**

सर्वनाम्न आकारादेशो भवति दृग्दृशवतुषु । तादृक्, तादृशः, तावान् । यादृक्, यादृशः, यावान् ।

दृक्षे चेति वक्तव्यम् (म. भा.) । तादृक्षः । यादृक्षः ॥

**२९५४. विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये ॥ ९२ ॥ (४१८)**

विष्वक्, देव–इत्येतयोः सर्वनाम्नश्च टेः अद्रीत्ययमादेशो भवति अञ्चतौ

वप्रत्ययान्त उत्तरपदे। विष्वगञ्चतीति विष्वद्र्यङ् (७.२५.१)। देवद्र्यङ्। सर्वनाम्नः – तद्र्यङ् (तै.सं. ५.५.१.२)। यद्र्यङ् (तै.सं. ५.५.१.१)।

अद्रिसध्र्योरन्तोदात्तनिपातनं कृत्स्वरनिवृत्त्यर्थम् (का.वा.१)। तत्र यणादेशे कृते 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (८.२.४) इत्येष स्वरो भवति।

विष्वग्देवयोरिति किम्? अश्वाची। अञ्चताविति किम्? विष्वग्युक्। वप्रत्यय इति किम्? विष्वगञ्चनम्।

वप्रत्ययग्रहणमन्यत्र धातुग्रहणे तदादिविधिप्रतिपत्त्यर्थम्। तेनायस्कृतम्, अयस्कार इत्यत्र 'अतः कृकमिकंसकुम्भपात्र' (८.३.४६) इति सत्वं भवति।

छन्दसि स्त्रियां बहुलमिति वक्तव्यम् (म. भा.)। विश्वाची च घृताची च (ऋ. ७.४३.३)। (ऋ. १.१६७.३) त्यत्र न भवति। कद्रीचीत्यत्र तु भवत्येव॥

## २९५५. समः समि॥ ९३॥ (४२१)

समित्येतस्य 'समि' –इत्ययमादेशो भवति अञ्चतौ वप्रत्ययान्ते उत्तरपदे। सम्यक्, सम्यञ्चौ, सम्यञ्चः॥

## २९५६. तिरसस्तिर्यलोपे॥ ९४॥ (४२३)

'तिरस्' इत्येतस्य 'तिरि' इत्ययमादेशो भवत्यञ्चतौ वप्रत्ययान्त उत्तरपदेऽलोपे=यदाऽस्य लोपो न भवति। तिर्यङ्, तिर्यञ्चौ, तिर्यञ्चः।

अलोप इति किम्? तिरश्चा। तिरश्चे। 'अचः' इत्यकारलोपः॥

## २९५७. सहस्य सध्रिः॥ ९५॥ (४२२)

सहेत्यस्य 'सध्रि' इत्ययमादेशो भवत्यञ्चतौ वप्रत्ययान्ते उत्तरपदे। सध्र्यङ्, सध्र्यञ्चौ, सध्र्यञ्चः। सध्रीचः। सध्रीचा।

## २९५८. सध मादस्थयोश्छन्दसि॥ ९६॥ (३५२९)

छन्दसि विषये माद, स्थ–इत्येतयोरुत्तरपदयोः सहस्य 'सध' –इत्ययमादेशो भवति। सधमादो द्युम्न्य एकास्ताः [सधमादो द्युम्निनीरापः। वा सं. १०.७] सधस्थाः (तै.सं. ५.७.७.१)॥

## २९५९. द्व्यन्तरुपसर्गेभ्योऽप ईत् ॥ ९७ ॥ (९४१)

द्वि, अन्तर्–इत्येताभ्यामुपसर्गाच्चोत्तरस्याबित्येतस्य ईकारादेशो भवति । द्वीपम्। अन्तरीपम् । उपसर्गात्–समीपम् । वीपम् । नीपम् ।

समाप ईत्वे प्रतिषेधो वक्तव्यः (क.वा.१) । समापं नाम देवयजनम् ।

अपर आह–इत्वमनवर्णादिति वक्तव्यम् [म. भा.] । इह मा भूत् – प्रापम्, परापम् ।

अप्शब्दं प्रति क्रियायोगाभावाद् उपसर्गग्रहणं प्राद्युपलक्षणार्थम् ।

## २९६०. ऊदनोर्देशे ॥ ९८ ॥ (९४२)

अनोरुत्तरस्याप ऊकारादेशो भवति देशाभिधाने । अनूपो देशः ।

देश इति किम्? अन्वीपम् ।

दीर्घोच्चारणमवग्रहार्थम् । अनु ऊपोऽनूप इति ॥

## २९६१. अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोति–कारकरागच्छेषु ॥ ९९ ॥ (१०२५)

अषष्ठीस्थस्य अतृतीयास्थस्य चान्यशब्दस्य दुगागमो भवति आशिस्, आशा, आस्था, आस्थित, उत्सुक, ऊति, कारक, राग, छ–इत्येतेषु परतः । अन्या आशीः अन्यदाशीः । अन्या आशा अन्यदाशा । अन्या आस्था अन्यदास्था । अन्य आस्थितः अन्यदास्थितः । अन्य उत्सुकः अन्यदुत्सुकः । अन्या ऊतिः अन्यदूतिः। अन्यः कारकः अन्यत्कारकः । अन्यो रागः अन्यद्रागः । अन्यस्मिन् भवः अन्यदीयः। गहादिष्वन्यशब्दो (४.२.१३८) द्रष्टव्यः ।

अषष्ठ्यतृतीयास्थस्येति किम्? अन्यस्य आशीः अन्याशीः । अन्येन आस्थितः अन्यास्थितः ॥

दुगागमोऽविशेषेण वक्तव्यः कारकच्छयोः ।
षष्ठीतृतीययोर्नेष्ट आशीरादिषु सप्तसु ॥

अन्यस्य कारकम् अन्यत्कारकम् । अन्यस्येदम् अन्यदीयम् ।

अस्य च द्विर्नञ्ग्रहणं लिङ्गम् ॥

## २९६२. अर्थे विभाषा । १०० ॥ (१०२६)

अर्थशब्दे उत्तरपदे अन्यस्य विभाषा दुगागमो भवति । अन्यदर्थः, अन्यार्थः॥

### २९६३. कोः कत्तत्पुरुषेऽचि ॥ १०१ ॥ (१०२७)

'कु' इत्येतस्य कदित्ययमादेशो भवति तत्पुरुषे समासेऽजादावुत्तरपदे । कदजः । कदश्वः । कदुष्ट्रः । कदन्नम् ।

तत्पुरुष इति किम्? कूष्ट्रो राजा । अचीति किम्? कुब्राह्मणः । कुपुरुषः ।

कद्भावे त्रावुपसंख्यानम् (का.वा.१) । कुत्सितास्त्रयः कत्त्रयः ॥

### २९६४. रथवदयोश्च ॥ १०२ ॥ (१०२८)

'रथ' , 'वद' –इत्येतयोश्चोत्तरपदयोः कोः 'कत्' इत्ययमादेशो भवति । कद्रथः । कद्वदः ॥

### २९६५. तृणे च जातौ ॥ १०३ ॥ (१०२९)

तृणशब्दे उत्तरपदे जातावभिधेयायां कोः कदादेशो भवति । कत्तृणा नाम जातिः ।

जाताविति किम्? कुत्सितानि तृणानि कुतृणानि ॥

### २९६६. का पथ्यक्षयोः ॥ १०४ ॥ (१०३०)

पथिन्, अक्ष–इत्येतयोरुत्तरपदयोः कोः 'का' इत्ययमादेशो भवति । कापथः। काक्षः ॥

### २९६७. ईषदर्थे च ॥ १०५ ॥ (१०३१)

ईषदर्थे वर्त्तमानस्य कोः 'का' इत्ययमादेशो भवति । कामधुरम् । कालवणम्। अजादावपि परत्वात् कादेश एव भवति । काम्लम् । कोष्णम् ॥

### २९६८. विभाषा पुरुषे ॥ १०६ ॥ (१०३२)

पुरुषशब्दे उत्तरपदे विभाषा कोः 'का' इत्ययमादेशो भवति । कापुरुषः । कुपुरुषः । अप्राप्तविभाषेयम् ।

ईषदर्थे तु पूर्वविप्रतिषेधेन नित्यं 'का' भवति । ईषत्पुरुषः कापुरुषः ॥

## २९६९. कवञ्चोष्णे ॥ १०७ ॥ (१०३३)

उष्णशब्द उत्तरपदे कोः कवमित्ययमादेशो भवति, का च विभाषा । कवोष्णम्। कोष्णम् । कदुष्णम् ॥

## २९७०. पथिचच्छन्दसि ॥ १०८ ॥ (३५३०)

पथिशब्द उत्तरपदे छन्दसि विषये कोः कव, का–इत्येतावादेशौ भवतो विभाषा । कवपथः । कापथः । कुपथः ॥

## १९७१. पृषोदरादीनि यथोपदिष्टम् ॥ १०९ ॥ (१०३४)

पृषोदरादीनि शब्दरूपाणि, येषु लोपागमवर्णविकाराः शास्त्रेण न विहिताः, दृश्यन्ते च, तानि यथोपदिष्टानि साधूनि भवन्ति । यानि यथोपदिष्टानि=शिष्टैरुच्चारितानि, प्रयुक्तानि, तानि तथैवानुगन्तव्यानि । पृषदुदरं यस्य पृषोदरम् । पृषद् उद्वानं यस्य पृषोद्वानम् । अत्र तकारलोपो भवति । वारिवाहको बलाहकः । पूर्वशब्दस्य बशब्द आदेश उत्तरपदादेश्च लत्वम् । जीवनस्य मूतो जीमूतः । वनशब्दस्य लोपः । शवानां शयनं श्मशानम् । शवशब्दस्य श्मादेशः शयनशब्दस्यापि शानशब्द आदेशः । ऊर्ध्वं खमस्येति उलूखलम् । ऊर्ध्वखशब्दयोरुलू, खल–इत्येतावादेशौ भवतः । पिशिताशः पिशाचः । पिशिताशशब्दयोर्यथायोगं पिशाचशब्दावादेशौ । ब्रुवन्तोऽस्यां सीदन्तीति बृसी । सदेरधिकरणे डट् प्रत्ययः । ब्रुवच्छब्दस्य चोपपदस्य वृशब्द आदेशो भवति । मह्यां रौतीति मयूरः । रौतेरचि टिलोपः । महीशब्दस्य मयूभावः । एवमन्येऽपि अश्वत्थकपित्थप्रभृतयो यथायोगमनुगन्तव्याः ।

दिक्शब्दस्य उत्तरस्य तीरस्य तारभावो वा भवति (का.वा.१) । दक्षिणतीरम्, दक्षिणतारम्, उत्तरतीरम्, उत्तरतारम् ।

वाचो वादेर्डत्वं च ल्भावश्चोत्तरपदस्येञि प्रत्यये भवति (का.वा.२) । वाचं वदतीति वाग्वादः । तस्यापत्यं वाड्वालिः ।

षष उत्वं दतृदशधासूत्तरपदादेष्टुत्वं च भवति (का.वा.३) । षड् दन्ता अस्य षोडन् । षट् च दश च षोडश ।

धासु वा षष उर्वं भवति उत्तरपदादेश्च ष्टुत्वम् [म. भा.] । षोढा, षड्धा कुरु । बहुवचननिर्देशो नानाधिकरणवाचिनो धाशब्दस्य प्रतिपत्त्यर्थः । इह मा भूत्–षट् दधाति धयति वा षड्धेति ॥

दुरो दाशनाशदभध्येषूत्वं वक्तव्यमुत्तरपदादेश्च ष्टुत्वम् । [म. भा.] कृच्छ्रेण दाश्यते नाश्यते दभ्ये च यः स दूडाशः । दूणाशः । दूडभः । दम्भेः खल्वनुनासिकलोपो निपातनात् । दुष्टं ध्यायतीति दूढ्यः । दुःशब्दोपपदस्य ध्यायतेः, 'आतश्चोपसर्गे' (३.१.१३६) इति कप्रत्ययः ।

स्वरो रोहतौ छन्दस्युत्वं वक्तव्यम् (का.वा.५) । जाय एहि सुवो [स्वो] रोहाव (तै.सं. १.७.९.१) ।

पीवोपवसनादीनां च लोपो वक्तव्यः (का.वा.६) । पीवोपवसनानां (ऋ.खि. ५.७.२) पयीपवसनानाम् ।

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।

धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥

## २९७२. संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ ॥ ११० ॥ (२३८)

संख्या, वि, साय इत्येवम्पूर्वस्याह्नशब्दस्य स्थाने अहन्नित्ययमादेशो भवत्यन्यतरस्यां ङौ परतः । द्वयोरह्नोर्भवः द्व्यह्नः । त्र्यह्नः । द्व्यह्नि, द्व्यहनि । त्र्यह्नि, त्र्यहनि । द्व्यह्ने । त्र्यह्ने । व्यपगतमहो व्यह्नः । व्यह्नि, व्यहनि । व्यह्ने । सायमह्नः सायाह्नः । सायाह्नि, सायाहनि । सायाह्ने ।

एकदेशिसमासः पूर्वादिभ्योऽन्यस्यापि भवतीत्येतदेव विसायपूर्वस्याह्नस्य ग्रहणं ज्ञापकम् । तेन मध्यमह्नो मध्याह्न इत्यपि भवति ।

संख्याविसायपूर्वस्येति किम्? पूर्वाह्णे । अपराह्णे ॥

## २९७३. ढ्रलोपे पूर्वस्य दीर्घोऽणः ॥ १११ ॥ (१७४)

ढकाररेफयोर्लोपो यस्मिन् स ढ्रलोपः, तत्र पूर्वस्याणो दीर्घो भवति । लीढम्। मीढम् । उपगूढम् । मूढः । रलोपे–नीरक्तम् । अग्नीरथः । इन्दूरथः । पुनारक्तं वासः । प्राताराजक्रयः ।

पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थम् ।

अण इति किम्? आतृढम्, आवृढम् ॥

**२९७४. सहिवहोरोदवर्णस्य ॥ ११२ ॥ (२३५७)**

सहि, वहि–इत्येतयोरवर्णस्यौकार आदेशो भवति ढ्रलोपे । सोढा, सोढुम्, सोढव्यम् । वोढा, वोढुम्, वोढव्यम् ।

अवर्णस्येति किम्? ऊढः । ऊढवान् । वर्णग्रहणं किम्? कृतायामपि वृद्धौ यथा स्यात्–उदवोढाम् । उदवोढम् । तादपि परस्तपरः, तपरत्वादाकारस्य ग्रहणं न स्यात् ॥

**२९७५. साढ्यै साढ्वा साढेति निगमे ॥ ११३ ॥ (३५३१)**

साढ्यै, साढ्वा, साढा–इति निगमे निपात्यन्ते । साढ्यै समन्तात् (मै.सं. १.६.३१) । साढ्वा शत्रून् (मै. सं. ६.८.५) । सहेः क्त्वाप्रत्यये ओत्वाभावः । पक्षे क्त्वाप्रत्ययस्य ध्यैभावः । साढा–इति तृचि रूपमेतत् ।

निगम इति किम्? सोढ्वा, सोढेति भाषायाम् ॥

**२९७६. संहितायाम् ॥ ११४ ॥ (१०३५)**

'संहितायाम्' इत्ययमधिकारः । यदित ऊर्ध्वमनुक्रमिष्यामः संहितायामित्येवं तद्वेदितव्यम् । वक्ष्यति – 'द्व्यचोऽतस्तिङः' (६.३.१३५) इति । विद्मा हि त्वा सत्पत्तिं शूर गोनाम् (ऋ. १०.४६.१) । संहितायामिति किम्? विद्म, हि, त्वा, सत्पतिं, शूर, गोनाम् ॥

**२९७७. कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य ॥ ११५ ॥ (१०३६)**

कर्णशब्दे उत्तरपदे लक्षणवाचिनो दीर्घो भवति विष्ट, अष्टन्, पञ्चन्, मणि, भिन्न, छिन्न, छिद्र, स्रुव, स्वस्तिक–इत्येतान्वर्जयित्वा । दात्राकर्णः । द्विगुणाकर्णः। त्रिगुणाकर्णः । द्व्यङ्गुलाकर्णः । अङ्गुलाकर्णः ।

यत्पशूनां स्वामिविशेषसम्बन्धज्ञापनार्थं दात्राकारादि क्रियते तदिह लक्षणं गृह्यते ।

लक्षणस्येति किम्? शोभनकर्णः । अविष्टादीनामिति किम्? विष्टकर्णः । अष्टकर्णः । पञ्चकर्णः । मणिकर्णः । भिन्नकर्णः । छिन्नकर्णः । छिद्रकर्णः । स्रुवकर्णः । स्वस्तिककर्णः ॥

## २९७८. नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ॥ ११६ ॥ (१०३७)

नहि, वृति, वृषि, व्यधि, रुचि, सहि, तनि–इत्येतेषु क्विप्रत्ययान्तेषूत्तरपदेषु पूर्वपदस्य दीर्घो भवति संहितायां विषये । नहि–उपानत्, परीणत् । वृति–नीवृत्, उपावृत् । वृषि–प्रावृट्, उपावृट् । व्यधि–मर्मावित्, हृदयावित्, श्वावित् । रुचि – नीरुक्, अभिरुक् । सहि–ऋतीषट् । तनि – तरीतत् ।

गमः क्वाविति (६.४.४०) गमादीनामिष्यते । ततस्तनोतेरप्यनुनासिकलोपः.।

क्वाविति किम्? परिणहनम् ॥

## २९७९. वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम् ॥ ११७ ॥ (१०३८)

वन, गिरि – इत्येतयोरुत्तरपदयोर्यथासंख्यं कोटरादीनां किंशुलकादीनां च दीर्घो भवति संज्ञायां विषये । वने कोटरादीनाम् – कोटरावणम्, मिश्रकावणम्, सिध्रकावणम्, सारिकावणम् ।

गिरौ किंशुलकादीनाम् – किंशुलकागिरिः । अञ्जलागिरिः ।

कोटरकिंशुलकादीनामिति किम्? असिपत्रवनम् । कृष्णगिरिः ।

कोटर । मिश्रक । पुरक । सिध्रक । सारिक । कोटरादिः ।

किंशुलक । शाल्वक । अञ्जन । भञ्जन । लोहित । कुक्कुट । किंशुलकादिः.॥

## २९८०. वले ॥ ११८ ॥ (१०४०)

वले परतः पूर्वस्य दीर्घो भवति । आसुतीवलः । कृषीवलः । दन्तावलः । 'रजःकृष्यासुतिपरिषदो वलच्' (५.२.११२) इति वलच्प्रत्ययो गृह्यते, न प्रातिपदिकम्।

अनुत्साहभ्रातृपितृणामित्येव । उत्साहवलः । भ्रातृवलः । पितृवलः ॥

## २९८१. मतौ बह्वचोऽनजिरादीनाम् ॥ ११९ ॥ (१०४१)

मतौ परतो बह्वचोऽजिरादिवर्जितस्य दीर्घो भवति संज्ञायां विषये । उदुम्बरावती।

मशकावती । वीरणावती । पुष्करावती । अमरावती । 'नद्यां मतुप्' (४.२.८५) इति मतुप्प्रत्ययः । 'संज्ञायाम्' (८.२.११) इति मतोर्वत्वम् ।

बह्वच इति किम्? व्रीहिमती । अनजिरादीनामिति किम्? अजिरवती । खदिरवती । हंसकारण्डववती । चक्रवाकवती ।

'संज्ञायाम्' इत्येव–वलयवती ॥

## २९८२. शरादीनां च ॥ १२० ॥ (१०४२)

शरादीनां च मतौ दीर्घो भवति संज्ञायां विषये । शरावती । वंशावती ।

शर । वंश । धूम । अहि । कपि । मणि । मुनि । शुचि । हनु । शरादिः ।

'संज्ञायाम्' (८.२.११) इति मतोर्वत्वम् । यवादित्वाद् व्रीह्यादिभ्यो न भवति.॥

## २९८३. इको वहेऽपीलोः ॥ १२१ ॥ (१०४३)

इगन्तस्य पूर्वपदस्य पीलुवर्जितस्य वह उत्तरपदे दीर्घो भवति । ऋषीवहम्.। कपीवहम् । मुनीवहम् ।

इक इति किम्? पिण्डवहम् । अपीलोरिति किम्? पीलुवहम् ।

अपील्वादीनामिति वक्तव्यम् [म. भा.] इह मा भूत्–दारुवहम् ॥

## २९८४. उपसर्गस्य घञ्यमनुष्ये बहुलम् ॥ १२२ ॥ (१०४४)

उपसर्गस्य घञन्ते उत्तरपदेऽमनुष्येऽभिधेये बहुलं दीर्घो भवति । वीक्लेदः । वीमार्गः । अपामार्गः । न च भवति – प्रसेवः, प्रसारः ॥

सादकारयोः कृत्रिमे दीर्घो भवति (का.वा.१) । प्रासादः । प्राकारः । कृत्रिम इति किम्? प्रसादः । प्रकारः ।

वेशादिषु विभाषा दीर्घो भवति [म. भा.] । प्रतिवेशः, प्रतीवेशः । प्रतिरोधः, प्रतीरोधः ।

अमनुष्य इति किम्? निषादो मनुष्यः ॥

## २९८५. इकः काशे ॥ १२३ ॥ (१०४५)

इगन्तस्योपसर्गस्य काशशब्द उत्तरपदे दीर्घो भवति । नीकाशः । वीकाशः। अनूकाशः । पचाद्यजन्तोऽयं काशशब्दः, न तु घञन्तः ।

इक इति किम्? प्रकाशः ॥

## २९८६. दस्ति ॥ १२४ ॥ (३०७९)

'दा' इत्येतस्य यस्तकारादिरादेशस्तस्मिन्परत इगन्तस्योपसर्गस्य दीर्घो भवति। नीत्तम् । वीत्तम् । परीत्तम् । 'अच उपसर्गात्तः' (७.४.४७) इत्यन्तस्य यद्यपि तकारः क्रियते, तथापि चर्त्वस्याश्रयात्सिद्धत्वमिति तकारादिर्भवति । इक इत्येव– प्रत्तम्, अवत्तम् ।

द इति किम्? वितीर्णम् । नितीर्णम् । तीति किम्? सुदत्तम् ॥

## २९८७. अष्टनः संज्ञायाम् ॥ १२५ ॥ (१०४६)

अष्टन्–इत्येतस्योत्तरपदे संज्ञायां दीर्घो भवति । अष्टावक्रः । अष्टाबन्धुरः । अष्टापदम् ।

संज्ञायामिति किम्? अष्टपुत्रः । अष्टभार्यः ॥

## २९८८. छन्दसि च ॥ १२६ ॥ (३५३२)

छन्दसि विषयेऽष्टन उत्तरपदे दीर्घो भवति । 'आग्नेयमष्टाकपालं निर्वपेत् चरुम् ।' (मै.सं. १.२.७) अष्टाहिरण्या दक्षिणा । अष्टापदी देवता सुमती । अष्टौ पादावस्या इति बहुव्रीहौ पादस्य लोपे कृते 'पादोऽन्यतरस्याम्' (४.१.८) इति ङीप् ।

गवि च युक्ते भाषायामष्टनो दीर्घो भवतीति वक्तव्यम् । अष्टागवं शकटम् ॥

## २९८९. चितेः कपि ॥ १२७ ॥ (१०४७)

चितिशब्दस्य कपि परतो दीर्घो भवति । एकचितीकः । द्विचितीकः । त्रिचितीकः ॥

## २९९०. विश्वस्य वसुराटोः ॥ १२८ ॥ (३७९)

विश्वशब्दस्य वसु, राट्–इयेतयोरुत्तरपदयोर्दीर्घ आदेशो भवति । विश्वावसुः। विश्वाराट् ।

राडिति विकारनिर्देशः – यत्रास्यैतद्रूपं तत्रैव यथा स्यात् । इह न भवति – विश्वराजौ । विश्वराजः ॥

## २९९१. नरे संज्ञायाम् ॥ १२९ ॥ (१०४८)

नरशब्द उत्तरपदे संज्ञायां विषये विश्वस्य दीर्घो भवति । विश्वानरो नाम यस्य वैश्वानरिः पुत्रः ।

संज्ञायामिति किम्? विश्वे नरा यस्य स विश्वनरः ॥

## २९९२. मित्रे चर्षौ ॥ १३० ॥(१०४९)

मित्रे चोत्तरपदे ऋषावभिधेये विश्वस्य दीर्घो भवति । विश्वामित्रो नाम ऋषिः। ऋषाविति किम्? विश्वमित्रो माणवकः ॥

## २९९३. मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ ॥ १३१ ॥ (३५३३)

मन्त्रविषये सोम, अश्व, इन्द्रिय, विश्वदेव्य–इत्येतेषां मतुप्प्रत्यये परतो दीर्घो भवति । सोमावती (ऋ. १०.९७.७) । अश्वावती (ऋ.१०९७.७) । इन्द्रियावती (तै.सं. २.४.२.१) । विश्वदेव्यावती (तै.सं. ४.१.६.१) ।

## २९९४. ओषधेश्च विभक्तावप्रथमायाम् ॥ १३२ ॥ (३५३४)

'मन्त्रे' इति वर्तते । ओषधिशब्दस्य विभक्तावप्रथमायां परतो दीर्घो भवति । ओषधीभिरपीपतत् । नमः पृथिव्यै नम ओषधीभ्यः । (तै.आ. २.१२.१) ।

विभक्ताविति किम्? ओषधिपते । अप्रथमायामिति किम्? स्थिरेयमस्त्वोषधिः॥

## २९९५. ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ॥ १३३ ॥ (३५३५)

ऋचि विषये तु, नु, घ, मक्षु, तङ्, कुत्र, उरुष्य–इत्येषां दीर्घो भवति । आ तू न इन्द्र वृत्रहन् (वा.सं. ३.६५) नु–नू करणे । घ – उत वा घा स्यालात् (ऋ. १.१०९.२) । मक्षु–मक्षू गोमन्तमीमहे (ऋ. ८.३३.३) । तङ्–भरता जातवेदसम् (ऋ. १०.१७६.२) । तङिति थादेशस्य ङित्त्वपक्षे ग्रहणम्, तेनेह न भवति – शृणोत ग्रावाणः (तै.सं. १.३.१३.१) कु–कूमनः । त्र–अत्रा गौः । उरुष्य–उरुष्या णोऽग्नेः । (ऋ. १.९१.१५) ।

## २९९६. इकः सुञि ॥ १३४ ॥ (३५३६)

सुञ् निपातो गृह्यते । इगन्तस्य सुञि परतो मन्त्रविषये दीर्घो भवति । अभी षु णः सखीनाम् (ऋ. ४.३१.३) । ऊर्ध्व ऊ षु ण ऊतये (ऋ. १.३६.१३) । 'सुञः' (८.३.१०७) इति षत्वम्, 'नश्च धातुस्थोरुषुभ्यः' (८.४.२७) इति णत्वम् ॥

## २९९७. द्व्यचोऽतस्तिङः ॥ १३५ ॥ (३५३७)

'ऋचि' इति वर्तते । द्व्यचस्तिङन्तस्यात ऋग्विषये दीर्घो भवति । विद्मा हि त्वा गोपति शूर गोनाम् (ऋ. १०.४७.१) । विद्मा शरस्य पितरम् (अ. वे. १.२.१)।

द्व्यच इति किम्? अश्वा भवत वाजिनः (वा.सं. ९.६) । अत इति किम्? आ देवान्वक्षि यक्षि च (ऋ. ५.२६.१) ॥

## २९९८. निपतस्य च ॥ १३६ ॥ (३५३८)

'ऋचि' इत्येव । निपातस्य च ऋग्विषये दीर्घ आदेशो भवति । एवा ते (ऋ. १०.२०.१०) । अच्छा ते (ऋ. १.२.२) ॥

## २९९९. अन्येषामपि दृश्यते ॥ १३७ ॥ (३५३९)

अन्येषामपि दीर्घो दृश्यते स शिष्टप्रयोगादनुगन्तव्यः । यस्य दीर्घत्वं न विहितम्, दृश्यते च प्रयोगे, तदनेन कर्त्तव्यम् । केशाकेशि । कचाकचि । जलाषाट्। नारकः पूरुषः ॥

शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु श्वादन्तः । श्वादंष्ट्रः । श्वाकर्णः । श्वाकुन्दः । श्वावराहः । श्वापुच्छः । श्वापदः ॥

## ३०००. चौ ॥ १३८ ॥ (४१७)

चौ परतः पूर्वपदस्य दीर्घो भवति । 'चौ' 'इत्यञ्चतितत्लुप्तनकाराकारो गृह्यते । दधीचः पश्य । दधीचा । दधीचे । मधूचः पश्य । मधूचा । मधुचे । अन्तरङ्गोऽपि हि यणादेशो दीर्घविधानसामर्थ्यान्न प्रवर्त्तते ॥

## ३००१. सम्प्रसारणस्य ॥ १३९ ॥ (१००४)

'उत्तरपदे' इति वर्तते । सम्प्रसारणान्तस्य पूर्वपदस्योत्तरपदे दीर्घो भवति ।

कारीषगन्धीपुत्रः । कारीषगन्धीपतिः । कौमुदगन्धोपुत्रः । कौमुदगन्धीपतिः । करिषस्येव गन्धोऽस्य, कुमुदस्येव गन्धोऽस्य–'अल्पाख्यायाम्' ,(५.४.१३६) 'उपमानाच्च' (५.४.१३७) इति इकारः समासान्तः । करीषगन्धेरपत्यं कारीषगन्ध्या, कुमुदगन्धेरपत्यं कौमुदगन्ध्या, तस्याः पुत्रः कौमुदगन्धीपुत्रः [तस्याः पतिः]कौमुदगन्धीपतिः ।

'इको ह्रस्वोऽङ्योगालवस्य' (६.३.६१) इत्येतन्न भवति; व्यवस्थितविभाषा हि सा । अकृत एव दीर्घत्वे ह्रस्वाभावपक्षे कृतार्थेनापि दीर्घेण पक्षान्तरे परत्वाद् ह्रस्वो बाध्यते ।

पुनः प्रसङ्गविज्ञानं न च भवति; 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे' (व्या.प.४०) ति ॥

**॥ इति श्रीवामनविरचितायां काशिकावृत्तौ षष्ठस्याध्यायस्य तृतीयः पादः ॥**

# अथ षष्ठाध्याये चतुर्थः पादः

### ३००२. अङ्गस्य ॥ १ ॥ (२००)

अधिकारोऽयमा सप्तमाध्यायपरिसमाप्तेः । यदित ऊर्ध्वमनुक्रमिष्यामोऽङ्गस्येत्येवं तद्वेदितव्यम् । वक्ष्यति– "हलः" (६.४.२) । हूतः । जीनः । "संवीतः" ।

अङ्गस्येति किम्? निरुतम् । दुरुतम् । नामि दीर्घः – अग्नीनाम् । वायूनाम्.। अङ्गस्येति किम्? क्रिमिणां पश्य । पामनां पश्य । 'अतो भिस ऐस्' (७.१.९) – वृक्षैः । प्लक्षैः ।

अङ्गस्येति किम्? ब्राह्मणभिस्सा । ओदनभिस्सिटा । अङ्गाधिकारः कृतोऽन्यार्थः 'नामि' –दीर्घत्वाद्यपि व्यवश्तापयतीति तदर्थमर्थवद्ग्रहणपरिभाषा (व्या.प.१)

नाश्रयितव्या भवति ।

अङ्गस्येति सम्बन्धसामान्ये एषा षष्ठी यथायोगं विशेषेष्ववतिष्ठते ।

अथ वा – प्रातिपदिकार्थमात्रविवक्षित विभक्त्यर्थमधिक्रियए । तदुत्तरत्र यथायोगं विपरिणम्यते । ततोऽकारान्तादङ्गाद् भिस ऐसित्येवमाद्यपि सम्यक् सम्पन्नं भवति ॥

## ३००३. हलः ॥ २ ॥ (२५५९)

अङ्गावयवाद्धलो यदुत्तरं सम्प्रसारणम् तदन्तस्याङ्गस्य दीर्घो भवति । हूतः । जीनः । संवीतः ।

हल इति किम्? उतः । उतवान् । अङ्गावयवादिति किम्? निरुतम् । तदन्तस्येति किम्? विद्धः । विचितः ।

अण इत्येव–तृतीयः । 'तृतीयेति' (२.३.१८) वा निपातनादत्र दीर्घाभावः ।

अङ्गग्रहणमावर्तयितव्यम् – हल्विशेषणार्थम्, अङ्गकार्यप्रतिपत्त्यर्थं च ॥

## ३००४. नामि ॥ ३ ॥ (२०९)

'नाम्' –इत्येतत्षष्ठीबहुवचनमागतनुट्कं गृह्यते । तस्मिन्परतोऽङ्गस्य दीर्घो भवति । अग्नीनाम् । वायूनाम् । कतॄणाम् । 'अणः' इत्येतदत्र निवृत्तम् ।

आगतनुट्कग्रहणमुत्तरार्थम्, कृते च नुटि दीर्घप्रतिपत्त्यर्थम्, अन्यथा हि नुडेव न स्यात् ।

नामिदीर्घ आमि चेत्स्यात् कृते दीर्घे न नुड् भवेत् ।
वचनाद्यत्र तन्नास्ति नोपधायाश्च चर्म्मणाम् ॥ (म. भा.)

## ३००५. न तिसृचतसृ ॥ ४ ॥ (३००)

तिसृ, चतसृ–इत्येतयोर्नामिदीर्घो न भवति । तिसृणाम् । चतसृणाम् ।

इदमेव 'नामि' इति दीर्घप्रतिषेधवचनं ज्ञापकम्–'अचि र ऋतः' (७.२.१००) इत्येतस्मात्पूर्वविप्रतिषेधेन नुडागमो भवतीति ॥

## ३००६. छन्दस्युभयथा ॥ ५ ॥ (३५४०)

छन्दसि विषये तिसृचतसृ–इत्येतयोर्नामि परत उभयथा दृश्यते–दीर्घश्च,

अदीर्घश्च । तिसृणां (मै.सं. ४.५.९) मध्यदिने, तिसॄणां (ऋ. ५.६९.२) मध्यदिने । चतसृणां (का.सं. २७.९) मध्यदिने, चतसॄणां (का.सं. २७.९) मध्यदिने, चतसॄणां मध्यं दिने ॥

## ३००७. नृ च ॥ ६ ॥ (२८४)

'नृ' इत्येतस्य नामि परे उभयथा भवति । त्वं नृणाम् (पै. २.१०.४) नृपते, त्वं नॄणाम् (ऋ. १४३.७) नृपते ।

केचिदेतत् 'छन्दसि' इति नानुवर्तयन्ति, तेन भाषायामपि विकल्पो भवति ॥

## ३००८. नोपधायाः । ७ ॥ (३७०)

नान्तस्याङ्गस्योपधाया नामि परतो दीर्घो भवति । पञ्चानाम् । सप्तानाम् । नवानाम् । दशानाम् ।

न इति किम्? चतुर्णाम् । नामीत्येव–चर्मणाम् ॥

## ३००९. सर्वनामस्थाने चासम्बुद्धौ ॥ ८ ॥ (२५०)

सर्वनामस्थाने च परतोऽसम्बुद्धौ नोपधाया दीर्घो भवति । राजा, राजानौ, राजानः । राजानम्, राजानौ । सामानि तिष्ठन्ति । सामानि पश्य ।

सर्वनामस्थान इति किम्? राजनि । सामनि । असम्बुद्धाविति किम्? हे राजन् । हे तक्षन् ॥

## ३०१०. वा षपूर्वस्य निगमे ॥ ९ ॥ (३५४१)

षपूर्वस्याचो नोपधाया निगमविषये सर्वनामस्थाने परतोऽसम्बुद्धौ वा दीर्घो भवति । 'स तक्षाणं तिष्ठन्तमब्रवीत्, (मै.२.४.१) स तक्षणं तिष्ठन्तमब्रवीत् । ऋभुक्षाणमिन्द्रम्, ऋभुक्षणमिन्द्रम् (ऋ. १.१११.४) ।

निगम इति किम्? तक्षा, तक्षाणौ, तक्षाणः ॥

## ३०११. सान्तमहतः संयोगस्य ॥ १० ॥ (३१७)

सकारान्तस्य संयोगस्येयो नकारः महतश्च तस्योपधाया दीर्घो भवति सर्वनामस्थाने परतोऽसम्बुद्धौ । श्रेयान्, श्रेयांसौ, श्रेयांसः । श्रेयांसि । पयांसि ।

यशांसि । महतः खल्वपि – महान् । महान्तौ । महान्तः ।

असम्बुद्धाविति किम्? हे श्रेयन् । हे महन् ॥

## ३०१२. अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् ॥ ११ ॥ (२७७)

अप्–इत्येतस्य यतृनन्तस्य तृजन्तस्य, स्वसृ, नप्तृ, नेष्टृ, त्वष्टृ, क्षत्तृ, होतृ, पोतृ, प्रशास्तृ–इत्येतेषां चाङ्गानामुपधाया दीर्घो भवति सर्वनामस्थाने परतोऽसम्बुद्धौ। अप्–आपः । बह्वाम्पि तडागानीति केचिदिच्छन्ति, तत्र 'समासान्तो विधिरनित्यः' इति समासान्तो न क्रियते । नित्यमपि च नुममकृत्वा दीर्घत्वमिष्यते । तृन्–कर्तारौ कटान् । वदितारौ जनापवादान् । कर्त्तारः ।

तृच्–कर्त्तारौ कटस्य । कर्तारः । हर्त्तारौ भारस्य, हर्त्तारः ।

स्वसृ–स्वसा । स्वसारौ । स्वसारः ।

नप्तृ–नप्ता । नप्तारौ । नप्तारः ।

नेष्टृ–नेष्टा । नेष्टारौ । नेष्टारः ।

त्वष्टृ–त्वष्टा । त्वष्टारौ । त्वष्टारः ।

क्षत्तृ–क्षत्ता । क्षत्तारौ । क्षत्तारः ।

होतृ–होता । होतारौ । होतारः ।

पोतृ–पोता । पोतारौ । पोतारः ।

प्रशास्तृ–प्रशास्ता । प्रशास्तारौ । प्रशास्तारः ।

नप्त्रादीनां ग्रहणमव्युत्पत्तिपक्षे विध्यर्थम् । व्युत्पत्तिपक्षे नियमार्थम्–एवम्भूतानामन्येषां संज्ञाशब्दानां दीर्घो मा भूदिति । पितरौ, पितरः । मातरौ, मातरः।

असम्बुद्धाविति किम्? हे कर्तः । हे स्वसः ॥

## ३०१३. इन्हन्पूषार्यम्णां शौ ॥ १२ ॥ (३५६)

इन्, हन्, पूषन्, अर्यमन्–इत्येवमन्तानामङ्गानां शौ परत उपधाया दीर्घो भवति । बहुदण्डीनि । बहुच्छत्रीणि । बहुवृत्रहाणि । बहुभ्रूणहाणि । बहुपूषाणि । बह्वर्यमाणि ।

सिद्धे सत्यारम्भो नियमार्थः – ''इन्हन्पूषार्यम्णामुपधायाः शावेव दीर्घो

भवति, नान्यत्र ” । (म. भा.) दण्डिनौ । छत्रिणौ । वृत्रहणौ । पूषणौ । अर्यमणौ ।

दीर्घविधिर्य इहेन्प्रभृतीनां, तं विनियम्य सुटीति सुविद्वान् ।
शौ नियमं पुनरेव विधध्याद् भ्रूणहनीति तथास्य न दुष्येत् ॥
शास्मि निवर्त्त्य सुटीत्यविशेषे शौ नियमं कुरु वाऽप्यसमीक्ष्य ।
दीर्घविधेरुपधानियमान्मे हन्त । यि दीर्घविधौ च न दोषः ॥
सुव्यापि वा प्रकृतेऽनवकाशाः, शौ नियमोऽप्रकृतप्रतिषेधे ।
यस्य हि शौ नियमः सुटि नैतत्तेन न तत्र भवेद्विनियम्यम् ॥
(म. भा. श्लो.वा. १–३)

हन्तेः 'अनुनासिकस्य क्विझलोः क्ङिति' (२.४.१५) इति दीर्घत्वं यत् तदपि नियमेन बाध्यते वृत्रहणि, भ्रूणहनीति । कथम्? योगविभागः क्रियते– इन्हन्पूषार्यम्णां सर्वनामस्यान एव दीर्घो भवति, नान्यत्रेति । ततः 'शौ' इति द्वितीयो नियमः – शावेव सर्वनामस्थाने दीर्घो भवति, नान्यत्रेति । सर्वस्योपधालक्षणस्य दीर्घस्य नियमेन निवृत्तिः क्रियते ।

यस्तु न उपधालक्षणः, स भवत्येव– वृत्रहायते, भ्रूणहायते ।

अथ वा– अनुवर्त्तमानेऽपि सर्वनामस्थानग्रहणे सामर्थ्यादयमविशेषेण नियमः। शिशब्दो हि सर्वनामस्थानं नपुंसकस्य, न च तस्यान्यत् सर्वनामस्थानमस्तीत्यविशेषेण नियमः ।

तत्र तु 'नपुंसकस्य' इत्येतन्नाश्रीयते । तेनानपुंसकस्यापि दीर्घो न भवति ।

सर्वनामस्थानसंज्ञाविधाने तु नपुंसकस्य व्यापारोऽस्तीति तत्र नियमः क्रियमाणो नपुंसकस्य स्यात् ॥

## ३०१४. सौ च ॥ १३ ॥ (३५७)

सावसम्बुद्धौ परत इन्हन्पूषार्यम्णामुपधाया दीर्घो भवति । दण्डी । वृत्रहा । पूषा । अर्यमा ।

असम्बुद्धाविति किम्? हे दण्डिन् । हे वृत्रहन् । हे पूषन् । हे अर्यमन् ॥

## ३०१५. अत्वसन्तस्य चाधातोः ॥ १४ ॥ (४२५)

अतु, अस्–इत्येवमन्तस्य अधातोरुपधायाः सावसम्बुद्धौ परतो दीर्घो भवति।

डवतु–भवान् । क्तवतु–कृतवान् । मतुप्–गोमान् । यवमान् । अत्र कृते दीर्घे नुमागमः कर्त्तव्यः । यदि हि परत्वान्नित्यत्वाच्च नुम् स्यात्, दीर्घस्य निमित्तमतूपधा विहन्येत । असन्तस्य–सुपयाः । सुयशाः । सुश्रोताः ।

अधातोरिति किम्? पिण्डं ग्रसते इति पिण्डग्रः, चर्म वस्ते इति चर्मवः । अनर्थकोऽप्यसशब्दो गृह्यते; 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' (व्या.प. १६९) इति ।

अन्तग्रहणमुपदेशप्रयोगैकदेशस्याप्यत्वन्तस्य परिग्रहार्थम्, अन्यथा मतुपो ग्रहणं न स्याद्–उपदेशे रूपनिर्ग्रहहेतौ नायमत्वन्त इति ।

असम्बुद्धावित्येव–हे गोमन् । हे सुपयः ॥

### ३०१६. अनुनासिकस्य क्विझलोः क्ङिति ॥ १५ ॥ (२३३३)

अनुनासिकान्तस्याङ्गस्य उपधाया दीर्घो भवति क्विप्रत्यये परतो झलादौ च क्ङिति । प्रशान् । प्रतान् । झलादौ किति–शान्तः । शान्तवान् । शान्ता । शान्तिः। ङिति खल्वपि–शंशान्तः । तन्तान्तः । यङ्लुगन्तादयं तस् ।

अनुनासिकस्येति किम्? ओदनपक् । पक्वः । पक्ववान् । क्विझलोरिति किम्? गम्यते । रम्यते । क्ङितीति किम्? गन्ता । रन्ता ॥

### ३०१७. अज्झनगमां सनि ॥ १६ ॥ (२६१४)

अजन्तानमङ्गानां हनिगम्योश्च सनि झलादौ परे दीर्घो भवति । अजन्तानाम्–विवीषति । तुष्टूषति । चिकीर्षति । जिहीर्षति । हन्–जिघांसति । गम् – अधिजिगांसते।

गमेरिङादेशस्येति वक्तव्यम् (म. भा.) । इह मा भूत्–संजिगंसते वत्सो मात्रेति । 'स्वर्गलोकं समजिगांसदि' ति छन्दसि यदनिङादेशस्यापि दीर्घत्वं दृश्यते, तद् 'अन्येषामपि दृश्यते' (६.३.१३७) इत्यनेन भवति ।

अथ वा – इहाज्ग्रहणं न कर्त्तव्यम्, सनि दीर्घो भवतीत्येतावदेव सूत्रं कर्त्तव्यम् । तत्राचा गृह्यमाणस्य विशेषणे सति सिद्धमजन्तस्य दीर्घत्वम्? तत्क्रियते प्रवृत्तिभेदेन गमेरपि विशेषणार्थम्–अजन्तस्याङ्गस्य दीर्घो भवति, अजादेशस्य गमेरिति । ततो न वक्तव्यमिदम्–गमेरिङादेशस्येति ॥

### ३०१५. तनोतेर्विभाषा ॥ १७ ॥ (२६२२)

तनोतेरङ्गस्य सनि झलादौ विभाषा दीर्घो भवति । तितांसति । तितंसति ।

झलीत्येव–तितनिषति । 'सनीवन्तर्ध०' (७.२.४९) इत्यत्र तनोतेरुपसंख्यानादिडागमो भवति विकल्पेन ॥

## ३०१९. क्रमश्च क्त्वि ॥ १५ ॥ (३३२९)

क्रम उपधाया विभाषा दीर्घो भवति क्त्वाप्रत्यये झलादौ परतः । क्रन्त्वा, क्रान्त्वा ।

झलीत्येव–क्रमित्वा । प्रक्रम्य, उपक्रम्येति बहिरङ्गोऽपि ल्यबादेशः 'अन्तरङ्गानपि विधीन्बान्धते' इति पूर्वमेव, दीर्घत्वं न प्रवर्त्तते ॥

## ३०२०. च्छ्वोः शूडनुनासिके च ॥ १९ ॥ (२५३१)

'छ' इत्येतस्य सतुक्कस्य, वकारस्य च स्थाने यथासंख्यं श्, ऊठ्–इत्येतावादेशौ भवतः, अनुनासिकादौ प्रत्यये परतः क्वौ झलादौ च क्ङिति । प्रश्नः । विश्नः । अन्तरङ्गत्वात् 'छे च' (६.१.७३) इति तुकि कृते सतुक्कस्य शादेशः ।

वकारस्य ऊठ्–स्योनः । सिवेरौणादिके नप्रत्यये (उणादि, २९३) लघूपधगुणात् पूर्वमूठ् क्रियते, तत्र कृतेऽन्तरङ्गत्वाद् यणादेशो नानाश्रयत्वाच्च न 'वार्णादाङ्गं बलीयो' (व्या.प.३९) भवति ।

क्वौ छस्य – शब्दप्राट् । 'क्विब्वचि' (उणादि. २२५) इत्यादिनौणादिकः क्विप्, दीर्घश्च । गोविट् । वकारस्य–अक्षद्यूः । हिरण्यष्ठ्यूः । 'असिद्धं बहिरङ्गमन्तरङ्गे' (व्या.प.४२) इति 'नाजानन्तर्ये' (व्या.प.४६) इति प्रतिषिध्यते ।

झलादौ छस्य पृष्टः । पृष्टवान् । पृष्ट्वा । वकारस्य–द्यूतः । द्यूतवान् । द्यूत्वा। क्ङितीत्येव–द्युभ्याम् । द्युभिः ।

केचिदत्र 'क्ङिति' इति नानुवर्त्तयन्ति । कथं द्युभ्यम्, द्युभिरिति, ऊठि कृते? 'दिव उत्' (६.१.१३१) इति तपरत्वान्मात्राकालो भविष्यति ।

'छशां षः' (८.२.३६) इत्यत्र छग्रहणं न कर्त्तव्यम् । अनेनैव हि सर्वत्र शकारो विधीयते ।

ऊठष्ठित्करणम् 'एत्येधत्यूठ्सु' (६.१.१७९) इति विशेषणार्थम् । 'वाह ऊठ्' (६.४.१३२) इत्ययमपि ठिदेव ॥

## ३०२१. ज्वरत्वरस्रिव्यविमवामुपधायाश्च ॥ २० ॥ (२६५४)

ज्वर, त्वर, स्रिवि, अव, मव–इत्येतेषामङ्गानां वकारस्य उपधयाश्च स्थाने ऊडित्ययमादेशो भवति क्वौ परतोऽनुनासिके झलादौ च क्ङिति । जूः, जुरौ, जुरः.। जूर्त्तोझ् । त्वर–तूः, तुरौ, तुरः । तूर्त्तिः । स्रिवि–स्रूः, स्रुवौ, स्रुवः । स्रूतः। स्रूतवान् । स्रूतिः । अव्–ऊः, उवौ, उवः । ऊतिः । मव–मूः, मुवौ, मुवः । मूतः। मूतवान् । मूतिः ।

ज्वरत्वरोरुपधा वकारात् परा, स्रिव्यवमवां पूर्वा ॥

## ३०२२. राल्लोपः ॥ २१ ॥ (२६५५)

रेफादुत्तरयोश्छ्वोर्लोपो भवति क्वौ परतो झलादौ क्ङिति च परतः । मुर्छा–मूः, मुरौ, मुरः । मूर्त्तः । मूर्त्तवान् । मूर्त्तिः । 'न ध्याख्यापॄमूर्छिमदाम्' (८.२.४८) इति निष्ठानत्वाभावः । हुर्छा–हूः, हुरौ, हुरः । हूर्णः । हूर्णवान् । हूर्त्तिः । राल्लोपे सतुक्कस्य छस्याभावात् केवलो गृह्यते । वकारस्य–'तुर्वी' –तूः, तुरौ, तुरः । तूर्णः.। तूर्णवान् । तूर्त्तिः । 'धुर्वी' –धूः । धुरः । धूर्णवान् । धूर्त्तिः ॥

## ३०२३. असिद्धवदत्राभात् ॥ २२ ॥ (२१८३)

असिद्धवदित्ययमधिकारो यदित ऊर्ध्वमनुक्रमिष्याम आ अध्यायपरिसमाप्तेस्तद् असिद्धवद्भवतीत्येवं वेदितव्यम् । आ भादिति विषयनिर्देशः । आभसंशब्दनाद् यदुच्यते तत्र कर्त्तव्ये ।

अत्रेति समानाश्रयत्वप्रतिपत्त्यर्थम् । तच्चेदत्र यत्र भवति तदाभाद् शास्त्रीयं विधीयते तदाश्रयमेव भवति । व्याश्रयं तु नासिद्धवद्भवतीत्यर्थः ।

असिद्धवचनमुत्सर्गलक्षणाभावार्थम्, आदेशलक्षणप्रतिषेधार्थं च (म.भा.) । एधि, शाधीत्यत्र एत्वशाभावायोः कृतयोर्झल्लक्षणं धित्वं प्राप्नोति, असिद्धत्वाद्भवति। आगहि, जहीत्यत्रानुनासिकलोपे जभावे च 'अतो हेः' (६.४.१०५) इति लुक् प्राप्नोति, असिद्धत्वान्न भवति ।

आ भादिति किम्? अभाजि । रागः । 'अत उपधायाः' (७.२.११६) इति वृद्धौ कर्तव्यायां नलोपो नासिद्धो भवति ।

अत्रग्रहणं किम्? पपुषः पश्य । चिच्युषः पश्य । लुलुवुषः पश्य । वसुसम्प्रसारणमाल्लोपे यणादेशे उवङादेशे च कर्तव्ये नासिद्धं भवति। आल्लोपादीनि वसौ, वस्वन्तस्य विभक्तौ सम्प्रसारणमिति समनाश्रयत्वं नास्ति । 'असिद्धं

बहिरङ्गमन्तरङ्गे' (व्या.प. ४२) इति? एतदप्यत्र न भवति, किं कारणम्? एषा हि परिभाषा आ भाच्छास्त्रीया, तस्यां प्रवर्तमानायां वसुसम्प्रसारणादीनामाभाच्छा–स्त्रीयाणामेवासिद्धत्वादन्तरङ्गबहिरङ्गयोः युगपत्समुपस्थानं नास्तीति परिभाषा न प्रवर्तते ।

वुग्युटावुवङ्यणोः सिद्धौ भवत इति वक्तव्यम् (का.वा.११) । वुग् उवङादेशे– बभूव, बभूवतुः, बभूवुः । युट् यणादेशे – उपदिदीये, उपदिदीयाते, उपदिदीयिरे ।

आ भादित्ययमभिविधावाङ् । तेन भाधिकारेऽप्यसिद्धवद्भवति ॥

## ३०२४. श्नान्नलोपः ॥ २३ ॥ (२५४४)

श्नादिति–श्नमयमुत्सृष्टमकारो गृह्यते, तत उत्तरस्य नकारस्य लोपो भवति । अनक्ति । भनक्ति । हिनस्ति ।

शकारवतो ग्रहणं किम्? यज्ञानाम्, यत्नानाम्–'सुपि च' (७.३.१०२) इति परत्वात् कृतेऽपि दीर्घत्वे स्थानिवद्भावान्नलोपः स्यादेव ।

विश्नानाम्, प्रश्नानामित्यत्र 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव' (व्या.प. ३) इत्येवं न भवति ॥

## ३०२५. अनिदितां हल उपधायाः क्ङिति ॥ २४ ॥ (४१५)

अनिदिआमङ्गानां हलन्तानामुपधाया नकारस्य लोपो भवति क्ङिति प्रत्यये परतः । स्रस्तः, ध्वस्तः । त्रस्यते, ध्वस्यते । सनीस्रस्यते, दनीध्वस्यते ।

अनिदितामिति किम्? नन्द्यते, नानन्द्यते । हल इति किम्? नीयते, नेनीयते। उपधाया इति किम्? नह्यते, नानह्यते । क्ङितीति किम्? स्रंसिता, ध्वंसिता ।

अनिदितां नलोपे लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसंख्यानं कर्त्तव्यम् (का.वा.१) । विलगितः । विकपितः । उपतापशरीरविकारयोरिति किम्? बिलङ्गितः। विकम्पितः ।

रञ्जेर्णौ मृगरमण उपसंख्यानं कर्त्तव्यम् (का.वा.३) । रजयति मृगान् । 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' इति मित्त्वादुपधाह्रस्वत्वम् । मृगरमण इति किम्? रञ्जयति वस्त्राणि ।

घिनुणि च रञ्जेरुपसंख्यानं कर्तव्यम् (का.वा.४) । रागो । 'त्यजरजभज' इति निपातनाद्वा सिद्धम् ।

रजक–रजन–रजःसूपसंख्यानं कर्त्तव्यम् (का.वा.५) । रजकः । रजनम् । रजः ॥

### ३०२६. दंशसञ्जस्वञ्जां शपि ॥ २५ ॥ (२३९६)

दंश, सञ्ज, ष्वञ्ज–इत्येतेषामङ्गानां शपि परत उपधाया नकारस्य लोपो भवति । दशति । सजति । परिष्वजते ॥

### ३०२७. रञ्जेश्च ॥ २६ ॥ (२३९७)

रञ्जेश्च शपि परत उपधाया नकारस्य लोपो भवति । रजति, रजतः, रजन्ति। पृथग्योगकरणमुत्तरार्थम् ॥

### ३०२८. घञि च भावकरणयोः ॥ २७ ॥ (३१८८)

भावकरणवाचिनि घञि परतो रञ्जेरुपधाया नकारस्य लोपो भवति । भावे– आश्चर्यो रागः । विचित्रो रागः । करणे–रज्यतेऽनेनेति रागः ।

भावकरणयोरिति किम्? रजन्ति तस्मिन्निति रङ्गः ॥

### ३०२९. स्यदो जवे ॥ २८ ॥(३१८६)

जवेऽभिधेये 'स्यदः' इति घञि निपात्यते । स्यन्देर्नलोपो वृद्ध्यभावश्च । इक्प्रकरणात् 'न धातुलोपः' (१.१.४) इति प्रतिषेधो नास्ति–गोस्यदः, अश्वस्यदः।

जव इति किम्? तैलस्यन्दः । घृतस्यन्दः ॥

### ३०३०. अवोदैधोद्मप्रश्रथहिमश्रथाः ॥ २९ ॥ (३१८७)

अवोद, एध ओद्म, प्रश्रथ, हिमश्रथ–इत्येते निपात्यन्ते ।

अवोद इति, उन्देरवपूर्वस्य घञि नलोपो निपात्यते ।

एध इति, अन्धेर्घञि नलोपो गुणश्च निपात्यते 'न धातुलोप आर्धधातुके' (१.१.४) इति हि प्रतिषेधः स्यात् ।

ओद्म इति, उन्देरौणादिके मन्प्रत्यये नलोपो गुणश्च निपात्यते ।

प्रश्रथ इति, प्रपूर्वस्य श्रन्थेर्घञि नलोपो वृद्ध्यभावश्च निपात्यते ।
हिमश्रथ इति , हिमपूर्वस्य श्रन्थेर्घञ्येव निपातनम् ॥

## ३०३१. नाञ्चेः पूजायाम् ॥ ३० ॥ (४२४)

अञ्चेः पूजायामर्थे नकारस्य लोपो न भवति । अञ्चिता अस्य गुरवः । अञ्चितमिव शिरो वहति । 'अञ्चेः पूजायाम्' (७.२.४३) इति इडागमः ।

पूजायामिति किम्? उदक्तमुदकं कूपात् । उद्धृतमित्यर्थः । 'यस्य विभाषा' (७२.१५) इतीट्प्रतिषेधः ॥

## ३०३२. क्त्वि स्कन्दिस्यन्दोः ॥ ३१ ॥ (३३२१)

क्त्वाप्रत्यये परतः स्कन्द, स्यन्द–इत्येतयोर्नकारलोपो न भवति । स्कन्त्वा। स्यन्त्वा । इन्देरूदित्वात् (धा.पा. ७६१) पक्षे इडागमः (७.२.४४) स्यन्दित्वा । तत्र यदा इडागमस्तदा 'न क्त्वा सेट्' (१.२.२८) इति कित्त्वप्रतिषेधादेव नलोपाभावः॥

## ३०३३. जान्तनशां विभाषा ॥ ३२ ॥ (३३३०)

जान्तानामङ्गानां नशेश्च क्त्वाप्रत्यये परतो विभाषा नकारलोपो न भवति । रङ्क्त्वा, रक्त्वा । भङ्क्त्वा, भक्त्वा ।

नशः – नष्ट्वा, नंष्ट्वा । इट्पक्षे–नशित्वा ॥

## ३०३४. भञ्जेश्च चिणि ॥ ३३ ॥ (२७५४)

भञ्जेश्च चिणि परतो विभाषा नकारलोपो भवति । अभाजि, अभञ्जि ।

अप्राप्तोऽयं नलोपः पक्षे विधीयते, ततो नेति नानुवर्तते ॥

## ३०३५. शास इदङ्हलोः ॥ ३४ ॥ (३४८६)

शास उपधाया इकारादेशो भवति अङि परतो हलादौ च क्ङिति । अन्वशिषत्, अन्वशिषताम्, अन्वशिषन् । हलादौ किति–शिष्टः । शिष्टवान् । ङिति–आवां शिष्वः । वयं शिष्मः । इत्त्वे कृते 'शासिवसिघसीनां च' (८.३.६०) इति षत्वम्।

अङ्हलोरिति किम्? शासति । शशासतुः, शशासुः ।

क्वौ च शास इत्वं भवतीति वक्तव्यम् (म. भा.) । आर्यान् शास्तीति

आर्यशीः । मित्रशीः ।

यस्मात् शासेरङ् विहितः 'शासु अनुशिष्टौ' (धा.पा.१०७६) इति, तस्यैवेदं ग्रहणमिष्यते । 'आङः शासु इच्छायाम्' (धा.पा. १०२३) इत्यस्य न भवति – आशास्ते, आशास्यमानः ।

क्विप्प्रत्यये तु तस्यापि भवतीति वक्तव्यम् (म.भा.) । आशीः, आशिषौ, आशिषः । 'क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्' (८.२.१०४) इति निपातनाद्वा सिद्धम्॥

## ३०३६. शा हौ ॥ ३५ ॥ (२४८७)

शासो हौ परतः 'शा' इत्ययमादेशो भवति । अनुशाधि । प्रशाधि ।

'उपधायाः' इति निवृत्तम्, ततः 'शासः' इति स्थानेयोगा (१.१.४९) षष्ठी भवति ।

'क्ङिति' इत्येतदपि निवृत्तम् । तेन यदा 'वा छन्दसि' (३.४.८८) इति पित्त्वं हिशब्दस्य, तदाप्यादेशो भवत्येव । शाधीत्याद्युदात्तमपि छन्दसि दृश्यते ॥

## ३०३७. हन्तेर्जः ॥ ३६ ॥ (२४३१)

हन्तेर्धातोर्ज इत्ययमादेशो भवति हौ परतः । जहि शत्रून् ॥

## ३०३८. अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिक लोपो झलि क्ङिति ॥ ३७ ॥ (२४२८)

[अनुनासिकान्तानाम्] अनुदात्तोपदेशानामङ्गानां वनतेस्तनोत्यादीनां चानुनासिकलोपो भवति झलादौ क्ङिति प्रत्यये परतः । यमु–यत्वा । यतः । यतवान् । यतिः ।

रमु–रत्वा । रतः । रतवान् । रतिः । अनुदात्तोपदेशा अनुनासिकान्ता यमिरमिनमिगमिहनिमन्यतयः ।

वनति–वतिः । क्तिनि रूपमेतत् । क्तिचि तु 'न क्तिचि दीर्घश्च' (६.४.३९) इति भवति । अन्यत्र झलादाविटा भवितव्यम् ।

तनोत्यादयः – ततः । ततवान् । सनोतेरात्वं वक्ष्यति । क्षणि–क्षतः । क्षतवान्.। ऋणु–ऋतः । ऋतवान् । तृणु–तृतः । तृतवान् । घृणु–घृतः । घृतवान् । वनु – वतः । वतवान् । मनु – मतः । मतवान् । ङिति – अतत । अतथाः ।

अनुदात्तोपदेशवनतितनोत्यादीनामिति किम्? शान्तः । शान्तवान् । तान्तः । तान्तवान् । दान्तः । दान्तवान् । अनुनासिकस्येति किम्? पक्वः । पक्ववान् । झलीति किम्? गम्यते । रम्यते । क्ङितीति किम्? यन्ता । यन्तव्यम् । उपदेशग्रहणं किम्? इह च यथा स्यात् – गतिः । इह च मा भूत्–शान्तः, शान्तवानिति ॥

## ३०३९. वा ल्यपि ॥ ३८ ॥ (३३३४)

ल्यपि परतोऽनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो वा भवति । व्यवस्थितविभाषा चेयम्, तेन मकारान्तानां विकल्पो भवति । अन्यत्र नित्यमेव लोपः । प्रत्यय, प्रयम्य । प्ररत्य, प्ररम्य । प्रणत्य, प्रणम्य । आगत्य, आगम्य । आहत्य । प्रमत्य । प्रवत्य । प्रक्षत्य ॥

## ३०४०. न क्तिचि दीर्घश्च ॥ ३९ ॥ (३३१४)

क्तिचि परतोऽनुदात्तोपदेशादीनामनुनासिकलोपो दीर्घश्च न भवति । यन्तिः । वन्तिः । तन्तिः ।

अनुनासिकलोपे प्रतिषिद्धे 'अनुनासिकस्य क्विझलोः क्ङिति' (६.४.१५) इति दीर्घः प्राप्नोति, सोऽपि प्रतिषिद्ध्यते ॥

## ३०४१. गमः क्वौ ॥ ४० (२९८६)

गमः क्वौ परतोऽनुनासिकलोपो भवति । अङ्गगत् । कलिङ्गगत् । अध्वगतो हरयः ।

गमादीनामिति वक्तव्यम् (म. भा.) । इहापि यथा स्यात् – सम्यत् । परीतत्।

ऊ च गमादीनामिति वक्तव्यम् । (म. भा) । अग्रेगूः । अग्रेभ्रूः ॥

## ३०४२. विड्वनोरनुनासिकस्यात् ॥ ४१ ॥ (२९८२)

विटि वनि च प्रत्यये परतोऽनुनासिकान्तस्याङ्गस्याकार आदेशो भवति । 'अब्जाः गोजाः ऋतजाः अद्रिजाः' (ऋ. ४.४०.५) । 'गोषा इन्द्रो नृषा असि' (ऋ. ९.२.१०) । 'कूपखाः । शतखाः । सहस्रखाः । दधिक्राः । अग्रेगा उन्नेतृणाम्। 'जनसनखनक्रमगमो विट्' (३.२.६७) इति विट् प्रत्ययः । 'सनोतेरनः' (८.३.१०८) इति षत्वम्–गोषा इन्दो नृषा असीत्यत्र । वन्–विजावा । अग्रेजावा । 'अन्येभ्योऽपि दृश्यन्ते' (३.२.७५) इति वनिप्प्रत्ययः ।

'अनुनासिकस्य' इति वर्त्तमाने पुनरनुनासिकग्रहणमनुनासिकमात्रपरिग्रहार्थम्, अन्यथा ह्यनुदात्तोपदेशवनतितनोत्यादीनामेव स्यात् ॥

### ३०४३. जनसनखनां सञ्झलोः ॥ ४२ ॥ (२५०४)

'झलि' , 'क्ङिति' इति चानुवर्त्तते । जन, सन, खन–इत्येतेषामङ्गानां सनि झलादौ क्ङिति झलादौ [च] प्रत्यये परत आकार आदेशो भवति । जन्–जातः.। जातवान् । जातिः । सन् – सनि, सिषासति । सातः । सातवान् । सातिः । खन्–खातः । खातवान् । खातिः ।

झल्ग्रहणं सन्विशेषणार्थं किमर्थमनुवर्त्यते? इह मा भूत्–जिजनिषति । सिसनिषति । चिखनिषति । सनोतेः 'सनीवन्तर्ध' (७.२.४९) इति पक्षे इडागमः।

तदिह सनोत्यर्थमेव सन्ग्रहणम् । अत्र झलादौ क्ङिति सनोतेर्विप्रतिषेधाद् आत्त्वमनुनासिकलोपं बाधते ।

'घुमास्थागापाजहातिसां हलि' (६.४.६६) इति हल्ग्रहणं ज्ञापकम्–अस्मिन्नसिद्धप्रकरणे विप्रतिषेधो भवतीति ॥

### ३०४४. ये विभाषा ॥ ४३ ॥ (३२१९)

यकारादौ क्ङिति प्रत्यये परतो जनसनखनामाकार आदेशो भवति विभाषा । जायते, जन्यते । जाजायते, जञ्जन्यते । सायते, सन्यते । सासायते, संसन्यते । खायते, खन्यते । चाखायते, चङ्खन्यते । जनेः श्यनि 'ज्ञाजनोर्जा' (७.३.७९) इति नित्यं जादेशो भवति ॥

### ३०४५. तनोतेर्यकि ॥ ४४ ॥ (२८५९)

तनोतेर्यकि परतो विभाषा आकार आदेशो भवति । तायते, तन्यते ।

यकीति किम्? तन्तन्यते ।

### ३०४६. सनः क्तिचि लोपश्चास्यान्यतरस्याम् ॥ ४५ ॥ (३३१५)

सनोतेरङ्गस्य क्तिचि प्रत्यये परत आकार आदेशो भवति लोपश्चास्यान्यतरस्याम्। सातिः, सन्तिः, सतिः ।

अन्यतरस्यांग्रहणं विस्पष्टार्थम् । ये – सम्बद्धं हि विभाषाग्रहणमिह

निवृत्तमित्याशङ्क्येत ॥

## ३०४७. आर्धधातुके ॥ ४६ ॥ (२३०७)

'आर्धधातुके' इत्यधिकारः । 'न ल्यपि' (६.४.६९) इति प्रागेतस्माद्यदित ऊर्ध्वमनुक्रमिष्यामः 'आर्धधातुके' इत्येवं तद्वेदितव्यम् । वक्ष्यति–

"अतो लोपः । (६.४.४८)_ चिकीर्षिता । जिहीर्षिता । आर्धधातुक इति किम्? भवति । भवतः ।" अदिप्रभृतिभ्यः शपि लुग्वचनं (२.४.७२) प्रत्ययलोपलक्षणप्रतिषेधार्थं स्यादित्येतन्न ज्ञापकं शपो लोपाभावस्य ।

"यस्य हलः (६.४.४९) । बेभिदिता । बेभिदितुम् । बेभिदितव्यम् । आर्धधातुक इति किम्? बेभिद्यते ।"

"णेरनिटि (६.४.५१) । कारणा । हारणा । आर्धधातुक इति किम्? कारयति। हारयति ।"

"आतो लोपः (६.४.६४) । ययतुः । ययुः । ववतुः । ववुः । आर्धधातुक इति किम्? यान्ति । वान्ति ।"

"घुमास्थागापाजहातिसां हलि (६.४.६६) । दीयते । धीयते । आर्धधातुक इति किम्? अदाताम् । अधाताम्" ।

"वाऽन्यस्य संयोगादेः (६.४.६८) । स्नेयात्, स्नायात् । आर्धधातुक इति किम्? स्नायात् । आशीर्लिङोऽन्यत्र न भवति " ।

"स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च (६.४.६२) । कारिषीष्ट । हारिषीष्ट । आर्धधातुक इति किम्? क्रियेत । ह्रियेत । यगन्तस्याजन्तत्वाच्चिण्वद्भावे सति वृद्धिः स्यात्, ततश्च युक् प्रसज्येत" ।

अतो लोपो यलोपश्च णिलोपश्च प्रयोजनम् ।
आल्लोप ईत्वमेवं च चिण्वद्भावश्च सीयुटि ॥ (म. भा. श्लोक वा.१)

## ३०४८. भ्रस्जो रोपधयो रमन्यतरस्याम् ॥ ४७ ॥ (२५३५)

भ्रस्जो रेफस्योपधायाश्च रमन्यतरस्यां भवति । 'रोपधयोः' इति स्थानषष्ठीनिर्देशादुपधा, रेफश्च निवर्त्तेते । मित्त्वाच्चायमचोऽन्त्यात्परो भवति । भ्रष्टा, भर्ष्टा । भ्रष्टुम्, भर्ष्टुम् । भ्रष्टव्यम्, भर्ष्टव्यम् । भ्रज्जनम्, भर्ज्जनम् ।

भृष्टः, भृष्टवान् इत्यत्र पूर्वविप्रतिषेधेन सम्प्रसारणं भवति ।

उपदेश इत्येव – बरीभृज्यते ॥

## ३०४९. अतो लोपः ॥ ४८ ॥ (२३०८)

अकारान्तस्यार्धधातुके लोपो भवति। चिकीर्षिता । चिकीर्षितुम् । चिकीर्षितव्यम्.। धिनुतः । कृणुतः ।

अत इति किम्? चेता । स्तोता । तपरकरणं किम्? याता । वाता । आर्धधातुक इति किम्? वृक्षत्वम् । वृक्षता ।

वृद्धिदीर्घाभ्यामतो लोपः पूर्वविप्रतिषेधेन (म. भा.) । चिकीर्षकः । जिहीर्षकः। चिकीर्ष्यते । जिहीर्ष्यते ॥

## ३०५०. यस्य हलः ॥ ४९ ॥ (२६३१)

हल उत्तरस्य यशब्दस्यार्धधातुके लोपो भवति । बेभिदिता । बेभिदितुम् । बेभिदितव्यम् ।

'यस्य' इति सङ्घातग्रहणमेतत् । तत्र 'अलोऽन्त्यस्य' (१.१५२) इत्येतन्न भवति; 'अतो लोपः' (६.४.४८) इत्यनेनैव तस्य सिद्धत्वात् ।

'हलः' इति वा पञ्चमीनिर्द्देशः, तत्र 'आदेः परस्य' (१.१.५४) इति यकारोऽनेन लुप्यते ।

सङ्घातग्रहणं किम्? ईर्ष्यिता । मव्यिता । हल इति किम्? लोलूयिता । पोपूयिता ॥

## ३०५१. क्यस्य विभाषा ॥ ५० ॥ (२६६०)

क्यस्य हल उत्तरस्य विभाषा लोपो भवति आर्धधातुके । समिधिता, समिध्यिता.। दृषदिता, दृषद्यिता । समिधमात्मन इच्छति, समिधमिवात्मानमाचरति – इति वा क्यच्क्यङौ यथायोगं कर्त्तव्यौ ॥

## ३०५२. णेरनिटि ॥ ५१ ॥ (२३१३)

अनिडादावार्धधातुके णेर्लोपो भवति । इयङ्यण्गुणवृद्धिदीर्घाणामपवादः। अततक्षत् । अररक्षत् । आटिटत् । आशिशत् । कारणा । हारणा । कारकः । हारकः.। कार्यते । हार्यते । ज्ञीप्सति ।

अनिटीति किम्? कारयिता । हारयिता ।

### ३०५३. निष्ठायां सेटि ॥ ५२ ॥ (३०५७)

निष्ठायां सेटि परतो णेर्लोपो भवति । कारितम् । हारितम् । गणितम् । लक्षितम् ।

सेटीति किम्? संज्ञपितः पशुः । इड्ग्रहणसामर्थ्यादिह पूर्वेणापि न भवति। 'सनीवन्तर्ध' (७.२.४९) इति ज्ञप्रेरिटि विकल्पिते 'यस्य विभाषा' (७.३.१५) इति निष्ठायां प्रतिषेधः ।

अथ पुनः 'एकाचः' इति तत्रानुवर्त्तते, तदा नित्यमत्र भवितव्यमेवेडागमेनेति सेड्ग्रहणमनर्थकम्? तत् क्रियते कालावधारणार्थम् – इडागमे कृते णिलोपो यथा स्यात् । अकृते हि तत्र णिलोपे सति कारितमित्यत्र 'एकाच उपदेशेऽनुदात्तात्' (७.२.१०) इतीटः प्रतिषेधः प्रसज्येत ॥

### ३०५४. जनिता मन्त्रे ॥ ५३ ॥ (३५४२)

जनीतेति मन्त्रविषये इडादौ णिलोपो निपात्यते । 'यो नः॑ पि॒ता ज॒नि॒ता' (ऋ. १०.८२.३) ।

मन्त्र इति किम्? जनयिता ।

### ३०५५. शमिता यज्ञे ॥ ५४ ॥ (३५४३)

यज्ञकर्मणि शमितेति इडादौ तृचि णिलोपो निपात्यते । शृतं हविः शमितः। तृचि सम्बुद्ध्यन्तमेतत् ।

यज्ञे इति किम्? शृतं हविः शमयितः ॥

### ३०५६. अयामन्ताल्वाय्येत्न्विष्णुषु ॥ ५५ ॥ (२३११)

आम्, अन्त, आलु, आय्य, इत्नु, इष्णु–इत्येतेषु परतो णेरयादेशो भवति । कारयाञ्चकार । हारयाञ्चकार । अन्त–गण्डयन्तः । मण्डयन्तः । आलु–स्पृहयालुः। आय्य–स्पृहयाय्यः (ऋ. ६.४.१२) । गृहयाय्यः । इत्नु–स्तनयित्नुः । इष्णु–पोषयिष्णवः (मै.४.२.१४) पारयिष्णवः ।

'न' इति वक्तव्ये अयादेशवचनमुत्तरार्थम् ॥

### ३०५७. ल्यपि लघुपूर्वात् ॥ ५६ ॥ (३३३६)

ल्यपि परतो लघुपूर्वाद्वर्णादुत्तरस्य णेरयादेशो भवति । प्रणमय्य, प्रथमय्य, प्रदमय्य, प्रशमय्य, सन्दमय्य गतः । प्रबेभिदय्य गतः । प्रगणय्य गतः ।

ह्रस्वयलोपाल्लोपानमसिद्धत्वं न भवति, असमानाश्रयत्वात् – ह्रस्वादयो हि णौ, ल्यपि णेरयादेशो भवति । लघुपूर्वादिति किम्? प्रपात्यः गतः ॥

### ३०५८. विभाषाऽऽपः ॥ ५७ ॥ (३३३७)

इङादेशस्य लाक्षणिकत्वान्न भवति – अध्याप्य गतः ॥

### ३०५९. युप्लुवोर्दीर्घश्छन्दसि ॥ ५८ ॥ (३५४४)

यु, प्लु–इयेतयोर्ल्यपि परतश्छन्दसि विषये दीर्घो भवति । 'दान्त्यनुपूर्वं वियूय' (ऋ. १०.१३१.२) । 'यत्रा यो दक्षिणा परिप्लूय' (काठ. सं. २५.३) ।

छन्दसीति किम्? संयुत्य । आप्लुत्य ॥

### ३०६०. क्षियः ॥ ५९ ॥ (३३३८)

क्षियश्च दीर्घो भवति ल्यपि परतः । प्रक्षीय ॥

### ३०६१. निष्ठायामण्यदर्थे ॥ ६० ॥ (३०१४)

ण्यतः कृत्यस्यार्थो=भावकर्मणी, ताभ्यामन्यत्र या तिष्ठा तस्यां क्षियो दीर्घो भवति । आक्षीणः । प्रक्षीणः । परिक्षीणः । अकर्मकत्वात् क्षियः कर्त्तरि क्तः ।

प्रक्षीणमिदं देवदत्तस्येति 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (६.४.७६) इत्यधिकरणे क्तः ।

अण्यदर्थ इति किम्? अक्षितमसि मा मेक्षेष्ठाः (तै.सं. १.६.५.१) । क्षितमिति भावे दीर्घाभावात् 'क्षियो दीर्घात्' (८.२.४६) इति निष्ठानत्वमपि न भवति ॥

### ३०६२. वाऽऽक्रोशदैन्ययोः ॥ ६१ ॥ (३०८१)

आक्रोशे गम्यमाने, दैन्ये च क्षियो निष्ठायामण्यदर्थे वा दीर्घो भवति । क्षितायुरेधि । क्षीणायुरेधि । दैन्ये–क्षितकः । क्षीणकः । क्षितोऽयं तपस्वी ।

क्षीणोऽयं तपस्वी ॥

### ३०६३. स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ॥ ६२ ॥ (२७५७)

स्य, सिच्, सीयुट्, तासि–इत्येतेषु भावकर्मविषयेषु परत उपदेशेऽजन्तानामङ्गानाम्, हन्, ग्रह, दृश्–इत्येतेषां च चिण्वत्कार्यं भवति वा । यदा चिण्वत् तदा इडागमो भवति । कस्य? स्यसिच्सीयुट्तासीनामेवेति वेदितव्यम्; ते हि प्रकृताः । अङ्गस्य तु लक्ष्यविरोधान्न क्रियते ।

कानि पुनरस्य योगस्य प्रयोजनानि?

चिण्वद्वृद्धिर्युक्च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति ।

इट् चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वल्निमित्तो विघाती ॥ (म. भा. श्लो. वा.)

अजन्तानां तावत्–चायिष्यते, चेष्यते, अचायिष्यत, अचेष्यत । दायिष्यते, दास्यते, अदायिष्यत, अदास्यत । शामिष्यते, शमिष्यते, शमयिष्यते, अशामिष्यत, अशमिष्यत, अशमयिष्यत । हन्–घानिष्यते, हनिष्यते, अघानिष्यत, अहनिष्यत । ग्रह – ग्राहिष्यते, ग्रहीष्यते, अग्राहिष्यते, अग्रहीष्यते । 'ग्रहोऽलिटि दीर्घः' (७.२.३७) इति प्रकृतस्येटो दीर्घत्वम् । दृश् – दर्शिष्यते, द्रक्ष्यते, अदर्शिष्यत, अद्रक्ष्यत ।

सिच्यजन्तानाम्–अचायिषाताम्, अचेषाताम् । अदायिषाताम्, अदिषाताम् । अशामिषाताम् । अशमिषाताम्, अशमयिषाताम् । हन्–अघानिषाताम्, अवधिषाताम्, अहसाताम् । ग्रह्–अग्राहिषाताम्, अग्रहीषाताम् । दृश् – अदर्शिषाताम्, अदृक्षाताम्।

सीयुटि अजन्तानाम्–चायिषीष्ट, चेषीष्ट । दायिषीष्ट, दासीष्ट । शामिषीष्ट, शमिषीष्ट, शमयिषीष्ट । हन्–घानिषीष्ट, वधिषीष्ट । ग्रह–ग्राहिषीष्ट, ग्रहीषीष्ट । दृश्–दर्शिषीष्ट, दृक्षीष्ट ।

तासावजन्तानाम्–चायिता, चेता । दायिता, दाता । शामिता, शमिता, शमयिता.। हन् – घानिता, हन्ता । ग्रह–ग्राहिता, ग्रहीता । दृश्–दर्शिता, दर्ष्टा, द्रष्टा ।

स्यासिच्सीयुट्तासिष्विति किम्? चेतव्यम्, दातव्यम् । भावकर्मणोरिति किम्? चेष्यति । दास्यति । उपदेश इति किम्? कारिष्यते – इति गुणे कृते रपरत्वे च न प्राप्नोति, उपदेशग्रहणाद् भवति । अज्झनग्रहदृशामिति किम्? पठिष्यते ।

अङ्गाधिकारविहितं कार्यमिहातिदिश्यते, तेन हनिणिङामादेशा न भवन्ति ।

हनिष्यते, घानिष्यते । एष्यते, आयिष्यते । अध्येष्यते, अध्यायिष्यते । 'हनो वध लिङि' (२.४.४२), 'लुङि च' , (२.४.४३) 'इणो गा लुङि' ,(२.४.४५) 'विभाशा लुङ्लृङोः' (२.४.५०) इत्येते विधयो न भवन्ति ॥

### ३०६४. दीङो युडचि क्ङिति ॥ ६३ ॥ (२५०७)

दीङो युडागमो भवति अजादौ क्ङिति प्रत्यये परतः । उपदिदीये, उपदिदीयाते, उपदिदीयिरे ।

'दीङः' इति पञ्चमीनिर्देशादजादेर्युडागमो भवति । विधानसामर्थ्याच्च 'एरनेकाचः' (६.४.८२) इति यणादेशे कर्त्तव्ये तस्यासिद्धत्वं न भवति ।

अचीति किम्? उपदेदीयते । क्ङितीति किम्? उपदानम् ॥

### ३०३५. आतो लोप इटि च ॥ ६४ ॥ (२६७२)

इव्यजादावार्धधातुके क्ङिति चाकारान्तस्याङ्गस्य लोपो भवति । इटि– पपिथ। तस्थिथ । किति–पपतुः, पपुः । तस्थतुः तस्थुः । गोदः । कम्बलदः । ङिति–प्रदा। प्रधा ।

'आर्धधातुके' इत्येव – यान्ति । वान्ति । व्यत्यरे । व्यत्यले । रातेर्लातेश्च लङि इटि रूपम् ।

अचीत्येव–ग्लायते । दासीय ॥

### ३०६६. ईद्यति ॥ ६५ ॥ (२८४३)

ईकार आदेशो भवति आकारान्तस्याङ्गस्य यति परतः । देयम् । धेयम् । हेयम् । स्तेयम् ॥

### ३०३७. घुमास्थागापाजहातिसां हलि ॥ ६६ ॥ (३४६२)

घुसंज्ञकानामङ्गानां मा, स्था, गा, पा, जहाति, सा–इत्येतेषां हलादौ क्ङिति प्रत्यये परत ईकारादेशो भवति । दीयते, देदीयते । धीयते, देधीयते । मीयते, मेमीयते । स्थीयते, तेष्ठीयते । गीयते, जेगीयते । अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत । पीयते, पेपीयते ।

पातेरिह ग्रहणं नास्ति; लुग्विकरणत्वात् । पायते – इत्येव तस्य भवति ।

हीयते । जेहीयते । जहातेरिह निर्देशाद् जिहातेर्ग्रहणं न भवति । हायते ।

षोऽन्तकर्मणि' (धा.पा. ११४८) – अवसीयते, अवसेसीयते ।

हलीति किम्? ददतुः, ददुः । आतो लोपाद्धि परत्वादीत्वं स्यात् । एतदेव हल्ग्रहणं ज्ञापकम्–अस्मिन् प्रकरणे विप्रतिषेधेनासिद्धत्वं भवति ।

'क्ङिति' इत्येव–दाता । धाता ॥

### ३०३८. एर्लिङि ॥ ६७ ॥ (२३७४)

घुमास्थागापाजहातिसामङ्गानां लिङि परत एकारादेशो भवति । देयात् । मेयात् । धेयात् । स्थेयात् । गेयात् । पेयात् । अवसेयात् ।

'क्ङिति' इत्येव–दासीष्ट । धासीष्ट ॥

### ३०३९. वाऽन्यस्य संयोगादेः ॥ ३८ ॥ (२३७८)

घ्वादिभ्योऽन्यस्य संयोगादेराकारान्तस्य वा एकारादेशो भवति लिङि परतः । ग्लेयात्, ग्लायात् । म्लेयात्, म्लायात् ।

अन्यस्येति किम्? स्थेयात् । संयोगादेरिति किम्? यायात् ।

'क्ङिति' इत्येव–ग्लासीष्ट । 'अङ्गस्य' इत्येव–निर्वायात् ॥

### ३०७०. न ल्यपि ॥ ६९ ॥ (३३३५)

ल्यापि प्रत्यये परतो घुमास्थागापाजहातिसां यदुक्तं तन्न [भवति] । प्रदाय । प्रधाय । प्रमाय । प्रस्थाय । प्रगाय । प्रपाय । प्रहाय । अवसाय ॥

### ३०७१. मयतेरिदन्यतरस्याम् ॥ ७० ॥ (३३१८)

मयरेरिकारादेशो वा भवति ल्यपि परतः । अपमित्य, अपमाय ॥

### ३०७२. लुङ्लङ्लृङ्क्ष्वडुदात्तः ॥ ७१ ॥ (२२०६)

लुङ्, लङ्, लृङ्–इत्येतेषु परतोऽङ्गस्याडागमो भवति, उदात्तश्च स भवति । लुङ्–अकार्षीतु, अहार्षीत् । लङ्–अकरोत्, अहरत् । लृङ्–अकरिष्यत्, अहरिष्यत्॥

### ३०७३. आडजादीनाम् ॥ ७२ ॥ (२२५४)

आडागमो भवत्यजादीनां लुङ्लङ्लृङ्क्षु परतः, उदात्तश्च स भवति । ऐक्षिष्ट।

ऐहिष्ट । औब्जीत् । औम्भीत् । लङ्–ऐक्षत ऐहत । औब्जत् । औम्भत् । लृङ्–ऐक्षिष्यत । औब्जिष्यत् । औम्भिष्यत् ।

इह ऐज्यत, औप्यत, औह्यतेति लङि कृते लावस्थायामाडागमादन्तरङ्गत्वाल्लादेशः क्रियते, तत्र कृते विकरणो नित्यत्वादडागमं बाधते । शब्दान्तरप्राप्तेरडागमस्यानित्यत्वम्; कृते हि विकरणान्तस्याङ्गस्य तेन भवितव्यम्, अकृते तु धातुमात्रस्य 'शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति (परि.) ।

ननु शब्दान्तरादिति विकरणोऽनित्यः? विकरणे कृते सम्प्रसारणमडागमान्नित्यत्वादेव भवति, सम्प्रसारणे च कृतेऽजाद्यङ्गं जातमिति 'आडजादीनाम्' इत्याडागमः ॥

## ३०७४. छन्दस्यपि दृश्यते ॥ ७३ ॥ (३५४५)

छन्दसि विषये आडागमो दृश्यते । यतो हि विहितस्ततोऽन्यत्रापि दृश्यते । 'आडजादीनाम्' (६.४.७२) इत्युक्तम्, अनजादीनामपि दृश्यते–'सुरुचो वेन आवः' (वा.सं. १३.३) । आनक् । आयुनक् । 'आवः' इति वृञो लुङि 'मन्त्रे घसह्वर' (२.४.८०) इति लेर्लुकि कृते च भवति, तथा 'आनक्' इति नशेः । 'आयुनक्' इति युजेर्लङि ॥

## ३०७५. न माङ्योगे ॥ ७४ ॥ (२२२८)

माङ्योगे लुङ्लङ्लृङ्क्षु यदुक्तं तन्न भवति । मा भवान् कार्षीत् । मा भवान् हार्षीत् । मा स्म करोत् । मा स्म हरत् । मा भवानीहिष्ट, मा भवानीक्षिष्ट । मा स्म भवानीहत । मा स्म भवानीक्षत ॥

## ३०७६. बहुलं छन्दस्यमाङ्योगेऽपि ॥ ७५ ॥ (३५४६)

छन्दसि विषये माङ्योगेऽपि बहुलमडाटौ भवतः । अमाङ्योगेऽपि न भवतः। अमाङ्योगे तावत्– 'जनिष्ठा उग्रः' (ऋ. १०.७३.१) । 'काममूनयीः (ऋ.१.५३.३)। काममर्दयीत् । माङ्योगेऽपि भवतः–'मा वः क्षेत्रे परबीजान्यवाप्सुः (आ.ध. २.१३.६) मा अभित्थाः । मा आवः ॥

## ३०७७. इरयो रे ॥ ७६ ॥ (३५४७)

'इ्रे' –इत्येतस्य छन्दसि विषये बहुलं 'रे' इत्ययमादेशो भवति । 'गर्भं प्रथमं दध्र आपः । (ऋ. १०.८२.५) । याऽस्य परिदध्रे । परिदद्दृश्रे । घाञो रेभावस्यासिद्धत्वादातो लोपो भवति ।

न च भवति–'परमाया धियोऽग्निकर्माणि चक्रिरे । अत्र रेशब्दस्य सेटां धातूनामिटि कृते पुना रेभावः क्रियते, तदर्थम् 'इरयोः' इत्ययं द्विवचननिर्देशः ॥

## ३०७८. अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ॥ ७७ ॥ (२७१)

श्नुप्रत्ययान्तस्याङ्गस्य धातोरिवर्णोवर्णान्तस्य 'भ्रू' इत्येतस्य च इयङ्, उवङ्– इत्येतावादेशौ भवतोऽजादौ प्रत्यये परतः । आप्नुवन्ति । राध्नुवन्ति । शक्नुवन्ति । धातोः – चिक्षियतुः, चिक्षियुः । लुलुवतुः, लुलुवुः । नियौ, नियः । लुवौ, लुवः। भ्रुवौ, भ्रुवः ।

अचीति किम्? आप्नुयात् । शक्नुयात् । राध्नुयात् । श्नुधातुभ्रुवामिति किम्? लक्ष्म्यै । वध्वै । य्वोरिति किम्? चक्रतुः । चक्रुः ।

इयङुवङ्भ्यां गुणवृद्धी भवतो विप्रतिषेधेन । चयनम्, चायकः । लवनम्, लावकः ।

इयङुवङ्प्रकरणे तन्वादीनां छन्दसि बहुलमुपसंख्यानं कर्तव्यम् (म. भा.) तन्वं (आ.वे.५.३.१) पुषेम तनुवं (तै. सं १.५.५.४) पुषेम । विष्वं पुषेम, विषुवं पुषेम । स्वर्गो लोकः, सुवर्गो (तै. १.५.७.१) लोकः । त्र्यम्बकं (तै. १.८.६) यजामहे, त्रियम्बकं यजामहे ॥

## ३०७९. अभ्यासस्यासवर्णे ॥ ७८ ॥ (२२९०)

अभ्यासस्येवर्णोवर्णान्तस्यासवर्णेऽचि परत इयङ्, उवङ्–इत्येतावादेशौ भवतः.। इयेषा । उवोष । इयर्त्ति ।

असवर्ण इति किम्? ईयतुः, ईयुः । ऊवतुः, ऊवुः । [ईषतुः, ईषुः । ऊषतुः, ऊषुः ।]

'अचि' इत्येव–इयाज । उवाप ॥

## ३०८०. स्त्रियाः ॥ ७९ ॥ (३०१)

'स्त्री' –इत्येतस्याजादौ प्रत्यये परत इयङादेशो भवति । स्त्री, स्त्रियौ,

स्त्रियः । स्त्रीणाम्–इत्यत्र परत्वान्नुडागमः ।

पृथग्योगकरणमुत्तरार्थम् ॥

## ३०८१. वाऽम्शसोः ॥ ८० ॥ (३०२)

अमि शसि परतः स्त्रियां वा इयङादेशो भवति । स्त्रीं पश्य, स्त्रियं पश्य । स्त्रीः पश्य, स्त्रियः पश्य ॥

## ३०८२. इणो यण् ॥ ८१ ॥ (२४५५)

इणोऽङ्गस्य यणादेशो भवति अचि परतः । यन्ति । यन्तु । आयन् । इयङादेशापवादोऽयम् । 'मध्येऽपवादाः पूर्वान्विधीन् बाधन्ते' (व्या.प. १०) इति गुणवृद्धिभ्यां परत्वादयं बाध्यते । अनयम् । आयकः ॥

## ३०८३. एरनेकाचोऽसंयोगपूर्वस्य ॥ ८२ ॥ (२७२)

धातोरिति वर्तते, तेन संयोगो विशेष्यते । धातोरवयवः संयोगः पूर्वो यस्मादिवर्णान्न भवति असावसंयोगपूर्वः तदन्तस्याङ्गस्यानेकाचोऽचि परतो यणादेशो भवति । निन्यतुः, निन्युः । उन्न्यौ, उन्न्यः । ग्रामण्यौ । ग्रामण्यः ।

एरिति किम्? असंयोगपूर्वग्रहणमिवर्णविशेषणं यथा स्याद्, अङ्गविशेषणं मा भूदिति । लुलुवतुः, लुलुवुः–इत्येतत्तु 'ओः सुपि' (६.४.८३) इति नियमादपि सिध्यति ।

अनेकाच इति किम्? नियौ, नियः । असंयोगपूर्वस्येति किम्? यवक्रियौ । यवक्रियः । धातुना संयोगविशेषणं किम्? इहापि न स्याद्–उन्न्यौ, उन्न्य इति ।

गतिकारकाभ्यामन्यपूर्वस्य नेष्यते । परमनियौ । परमनिय इति ॥

## ३०८४. ओः सुपि ॥ ८३ ॥ (२८१)

धात्ववयवः संयोग पूर्वो यस्मादुवर्णान्न भवति तदन्तस्याङ्गस्यानेकाचोऽजादौ सुपि परतो यणादेशो भवति । खलप्वौ, खलप्वः । शतस्वौ, शतस्वः । सकृल्ल्वौ, सकृल्ल्वः ।

सुपीति किम्? लुलुवतुः, लुलुवुः ।

'अनेकाचः' इत्येव – लुवौ, लुवः ।

'असंयोगपूर्वस्य' इत्येव–कटप्रुवौ, कटप्रुवः ।

'गतिकारकाभ्यामन्यपूर्वस्य नेष्यते' इत्येव–परमलुवौ, परमलुवः ।

### ३०८५. वर्षाभ्वश्च ॥ ८४ ॥ (२८२)

वर्षाभू–इत्येतस्याजादौ सुपि परतो यणादेशो भवति । वर्षाभ्वौ, वर्षाभ्वः ।

'पुनर्भ्वश्चेति वक्तव्यम् (क.वा.) पुनभ्वौ, पुनर्भ्वः ॥

कारापूर्वस्यापीष्यते–काराभ्वौ, काराभ्वः ॥

### ३०८६. न भूसुधियोः ॥ ८५ ॥ (२७३)

भू, सुधी–इत्येतयोर्यणादेशो न भवति । प्रतिभुवौ, प्रतिभुवः । सुधियौ, सुधियः ॥

### ३०८७. छन्दस्युभयथा ॥ ८६ ॥ (३५४५)

छन्दसि विषये भू, सुधी–इत्येतयोरुभयथा दृश्यते । 'वनेषु चित्रं विभ्वं विशे' ,(ऋ. ४.७.१) विशे विभुवम् (तै.सं. १.५.५) । सुध्यो हव्यमग्ने, सुधियो हव्यमग्ने ॥

### ३०८८. हुश्नुवोः सार्वधातुके ॥ ८७ ॥ (२३८७)

'हु' इत्येतस्याङ्गस्य श्नुप्रत्ययान्तस्यानेकाचोऽसंयोगपूर्वस्याजादौ सार्वधातुके परतो यणादेशो भवति । जुह्वति, जुह्वतु । सुन्वन्ति, सुन्वन्तु, असुन्वन् ।

हुश्नुवोरिति किम्? योयुवति । रोरुवति ।

इदमेव हुश्नुग्रहणं ज्ञापकम् – भाषायामपि यङ्लुगस्तीति । छन्दसि 'छन्दस्युभयथा' (६.४.८६) इत्यार्धधातुकत्वादेव यणादेशस्याप्रसङ्गः । न च यङ्लुगन्तादन्यत् प्रत्युदाहरणम् उवर्णान्तमनेकाजसंयोगपूर्वं सार्वधातुके विद्यते ।

सार्वधातुक इति किम्? जुहुवतुः, जुहुवुः ।

'असंयोगपूर्वस्य' इत्येव–आप्नुवन्ति । राध्नुवन्ति ॥

### ३०८९. भुवो वुग्लुङ्लिटोः ॥ ८८ ॥ (२१७४)

भुवो वुगागमो भवति लुङि लिटि चाजादौ परतः । अभूवन् । अभूवम् । लिट्–बभूव, बभूवतुः, बभूवुः ॥

### ३०९०. ऊदुपधाया गोहः ॥ ८९ ॥ (२३३४)

गोहोऽङ्गस्य उपधाया ऊकारादेशो भवति अजादौ प्रत्यये परतः । निगूहयति। निगूहकः । साधु निगूही । निगूहंनिगूहम् । [निगूहन्ति] । निगूहो वर्तते ।

उपधाया इति किम्? अलोऽन्त्यस्य मा भूत् ।

'गोहः' इति विकृतग्रहणं विषयार्थम् (म. भा.) । यत्रास्यैतद्रूपं तत्रैव यथा स्यात्, इह मा भूत्–निजुगुहतुः, निजुगुहुः ।

अयादेशप्रतिषेधार्थं च केचिदिच्छन्ति । निगूह्य गत इत्युत्वस्यासिद्धत्वाद् 'ल्यपि लघुपूर्वात्' (६.४.५६) इत्ययादेशः स्यात् । व्याश्रयत्वादेवासिद्धत्वमत्र नास्ति–णावूत्वम्, ण्यन्तस्य च ल्यप्ययादेश इति ।

अचीत्येव–निगोढा । निगोढुम् ॥

### ३०९१. दोषो णौ ॥ ९० ॥ (२६०४)

दोष उपधाया ऊकार आदेशो भवति णौ परतः । दूषयति । दूषयतः । दूषयन्ति ।

विकृतग्रहणं प्रक्रमाभेदार्थम् । पूर्वत्र हि 'गोहः' इत्युक्तम् ।

णाविति किम्? दोषो वर्तते ॥

### ३०९२. वा चित्तविरागे ॥ ९१ ॥ (२६०५)

चित्तविकारार्थे दोष उपधाया वा ऊकारादेशो भवति णौ परतः । चित्तं दूषयति, चित्तं दोषयति । प्रज्ञां दूषयति, प्रज्ञां दोषयति ।

### ३०९३. मितां ह्रस्वः ॥ ९२ ॥ (२५६८)

मितो धातवः 'घटादयो मितः' (सि.कौ. पृ. ७३२) इत्येवमादयो ये प्रतिपादिताः, तेषामुपधाया ह्रस्वो भवति णौ परतः । घटयति । व्यथयति । जनयति । रजयति । शमयति । ज्ञपयति ।

केचिदत्र 'वा' इत्यनुवर्त्तयन्ति, सा च व्यवस्थितविभाषा, तेन उत्क्रामयति,

संक्रामयतीत्येवमादि सिद्धं भवति ॥

### ३०९४. चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ॥ ९३ ॥ (२७६२)

चिण्परे णमुल्परे च णौ परतो मितामङ्गानामुपधाया दीर्घो भवति अन्यतरस्याम्। अशमि, अशामि । अतमि, अतामि । शमंशमम्, शामंशामम् । तमन्तमम्, तामन्तामम्।

दीर्घग्रहणं किम्, न ह्रस्वविकल्प एव विधीयते? नैवं शक्यम्; शमयन्तं प्रयुक्ते–इति द्वितीये णिचि ह्रस्वविकल्पो न स्यात् ।

णिलोपस्य स्थानिवद्भावाद् दीर्घविधौ त्वजादेशो न स्थानिवात् । शमयन्तं प्रयुक्तान् । अशमि, अशामि । शमंशमम्, शामंशामम् । शंशमयतेः – अशंशमि, अशंशामि । अशंशमि । शंशामम् ।

योऽसौ णौ णिर्लुप्यते, यश्च यङकारः, तयोर्दीर्घविधौ आदेशो न स्थानिवद्भवतीति अस्थानिवद्भावादीर्घः सिद्धो भवति । ह्रस्वविकल्पे तु विधीयमाने स्थानिवद्भावः स्यात् ।

णिण्यन्ते यङ्ण्यन्ते त्वसिद्धिरेव । व्याश्रयत्वादसिद्धत्वमपि नास्ति । णौ हि णियङोर्लोपः, चिण्णमुल्परे णावङ्गस्य दीर्घत्वम् ॥

### ३०९५. खचि ह्रस्वः ॥ ९४ ॥ (२९५५)

खच्परे णौ परतो ह्रस्वो भवत्यङ्गस्योपधायाः । द्विषन्तपः । परन्तपः । पुरन्दरः ॥

### ३०९६. ह्लादो निष्ठायाम् ॥ ९५ ॥ (३०७३)

ह्लादोऽङ्गस्योपधाया ह्रस्वो भवति निष्ठायां परतः । प्रह्लान्नः । प्रह्लन्नवान् ।

निष्ठायामिति किम्? प्रह्लादयति । 'ह्लाद' इति योगविभागः क्रियते, क्तिन्यपि यथा स्यात्–प्रह्लत्तिरिति ॥

### ३०९७. छादेर्घेऽद्व्युपसर्गस्य ॥ ९६ ॥ (३२९७)

छादेरङ्गस्याद्व्युपसर्गस्य घप्रत्यये परत उपधाया ह्रस्वो भवति । उरश्छदः । दन्तच्छदः ।

णिलोपस्य चासिद्धत्वं स्थानिवद्भावो वा वचनसामर्थ्यादत्र न भवतीति ह्रस्वभाविन्युपधा भवति ।

अद्व्युपसर्गस्येति किम्? समुपच्छादः ।

अद्विप्रभृत्युपसर्गस्येति वक्तव्यम् (म. भा.) । समुपातिच्छादः । उत्तरा हि संख्या पूर्वसंख्याकृतं व्यपदेशं निवर्त्तयति, न हि त्रिपुत्रो द्विपुत्र इति व्यपदिश्यते.॥

### ३०९८. इस्मन्त्रन्क्विषु च ॥ ९७ ॥ (२९८५)

इस्, मन्, त्रन्, क्वि–इत्येतेषु परतश्छादेरुपधाया ह्रस्वो भवति । छदिः । छद्म । छत्रम् । धामच्छत् । उपच्छत् ।

### ३०९९. गमहनजनखनघसां लोपः क्ङित्यनङि ॥ ९८ ॥ (२३६३)

गम, हन, जन, खन, घस–इत्येतेषामङ्गानामुपधाया लोपो भवत्यजादौ प्रत्यये क्ङित्यनङि परतः । जग्मतुः, जग्मुः । जघ्नतुः, जघ्नुः । [जज्ञतुः, जज्ञुः] जज्ञे, जज्ञाते, जज्ञिरे । चख्नतुः, चख्नुः । जक्षतुः, जक्षुः । 'अक्षन्नमीमदन्त पितरः' (वा. सं. १९.३६) ।

क्ङितीति किम्? गमनम् । हननम् । अनङीति किम्? अगमत् । अघसत् ।

अचीत्येव – गम्यते, हन्यते ॥

### ३१००. तनिपत्योश्छन्दसि ॥ ९९ ॥ (३५४९)

तनि, पति–इत्येतयोश्छन्दसि विषये उपधाया लोपो भवति अजादौ क्ङिति प्रत्यये परतः । 'वितत्निरे कवयः' (ऋ. १.१६४.५) । 'शकुना इव पप्तिम (ऋ. १.१०४.२०) ।

छन्दसीति किम्? वितेनिरे । पेतिम ॥

### ३१०१. घसिभसोर्हलि च ॥ १०० ॥ (३५५०)

घसि, भस–इत्येतयोश्छन्दसि उपधाया लोपो भवति हलादावजादौ च क्ङिति प्रत्यये परतः । 'सग्धिश्च मे सपीतिश्च मे' (वा.सं. १८.९) । 'बब्धां ते हरी धानाः' (नि. ५.१२) ।

सग्धिरिति–अदेः क्तिनि 'बहुलं छन्दसि' (२.४.३९) इति घस्लादेशे उपधाया लोपे च कृते 'झलो झलि' (८.२.२६) इति सकारलोपः । धत्वं तकारस्य, जश्त्वं घकारस्य । ततः समाना ग्धिः – सग्धिरिति समासे कृते समानस्य सभावः ।

बब्धामिति – भसेर्लोटि तामि श्लौ द्विर्वचने कृते उपधलोपसलोपधत्वजश्त्वानि कर्त्तव्यानि । द्विर्वचनात्परत्वान्नित्यत्वाच्च उपधालोपः प्राप्नोति; छान्दसत्वात् स तथा न क्रियते ।

अजादौ–बप्सति । क्ङितीत्येव–'अंशून् बभस्ति' (काठ. सं. ३५.१४) ॥

## ३१०२. हुझल्भ्यो हेर्धिः ॥ १०१ ॥ (२४२५)

'हु' इत्येतस्मात् झलन्तेभ्यश्चोत्तरस्य हलादेर्हेः स्थाने धिरादेशो भवति । जुहुधि । झलन्तेभ्यः – भिन्धि । छिन्धि ।

हुझल्भ्य इति किम्? क्रीणीहि । प्रीणीहि ।

हेरिति किम्? जुहुताम् ।

हलीत्येव–रुदिहि । स्वपिहि ।

इह जुहुतात्, भिन्तात् त्वमिति परत्वात् तातङि कृते 'सकृद् गतौ विप्रतिषेधे यब्दाधितं तद्बधितमेव' (चा.प.६०) इति पुनर्धिभावो न भवति ।

भिन्धकि, छिन्धकीत्यत्र परत्वाद् धिभावे कृते पुनःप्रसङ्गविज्ञानादकच् क्रियते॥

## ३१०३. श्रुशृणुपॄकृवृभ्यश्छन्दसि ॥ १०२ ॥ (३५५१)

श्रु, शृणु, पॄ, कृ, वृ–इत्येतेभ्य उत्तरस्य हेर्धिरादेशो भवति छन्दसि विषये। 'श्रधी हवमिन्द्र' (ऋ. २.११.३) । 'शृणुधी गिरः (ऋ. ८.१३.७) । पूर्द्धि (ऋ. ८.७८.१०) उरुणस्कृधि (ऋ. ८.५७.११) । अपावृधि (ऋ. १.७.६) ।

शृणुधीत्यत्र धिभावविधानसामर्थ्याद् 'उतश्च प्रत्ययात्' (६.४.१०४) इति हेर्लुग्न भवति । 'अन्येषामपि दृश्यते' (६.३.१३७) इति दीर्घत्वम् । अतोऽन्यत्र 'व्यत्ययो बहुलम्' (३.१.८५) इति शप्, तस्य 'बहुलं छन्दसि' (२.४.७३) इति लुक् ॥

## ३१०४. अङितश्च ॥ १०३ ॥ (३५५३)

अङितश्च हेर्धिरादेशो भवति । 'वा छन्दसि' (३.४.८८) इति पित्त्वेनास्याङित्त्वम्.। 'सोमं रारन्धि' (ऋ.१.९१.१३) । 'अस्मभ्यं तद्धर्यश्व प्रयन्धि' (ऋ. ३.३६.९) । 'युयोध्यस्मज्जुहुराणमेनः' (ऋ. १.१८९.२०)

अङित इति किम्? 'हव्यं प्रीणीहि' (काठ. सं. ४०.९४)।

रारन्धीति–रमेर्व्यत्ययेन परस्मैपदम्, शपः श्लुः, अभ्यासदीर्घत्वं छान्दसत्वात्। मलेपाभावास्तु अङित्त्वादेव। प्रयन्धीति–यमेः शपो लुक्। युयोधीति–यौतेः शपः श्लुः॥

## ३१०५. चिणो लुक्॥ १०५॥ (२३२९)

चिण उत्तरस्य प्रत्ययस्य लुग्भवति। अकारि। अहारि। अलावि। अपाचि।

अकारितराम्, अहारितमामित्यत्र तलोपस्यासिद्धत्वात् तरप्तमपोर्न लुग्भवति; 'चिणो लुक्' इत्येतद्विषयभेदाद्भिद्यते॥

## ३१०६. अतो हेः॥ १०५॥ (२२००)

अकारान्तादङ्गादुत्तरस्य हेर्लुग्भवति। पच। पठ। गच्छ। धाव।

अत इति किम्? युहि। रुहि। तपरकरणं किम्? लुनीहि। पुनीहि। ईत्वस्यासिद्धत्वादाकार एव भवति॥

## ३१०७. उतश्च प्रत्ययादसंयोगपूर्वात्॥ १०६॥ (२३३४)

उकारो योऽसंयोगपूर्वस्तदन्तात्प्रत्ययादुत्तरस्य हेर्लुग्भवति। चिनु। सुनु। कुरु।

उत इति किम्? लुनीहि। पुनीहि। प्रत्ययादिति किम्? रुहि। युहि। असंयोगपूर्वादिति किम्? प्राप्नुहि। राध्नुहि। तक्ष्णुहि॥

उतश्च प्रत्ययाच्छन्दोवावचनम् (म. भ.)। 'उतश्च प्रत्ययात्' इत्यत्र 'छन्दसि वा' इति वक्तव्यम्। आतनुहि यातुधानान्। 'धिनुहि यज्ञपतिम्' (काठ सं. १.६)। तेन मा भगिनं कृणुहि (अ. वे. १२९.१)

## ३१०८. लोपश्चास्यान्यतरस्यां म्वोः॥ १०७॥ (२३३३)

योऽयमुकारोऽसंयोगपूर्वः तदन्तस्य प्रत्ययस्यान्यतरस्यां लोपो भवति वकारमकारादौ प्रत्यये परतः। सुन्वः, सुनुवः। सुन्मः, सुनुमः। तन्वः, तनुवः। तन्मः, तनुमः।

प्रत्ययस्येत्येव–युवः, युमः । असंयोगपूर्वस्येत्येव–शक्नुवः, शक्नुमः । लुगिति वर्त्तमाने, लोपग्रहणमन्त्यलोपार्थम् ॥

### ३१०९. नित्यं करोतेः ॥ १०८ ॥ (२५४८)

करोतेरुत्तरस्य उकारप्रत्ययस्य वकारमकारादौ प्रत्यये परतो नित्यं लोपो भवति । कुर्वः, कुर्मः । उकारलोपस्य दीर्घविधावस्थानिवद्भावाद् 'हलि च' (८.२.७७) इति दीर्घत्वं प्राप्तम्, 'न भकुर्छुराम्' (८.२.७९) इति प्रतिषिध्यते ॥

### ३११०. ये च ॥ १०९ ॥ (२५४९)

यकरादौ च प्रत्यये परतः करोतेरुत्तरस्योकारप्रत्ययस्य नित्यं लोपो भवति । कुर्यात्, कुर्याताम्, कुर्युः ॥

### ३१११. अत उत्सार्वधातुके ॥ ११० ॥ (२४६७)

उकारप्रत्ययान्तस्य करोतेरकारस्य स्थाने उकार आदेशो भवति सार्वधातुके क्ङिति परतः । कुरुतः । कुर्वन्ति ।

सार्वधातुकग्रहणं किम्? भूतपूर्वेऽपि सार्वधातुके यथा स्यात् – कुरु ।

तपरकरणं लघूपधस्य गुणनिवृत्त्यर्थम् ।

क्ङितीत्येव–करोति । करोषि । करोमि ॥

### ३११२. श्नसोरल्लोपः ॥ १११ ॥ (२४६९)

श्नस्यास्तेश्चाकरस्य लोपो भवति, सार्वधातुके क्ङिति परतः । रुन्धः, रुन्धन्ति [रुन्द्धः, रुन्द्धन्ति] । भिन्तः, भिन्दन्ति । अस्तेः–स्तः, सन्ति ।

क्ङितीत्येव – भिनत्ति । अस्ति ।

'श्नसोः' इत्याकारस्य पररूपत्वं शकन्ध्वादिषु द्रष्टव्यम् ॥

### ३११३. श्नाभ्यस्तयोरातः ॥ ११२ ॥ (२४८३)

'श्ना' इत्येतस्याभ्यस्तानां चाङ्गानामाकारस्य लोपो भवति सार्वधातुके क्ङिति परतः । लुनते । लुनताम् । अलुनत । अभ्यस्तानाम् –मिमते । मिमताम् । अमिमत.। सञ्जिहते । सञ्जिहताम् । समजिहत ।

श्नाभ्यस्तयोरिति किम्? यान्ति । वान्ति । आत इति किम्? बिभ्रति । क्ङितीत्येव–अलुनात् । अजहात् । आद्ग्रहणं स्पष्टार्थम् ॥

## ३११४. ई हल्यघोः ॥ ११३ ॥ (२४९७)

श्नान्तानामङ्गानामभ्यस्तानां च घुवर्जितानामात ईकारादेशो भवति हलादौ सार्वधातुके क्ङिति परतः । लुनीतः, पुनीतः । लुनीथः, पुनीथः । लुनीते, पुनीते। अभ्यस्तानाम्– मिमीषे । मिमीध्वे । सञ्जिहीते । सञ्जिहीषे । सञ्जिहीध्वे ।

हलीति किम्? लुनन्ति । मिमते । अघोरिति किम्? दत्तः । धत्तः ।

क्ङितीत्येव–लुनाति । जहाति ॥

## ३११५. इद्दरिद्रस्य ॥ ११४ ॥ (२४८२)

दरिद्रातेर्हलादौ सार्वधातुके क्ङिति परत इकारादेशो भवति । दरिद्रितः । दरिद्रिथः । दरिद्रिवः । दरिद्रिमः ।

हलीत्येव–दरिद्रति । क्ङितीत्येव – दरिद्राति ।

दरिद्रातेरार्धधातुके लोपो वक्तव्यः (का.वा. १) ।

सिद्धश्च प्रत्ययविधौ भवतीति वक्तव्यम् (का.वा.२) । दरिद्रातीति दरिद्रः । आकारान्तलक्षणो णप्रत्ययो न भवति, पचादित्वादजेव भवति ।

न दरिद्रायके लोपो दरिद्राणे च नेष्यते ।

दिदरिद्रासतीत्येके दिदरिद्रषतीति वा ॥ (म. भा.)

अद्यतन्यां वेति वक्तव्यम् (का.वा.३) । अदरिद्रीत्, अदरिद्रासीत् । 'दरिद्रस्य' इति निर्देशे छान्दसं ह्रस्वत्वं द्रष्टव्यम् ॥

## ३११६. भियोऽन्यतरस्याम् ॥ ११५ ॥ (२४९२)

'भी' इत्येतस्याङ्गस्यान्यतरस्यामिकारादेशो भवति हलादौ क्ङिति सार्वधातुके परतः । बिभितः, बिभीतः । बिभिथः, बिभीथः । बिभिवः, बिभीवः । बिभिमः, बिभीमः ।

हलादावित्येव–बिभ्यति । क्ङितीत्येव–बिभेति । सार्वधातुक इयेव–भीयते॥

## ३११७. जहातेश्च ॥ ११६ ॥ (२४९८)

जहातेश्च इकारादेशो भवति अन्यतरस्यां हलादौ क्ङिति सार्वधातुके परतः। जहितः, जहीतः । जहिथः, जहीथः ।

हलादावित्येव–जहति । क्ङितीत्येव –जहाति । सार्वधातुक इत्येव – हीयते। जेहीयते ।

पृथग्योगकरणमुत्तरार्थम् ॥

## ३११८. आ च हौ ॥ ११७ ॥ (३४९९)

जहातेराकारश्चान्तादेशो भवति इकारश्चान्यतरस्यां हौ परतः । जहाहि, जहिहि, जहीहि ॥

## ३११९. घ्वसोरेद्धावभ्यासलोपश्च ॥ ११९ ॥ (२४७१)

घुसंज्ञकानामङ्गानामस्तेश्च एकारादेशो भवति हौ परतोऽभ्यासलोपश्च । देहि। धेहि । अस्तेः–

'श्नसोरल्लोपः' (६.४.१११) इत्यकारलोपः, एधि । शिदयं लोपः, तेन सर्वस्याभ्यासस्य भवति ॥

## ३१२१. अत एकहल्मध्येऽनादेशादेर्लिटि ॥ १२० ॥ (२२६०)

लिटि परत आदेश आदिर्यस्याङ्गस्य नास्ति तस्य एकहल्मध्ये असहाययोर्हलोर्मध्ये योऽकारस्तस्य एकारादेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतः । रेणतुः, रेणुः । येमतुः, येमुः । पेचतुः, पेचुः । देमतुः, देमुः ।

अत इति किम्? दिदिवतुः । दिदिवुः । तपरकरणं किम्? ररासे, ररासाते, ररासिरे । एकहल्मध्य इति किम्? [ररक्षतुः, ररक्षुः] । तत्सरतुः, तत्सरुः । अनादेशादेरिति किम्? चकणतुः, चकणुः । जगणतुः, जगणुः । बभणतुः, बभणुः।

लिट आदेश–विशेषणं किम्? इहापि यथा स्यात् – नेमतुः, नेमुः । सेहे, सेहाते, सेहिते । अनैमित्तिके नत्वसत्वे, तदादिर्लिव्यादेशादिर्न भवति ।

इहाभ्यासजश्त्वचर्त्वयोरसिद्धत्वं नास्ति, तेन तदादिरप्यादेशादिर्भवति । तथा च फलिभजोरेत्वं विधीयते । रूपाभेदे चादेशादिर्नाश्रीयत इति शसिदद्योः प्रतिषेधवचनं

ज्ञापकम्, अन्यथा हि पेचतुः, पेचुः, देमतुः देमुरित्येवमादीनामपि प्रकृतिजश्वरादीनामेत्वं न स्यत् ।

क्ङितीत्येव – अहं पपच । अहं पपठ ।

दम्भेरेत्वं वक्तव्यम् (का.वा.५) । देभतुः । देभुः । नलोपस्यासिद्धत्वान्न प्राप्नोति ।

नशिमन्योरलिट्येत्वं वक्तव्यम् (का.वा.) । अनेशम् । मेनका । अनेशमिति नशेर्लुङि पुषादित्वादङ् । मेनकेति मनेः 'आशिषि च' इति वुन् । क्षिपकादिषु प्रक्षेपादित्वं न क्रियते ।

छन्दस्यमिपचोरप्यलिटि एत्वं वक्तव्यम् (म. भा.) । व्येमानम् । अमेर्विपूर्वस्य चानशि मुक् न क्रियते । लिङि – पेचिरन् । पेचिरन्नित्येतस्य छान्दसं ह्रस्वत्वम्।

यजिवप्योश्च (म. भा.) आयेजे । आवेपे । यजेर्वपेश्च लिङि इटि 'छन्दस्यपि दृश्यते' (६.४.७३) इत्यनजादेरप्याडागमः ॥

## ३१२२. थलि च सेटि ॥ १२१ ॥ (२२६१)

थलि च सेटि परतोऽनादेशादेरङ्गस्य एकहल्मध्यगतस्यातः स्थाने एकार आदेशो भवति अभ्यासलोपश्च । मेचिथ । शेकिथ ।

सेटिति किम्? पपक्थ ।

थल्ग्रहणां विस्पष्टार्थम् । अक्ङिदर्थमेतद्वचनमित्यन्यस्येटोऽसम्भवात् ।

अत इत्येव–दिदेविथ । 'एकहल्मध्यगतस्य' इत्येव–ततक्षिथ । ररक्षिथ । अनादेशादेरित्येव–चकणिथ । बभणिथ ॥

## ३१२३. तॄफलभजत्रपश्च ॥ १२२ ॥ (२३०१)

तॄ, फल, भज, त्रप–इत्येतेषामङ्गानामत एकारादेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतस्थलि च सेटि । तेरतुः, तेरुः, तेरिथ । फेलतुः, फेलुः, फेलिथ। भेजतुः, भेजिथ । त्रेपे, त्रेपाते, त्रेपिरे ।

तरतेर्गुणार्थं वचनम् । फलिभजोरादेशाद्यर्थम् । त्रपेरनेकहल्मध्यार्थम् ।

श्रन्थेश्चेति वक्तव्यम् । श्रेथतुः, श्रेथुः ॥

## ३१२४. राधो हिंसायाम् ॥ १२३ ॥ (२५३२)

राधो हिंसायामर्थेऽवर्णस्य एकार आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतस्थलि च सेटि । अपरेधतुः, अपरेधुः, अपरेधिथ ।

हिंसायामिति किम्? रराधतुः, रराधुः, रराधिथ ।

अत–इत्येतदिहोपस्थितं तपरत्वकृतमपास्य कालविशेषमसम्भवादवर्णमात्रं प्रतिपादयति ।

अथ वा–'श्नाभ्यस्तयोरातः' (६.४.१२) – 'इत्यनुवर्त्तते' इति व्याख्येयम् ।

एकहल्मध्ये वा यः स स्थानी भविष्यति ॥

## ३१२५. वा जृभ्रमुत्रसाम् ॥ १२४ ॥ (२३५६)

जॄ, भ्रमु, त्रस–इत्येतेषामङ्गानामतः स्थाने वा एकार आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतस्थलि च सेटि । जेरतुः, जेरुः, जेरिथ । जजरतुः, जजरुः, जजरिथ । भ्रेमतुः, भ्रेमुः, भ्रेमिथ । बभ्रमतुः, बभ्रमुः, बभ्रमिथ। त्रेसतुः, त्रेसुः, त्रेसिथ । तत्रसतुः, तत्रसुः, तत्रसिथ ॥

## ३१२६. फणां च सप्तानाम् ॥ १२५ ॥ (२३५४)

फणादीनां सप्तानां धातूनामवर्णस्य स्थाने वा एकार आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतः, थलि च सेटि ।

(१) फेणतुः, फेणुः, फेणिथ । पफणतुः, पफणुः, पफणिथ ।

(२) रेजतुः, रेजुः, रेजिथ । रराजतुः, रराजुः, रराजिथ ।

(३) भ्रेजे, भ्रेजाते, भ्रेजिरे । बभ्राजे, बभ्राजाते, बभ्राजिरे ।

(४) भ्रेशे, भ्रेशाते, भ्रेशिरे । बभ्राशे, बभ्राशाते, बभ्राशिरे ।

(५) भ्लेशे, भ्लेशाते, भ्लेशिरे । बभ्लाशे, बभ्लाशाते, बभ्लाशिरे ।

(६) स्येमतुः, स्येमुः, स्येमिथ । सस्यमतुः, सस्यमुः, सस्यमिथ ।

(७) स्वेनतुः, स्वेनुः, स्वेनिथ । सस्वनतुः, सस्वनुः, सस्वनिथ ।

सप्तानामिति किम्? दध्वनतुः, दध्वनुः, दध्वनिथ ॥

## ३१२७. न शसददवादिगुणानाम् ॥ १२६ ॥ (२२६३)

शस, दद–इत्येतयोर्वकारादीनां च धातूनां गुण इत्येवमभिनिर्वृत्तस्य च योऽकारस्तस्य स्थाने एकारादेशो न भवति, अभ्यासलोपश्च । विशशसतुः, विशशसुः, विशशसिथ ।ददे, ददाते, ददिरे ।

वादीनाम्–ववमतुः ववमुः, ववमिथ । गुणस्य–विशशरतुः, विशशरुः, विशशरिथ । लुलविथ, पुपविथ ।

गुणशब्दाभिनिर्वृत्तस्यार्शब्दस्यौकारस्य चायमकार इति एत्वं प्रतिषिध्यते ॥

## ३१२८. अर्वणस्त्रसावनञः ॥ १२७ ॥ (३६४)

अर्वन्नित्येतस्याङ्गस्य 'तृ' इत्येयमादेशो भवति, सुश्चेत्ततः परो न भवति, स च नञ उत्तरो न भवति । अर्वन्तौ, अर्वन्तः । अर्वन्तम्, अर्वन्तौ, अर्वतः । अर्वता, अर्वद्भ्याम्, अर्वद्भिः । अर्वती । आर्वतम् ।

असाविति किम्? अर्वा । अनञ इति किम्? अनर्वाणौ, अनर्वाणः । 'अनर्वाणं वृषभं मन्द्रजिह्वम्' (ऋ. १.१९०.१) ॥

## ३१२९. मघवा बहुलम् ॥ १२८ ॥ (३६०)

'मघवन्' इत्येतस्याङ्गस्य बहुलम् 'तृ' इत्ययमादेशो भवति । मघवान्, मघवन्तौ, मघवन्तः । मघवन्तम्, मघवन्तौ, मघवतः । मघवता । मघवती । माघवताम्।

न च भवति मघवा, मघवानौ, मघवानः । मघवानम्, मघवानौ, मघोनः । मघोना, मघवभ्याम्, मघवभिः । 'मघोनी' । (ऋ. १.४७.७) माघवानम् ॥

## ३१३१. पादः पत् ॥ १३० ॥ (१४४)

'पादः' इति पादशब्दो लुप्ताकारो गृह्यते, तदन्तस्यङ्गस्य भस्य 'पत्' इत्ययमादेशो भवति । स च 'निर्दिश्यमानस्यादेशा भवन्ति' (व्या. प. १०६) इति पाच्छब्दस्यैव भवति, न तदन्तस्य सर्वस्य । द्विपदः पश्य । द्विपदा । द्विपदे । द्विपदिकां ददारि । त्रिपदिकां ददाति । वैयाघ्रपद्यः ॥

## ३१३२. वसोः सम्प्रसारणम् ॥ १३१ ॥ (४३५)

वस्वन्तस्य भस्य सम्प्रसारणं भवति । विदुषः पश्य । विदुषा । विदुषे ।

पेचुषः पश्य । पेचुषा । पेचुषे । पपुषः पश्य ।

आकारलोपे कर्त्तव्ये वसुसम्प्रसारणस्य व्याश्रयत्वादसिद्धत्वं न भवति । वसुग्रहणे क्वसोरपि ग्रहणमिष्यते ।

## ३१३३. वाह ऊठ् ॥ १३२ ॥ (३२९)

'वाहः' इत्येवमन्तस्य भस्य ऊठ् इत्येतत्सम्प्रसारणं भवति । प्रष्ठौहः । प्रष्ठौहा । प्रष्ठौहे । दित्यौहः । दित्यौहा । दित्यौहे । 'एत्येधत्यूठसु' (६.१.८९) इति वृद्धिः ।

अथ किमर्थमूठ् क्रियते, सम्प्रसारण एव कृते गुणे च 'वृद्धिरेचि' (६.१८८) इति वृद्धौ सत्यां सिद्धं रूपं भवति–प्रष्ठौह इति, अनकारान्ते चोपपदे वहेण्विर्न दृश्यते? ज्ञापनार्थम् । एतज्ज्ञापयति–भवत्येषा परिभाषा 'असिद्धं बहिरङ्गमन्तरङ्गे' (व्या.प. ४२) इति । तस्यां हि सत्यां बहिरङ्गस्य सम्प्रसारणस्यासिद्धत्वाद् अन्तरङ्गो गुणो न स्यात् ॥

## ३१३४. श्वयुवमघोनामतद्धिते ॥ १३३ ॥ (३६२)

श्वन्, युवन्, मघवन्–इत्येतेषामङ्गानामतद्धिते प्रत्यये परतः सम्प्रसारणं भवति.। शुनः, शुना, शुने । यूनः, यूना, यूने । मघोनः, मघोना, मघोने ।

अतद्धित इति किम्? शौवं मांसम् । यौवनं वर्त्तते । माघवनः । स्थालीपाकः। शुनो विकारे 'प्राणिरजतादिभ्योऽञ्' (४.३.१५४), द्वारादित्वादैजागमः ।

श्वादीनामेतत्सम्प्रसारणं नकारान्तानामिष्यते (म. भा.) । इह न भवति– युवतीः पश्य । मघवतः, मघवता, मघवते । तदर्थमुत्तरत्र योगविभागं कुर्वन्ति – 'अल्लोपः' , 'अनः' ; अन इत्युभयोः शेष इति ॥

## ३१३५. अल्लोपोऽनः ॥ १३४ ॥ (२३४)

'अन्' इत्येवमन्तस्य भस्य अकारलोपो भवति । राज्ञः पश्य । राज्ञा । राज्ञे। तक्ष्णः पश्य । तक्ष्णा । तक्ष्णे ।

अनो नकारान्तस्यायं लोप इष्यते । इह न भवति – राजकीयमिति ॥

### ३१३६. षपूर्वहन्धृतराज्ञामणि ॥ १३५ ॥ (११६०)

षकारपूर्वो योऽन् हनो धृतराज्ञश्च तस्याकारलोपो भवति अणि परतः । औक्ष्णः । ताक्ष्णः । भ्रौणघ्नः । धार्त्तराज्ञः ।

षपूर्वहन्धृतराज्ञामिति किम्? सामनः । वैमनः । 'अन् इति प्रकृतिभावेनाल्लोपटिलोपावुभावपि न भवतः । अणीति किम्? ताक्षण्यः ॥

### ३१३७. विभाषा ङिश्योः ॥ १३६ ॥ (२३७)

ङौ परतः शीशब्दे च अनो विभाषा अकारलोपो भवति । राज्ञि, राजनि । साम्नि, सामनि । साम्नी, सामनी ॥

### ३१३८. न संयोगाद्वमन्तात् ॥ १३७ ॥ (३५५)

वकारमकारान्तात्संयोगादुत्तरस्यानोऽकारस्य लोपो न भवति । पर्वणा, पर्वणे। अथर्वणा, अथर्वणे ।

संयोगादिति किम्? प्रतिदीव्ना । प्रतिदीव्ने । साम्ना, साम्ने । वमन्तादिति किम्? तक्ष्णा । तक्ष्णे ॥

### ३१३९. अचः ॥ १३८ ॥ (४१६)

'अचः' इत्ययमञ्चतिर्लुप्तनकारो गृह्यते, तदन्तस्य भस्य अकारस्य लोपो भवति । दधीचः पश्य । दधीचा, दधीचे । मधूचः पश्य । मधूचा, मधूचे ॥

### ३१४०. उद ईत् ॥ १३९ ॥ (४२०)

उद उत्तरस्याच ईकारादेशो भवति । उदीचः । उदीचा । उदीचे ॥

### ३१४१. आतो धातोः ॥ १४० ॥ (२४०)

आकारान्तस्य धातोर्भस्य लोपो भवति । कीलालपः पश्य । कीलालपा, कीलालपे । शुभंयः पश्य । शुभंया, शुभंये ।

आत इति किम्? निया, निये । धातोरिति किम्? खट्वाः पश्य । मालाः पश्य ।

'आतः' इति योगविभागः तेन 'क्त्वो ल्यप्' ,(७.१.३७) 'हलः श्नः शानच्' (३.१.८३) – इत्येवमादि सिद्धं भवति ॥

### ३१४२. मन्त्रेष्वाङ्यादेरात्मनः ॥ १४१ ॥ (३५५४)

मन्त्रेषु आङि परत आत्मन आदेर्लोपो भवति । त्मना देवेभ्यः । त्मना सोमेषु.।

मन्त्रेष्विति किम्? आत्मना कृतम् । आङीति किम्? यदात्मनस्तन्नो वरिष्ठा।

आङोऽन्यत्रापि दृश्यते । 'त्मन्यासमञ्चन् मह्यम् (ऋ. १०.११०.१०) ॥

### ३१४३. ति विंशतेर्डिति ॥ १४२ ॥ (८४४)

भस्य विंशतेस्तिशब्दस्य डिति प्रत्यये परतो लोपो भवति । विंशत्या क्रीतः विंशकः । विंशं शतम् । विंशतेः पूरणो विंशः । एकविंशः ॥

डितीति किम्? विंशत्या ॥

### ३१४४. टेः ॥ १४३ ॥ (३१६)

टिसंज्ञकस्य डिति प्रत्यये परतो लोपो भवति । कुमुद्वान् । नड्वान् । वेतस्वान् । उपसरजः । मन्दुरजः । त्रिंशता क्रीतः त्रिंशकः । डित्यभस्याप्यनुबन्धकरण-सामर्थ्यात् टिलोपो भवति ॥

### ३१४५. नस्तद्धिते ॥ १४४ ॥ (६७९)

नकारान्तस्य भस्य टेर्लोपो भवति तद्धिते परतः । आग्निशर्मिः । औडुलोमिः। बाह्वादित्वादिञ्प्रत्ययः ।

न इति किम्? सात्वतः । तद्धित इति किम्? शर्मणा । शर्मणे ।

नान्तस्य टिलोपे सब्रह्मचारिपीठसर्प्पिकलापिकुथुमितैतिलिजाजलिलाङ्गलि-शिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानं कर्तव्यम् (का.वा.१) । अत्र ये इन्नन्तास्तेषाम् 'इनण्यनपत्ये' (६.४.१६४) इति प्रकृतिभावः प्राप्तः, ये त्वन्नन्तास्तेषाम् 'अन्' (६.४.१६७) इति । सब्रह्मचारिण इमे साब्रह्मचाराः । पीठसर्पिणः- पैठसर्पाः। कलापिना प्रोक्तमधीयते कालापाः । कुथुमिनः - कौथुमाः । तैतिलिजाजलिनावाचार्यौ, तत्कृतो ग्रन्थ उपचारात् तैतिलिजाजलिशब्दाभ्यामभिधीयते, तं ग्रन्थमधीयते तैतिलाः,

जाजलाः । शैषिकेष्वर्थेषु वृद्धत्वादत्र छः प्राप्नोति । एवं लाङ्गलाः शैलालाः । शिखण्डिनः – शैखण्डाः । सूकरसद्मनः – सौकरसद्माः । सुपर्वणः – सौपर्वाः।

अश्मनो विकार उपसंख्यानम् (म. भा.) । अश्मनो विकारः आश्मः । आश्मनोऽन्यः ।

चर्मणः कोश उपसंख्यानम् (म. भा.) । चार्मः कोशः । चार्मणोऽन्यः ।

शुनः सङ्कोच उपसंख्यानम् (म. भा.) । शौवः सङ्कोचः । शौवनोन्यः ।

अव्ययानां च सायम्प्रातिकाद्यर्थमुपसंख्यानम् (म. भा.) । के पुनः सायम्प्रातिकादयः ? येषामव्ययानामविहितष्टिलोपः, प्रयोगे च दृश्यते, ते सायम्प्रातिकप्रकारा ग्रहीतव्याः । सायम्प्रातर्भवः सायम्प्रातिकः । पौनःपुनिकः । बाह्यः । कौतस्कुतः । 'कालाट्ठञ्' (४.३.११) इति ठञ्प्रत्ययः ।

व्युव्युलौ तु नेष्येते । आरातीयः, शाश्वतिकः, शाश्वतः – इत्येवमादिषु न दृश्यते टिलोपः ॥

## ३१४६. अह्नष्टखोरेव ॥ १४५ ॥ (७८९)

'अहन्' इत्येतस्य टखोरेव परतष्टिलोपो भवति । द्वे अहनी समाहृते द्व्यहः। त्र्यहः । द्वे अहनी अधीष्टो भृतो भावी वा द्व्यहीनः । त्र्यहीनः । अह्नां समूहः क्रतुः अहीनः ।

अह्नः समूहे खो वक्तव्यः । सिद्धे सत्यारम्भो नियमार्थः । इह मा भत्– अह्ना निर्वृत्त माह्निकम् ।

एवकारकरणं विस्पष्टार्थम् । अह्न एव टखोः – इत्येवं नियमो न भविष्यति; 'आत्माध्वानौ खे' (६.४.१६९) इति प्रकृतिभावविधानात् ॥

## ३१४७. ओर्गुणः ॥ १४६ ॥ (८४७)

उवर्णान्तस्य भस्य गुणो भवति तद्धिते परतः । बाभ्रव्यः । माण्डव्यः । शङ्कव्यं दारु । पिचव्यः कार्पासः । कमण्डलव्या मृत्तिका । परशव्यमयः । औपगवः। कापटवः ।

'ओरोत्' इति वक्तव्ये गुणग्रहणं 'संज्ञापूर्वको विधिरनित्यो' (व्या.प.६४) यथा स्यात्, तेन स्वायम्भुव इति सिद्धं भवति ॥

## ३१४८. ढे लोपोऽकद्रवाः ॥ १४७ ॥ (११४२)

ढे परत उवर्णान्तस्य भस्याकद्रूवा लोपो भवति । कामण्डलेयः । शैतबाहेयः। जाम्बेयः । माद्रबाहेयः ।

अकद्रूवा इति किम्? काद्रवेयो मन्त्रमपश्यत् ॥

## ३१४९. यस्येति च ॥ १४८ ॥ (३११)

इवर्णान्तस्यावर्णान्तस्य च भस्य ईकारे परे तद्धिते च लोपो भवति । इवर्णान्तस्य ईकारे–दक्षी । प्लाक्षी । सखी ।

सवर्णदीर्घत्वे हि सत्यतिसखेरागच्छतीत्यत्र एकादेशस्यान्तवत्त्वादसखीति (१.४.७) घिसंज्ञायाः प्रतिषेधः स्यात् ।

इवर्णान्तस्य तद्धिते–दुलि दौलेयः । वलि, वालेयः । अत्रि, आत्रेयः ।

अवर्णान्तस्य ईकारे–कुमारी । गौरी । शार्ङ्गरवी ।

अवर्णान्तस्य तद्धिते–दाक्षिः । प्लाक्षिः । चौडिः । बालाकिः । सौमित्रिः ।

यस्येत्यौङः श्यां प्रतिषेधो वक्तव्यः (का.वा.१) । काण्डे । कुड्ये । सौर्ये हिमवतः शृङ्गे । औङ शीभावे कृते 'यस्येति च' इति, 'सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः' (६.४.१५९) इति च लोपः प्राप्नोति ।

इयङुवङ्भ्यां लोपो भवति विप्ततिषेधेन (का.वा.२) वत्सान्प्रीणाति वत्सप्रीः, तस्याप्त्यं वात्सप्रेयः । चतुष्पाद्भ्यो ढञ् (४.१–१३५) इति ढञ् प्रत्ययः । लेखभ्रूः, शुभ्रादिः, तस्या अपत्यं लैखाभ्रेयः ॥

## ३१५०. सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ॥ १४९ ॥ (४९९)

सूर्य, तिष्य, अगस्त्य, मत्स्य–इत्येतेषां यकारस्य उपधाया भस्य लोपो भवति ईति परतस्तद्धिते च । सूर्येणैकदिक् सौरी बलाका । अणि यो यस्येति लोपस्तस्यासिद्धत्वं नास्ति; व्याश्रयत्वात् । ईकारे तु यस्तस्यासिद्धत्वाद् उपाधायकारो भस्याणन्तस्य सूर्यस्य सम्बन्धीति लुप्यते । तिष्य–तैषमहः । तैषी रात्रिः । अगस्त्यस्यापत्यं स्त्री, ऋषित्वादणि कृते–आगस्ती । आगस्तीयः । मत्स्य–गौरादित्वान् ङीष्, मत्सी ।

उपधाया इति किम्? मत्स्यचरी ।

यग्रहणमुत्तरार्थम् । विषयपरिगणनमत्र कर्त्तव्यम्–

मत्स्यस्य ङ्यामिति वक्तव्यम् (का.वा.५) । इह मा भूत्–मत्स्यस्येदं मांसं मात्स्यम् ।

सूर्यागस्त्ययोश्छे च ङ्यां च (का.वा.६) । सौरीयः । सौरी । आगस्तीयः । आगस्ती । इह मा भूत्–सौर्य चरुं निर्वपेत् । आगस्त्यः ।

तिष्यपुष्ययोर्नक्षत्राणि (का.वा.७) । तिष्येण नक्षत्रेण युक्तः कालः तैषः । पौषः ।

अन्तिकस्य तसि कादिलोप आद्युदात्तं च (का.वा.८) । अन्तिकशब्दस्य तसिप्रत्यये परतः ककारादेः शब्दस्य लोपो वक्तव्यः, आद्युदात्तं च । अन्तितो न दूराद् ।

तमे तादेश्च (म.भा.) । तमप्रत्यये अन्तिकशब्दस्य तकारादेः ककारादेश्च लोपो वक्तव्यः । तत्र तादिलोपे–अन्तमः । कादिलोपे–अन्तितमः ।

कादिलोपे बहुलमिति वक्तव्यम् (म. भा.) । अन्यत्रापि हि दृश्यते–अन्तिके सीदतीति अन्तिषत् । 'पूर्वपदात्' इति षत्वम् ।

ये च (म. भा.) । अन्तियः ॥

## ३१५१. हलस्तद्धितस्य ॥ १५० ॥ (४७२)

'तद्धिते' इति निवृत्तम् । हल उत्तरस्य तद्धितयकारस्य उपधाया ईति परतो लोपो भवति । गार्गी । वात्सी ।

हल इति किम्? कारिकेयी । तद्धितस्येति किम्? वैद्यस्य भार्या वद्यी ॥

## ३१५२. आपत्यस्य च तद्धितेऽनाति ॥ १५१ ॥ (१०८२)

अपत्ययकारस्य हल उत्तरस्य तद्धिते अनाकारादौ यलोपो भवति । गर्गाणां समूहो गार्गकम् । वात्सकम् ।

आपत्यस्येति किम्? साङ्काश्यकः । काम्पिल्यकः ।

तद्धितग्रहणमीत्यनापत्यस्यापि लोपार्थम् – सौमी इष्टीः ।

अनातीति किम्? गार्ग्यायणः । वात्स्यायनः ।

हल इत्येव – कारिकेयस्यापत्यं कारिकेयिः ॥

**३१५१. क्यच्व्योश्च ॥ १५२ ॥ (२११९)**

क्य, च्वि–इत्येतयोश्च परत आपत्ययकारस्य हल उत्तरस्य लोपो भवति । वात्सीयति । गार्गीयति । वात्सायते । गार्गायते । च्वौ–गार्गीभूतः । वात्सीभूतः ।

आपत्यस्येत्येव–साङ्काश्यायते । साङ्काश्यभूतः ।

हल् इत्येव – कारिकेयीयति । कारिकेयीभूतः ॥

**३१५४. बिल्वकादिभ्यश्छस्य लुक् ॥ १५३ ॥ (१३११)**

नडादिषु बिल्वादयः पठ्यन्ते । 'नडादीनां कुक्च' (४.२.९१) इति कृतकुगागमा बिल्वकादयो भवन्ति, तेभ्य उत्तरस्य छस्य भस्य तद्धिते परतो लुग् भवति । बिल्वा यस्यां सन्ति बिल्वकीया, तस्यां भवाः बैल्वकाः । वेणुकीयाः, वैणुकाः । वेत्रकीयाः, वैत्रकाः । वेतसकीयाः, वैतसकाः । तृणकीयाः, तार्णकाः । इक्षुकीयाः ऐक्षुकाः । काष्ठकीयाः, काष्ठकाः । कपोतकीयाः, कापोतकाः ।

क्रुञ्चाह्रस्वत्वं च (ग.सू. ९२) । क्रुञ्चकीयाः, क्रौञ्चकाः ।

छग्रहणं किम्? छमात्रस्य लुग्यथा स्याद् कुको निवृत्तिर्मा भूदिति; अन्यथा हि 'सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यभाव' (व्या.प. ४८) इति कुगपि निवर्त्तेत। लुग्ग्रहणं सर्वलोपो यथा स्याद्, यकारमात्रस्य मा भूत् ॥

**३१५५. तुरिष्ठेमेयस्सु ॥ १५४ ॥ (२००८)**

इष्ठन्, इमनिच्, ईयसुन्–इत्येतेषु परतः तृशब्दस्य लोपो भवति । आसुतिं करिष्ठः । विजयिष्ठः । वहिष्ठः । दोहीयसी धेनुः ।

सर्वस्य तृशब्दस्य लोपार्थं वचनम् । अन्त्यस्य हि 'टेः' (६.४.१५५) इत्येव सिद्धः ।

लुगित्येतदत्र नानुवर्त्तते; तथा हि सति 'न लुमताङ्गस्य' (१.१.६३) इति प्रतिषेधाद् गुणो न स्यात् ।

इमनिज्ग्रहणमुत्तरार्थम् । इतरौ तु 'तुश्छन्दसि' (५.३.५९) इति भवतः ॥

**३१५६. टेः ॥ १५५ ॥ (१८८६)**

भस्य टेर्लोपो भवति इष्ठेमेयस्सु परतः । पटु–पटिष्ठः, पटिमा, पटीयान् । लघु–लघिष्ठः, लघिमा, लघीयान् ।

णाविष्ठवत्प्रातिपदिकस्य कार्यं भवतीति वक्तव्यम् (का.वा.१) ।

किं प्रयोजनम्? पुंवद्भावरभावटिलोपयणादिपरार्थम् (म. भा.)। पुंवद्भावः – एनीमाचष्टे एतयति। श्येतयति। 'तसिलादिष्वाकृत्वसुचः' (६.३३५) इति इष्ठे पुंवद्भाव उक्तः। रभावः – पृथुमाचष्टे प्रथयति। भ्रदयति। टिलोपः–पटुमाचष्टे पटयति। लघयति। यणादिपरम् – स्थूलमाचष्टे स्थवयति।

भारद्वाजीयास्तु पठन्ति–'णाविष्ठवत्प्रातिपदिकस्य पुंवद्भावरभावटिलोपयणादिपरविन्मतोर्लुक्कनर्थम्' (म. भा.) इति। स्रग्विणमाचष्टे स्रजयति। वसुमन्तमाचष्टे वसयति। युवानमाचष्टे यवयति। कनयति। एतदुभयमप्युदाहरणमात्रम्, न परिगणनम्।

प्रादयोऽपि हीष्यन्ते–प्रियमाचष्टे प्रापयति॥

## ३१५७. स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः ॥ १५६ ॥ (२०१५)

स्थूल, दूर, युव, ह्रस्व, क्षिप्र, क्षुद्र–इत्येतेषां यणादिपरं लुप्यते इष्ठेमेयस्सु परतः, पूर्वस्य च गुणो भवति। स्थूल–स्थविष्ठः, स्थवीयान्। दूर–दविष्ठः, दवीयान्। युवन् – यविष्ठः, यवीयान्। ह्रस्व–ह्रसिष्ठः, ह्रसीयान्, ह्रसिमा। क्षिप्र–क्षेपिष्ठः, क्षेपीयान्, क्षेपिमा। क्षुद्र–क्षोदिष्ठः, क्षोदीयान्, क्षोदिमा। ह्रस्वक्षिप्रक्षुद्रशब्दाः पृथ्वादिषु पठ्यन्ते।

परग्रहणं किम्? यविष्ठः, यवीयान्; ह्रसिष्ठः, ह्रसीयान्–इत्यत्र पूर्वस्य यणादेर्लोपो मा भूत्।

पूर्वग्रहणं विस्पष्टार्थम्॥

## ३१५८. प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः ॥ १५७ ॥ (२०१६)

प्रिय, स्थिर, स्फिर, उरु, बहुल, गुरु, वृद्ध, तृप्र, दीर्घ, वृन्दारक–इत्येतेषां प्र, स्थ, स्फ, वर्,बंहि, गर्, वर्षि, त्रप्, द्राघि, वृन्द–इत्येते यथासंख्यमादेशा भवन्ति इष्ठेमेयस्सु परतः। प्रिय–प्रेष्ठः। प्रेमा। प्रेयान्। स्थिर–स्थेष्ठः। स्थेयान्। स्फिर–स्फेष्ठः। स्फेयान्। उरु–वरिष्ठः। वरिमा। वरीयान्। बहुल–बंहिष्ठः। बंहिमा। बंहीयान्। गुरु–गरिष्ठः। गरिमा। गरीयान्। वृद्ध–वर्षिष्ठः। वर्षीयान्। तृप्र–त्रपिष्ठः त्रपीयान्। दीर्घ–द्राघिष्ठः। द्राघीयान्। द्राघिमा। वृन्दारक –

वृन्दिष्ठः। वृन्दीयान् ।

प्रियोरुगुरुबहुलदीर्घाः पृथ्वादिषु पठ्यन्ते, तेनान्येषमिमनिज् न भवतीति नोदाह्रियते.॥

### ३१५९. बहोर्लोपो भू च बहोः ॥ १५८ ॥ (२०१७)

बहोरुत्तरेषामिष्ठेमेयसां लोपो भवति, तस्य च बहोः स्थाने 'भू' इत्ययमादेशो भवति । भूयान् । भूमा ।

बहुशब्दः पृथ्वादिषु पठ्यते । 'बहोः' इति पुनर्ग्रहणं स्थानित्वप्रतिपत्त्यर्थम्; अन्यथा हि प्रत्ययानामेव भूभावः स्यात् ॥

### ३१६०. इष्ठस्य यिट् च ॥ १५९ ॥ (२०१८)

बहोरुत्तरस्य इष्ठस्य यिडागमो भवति बहोश्च भूरादेशो भवति । भूयिष्ठः ।

लोपापवादो यिडागम; तस्मिन्निकार उच्चारणार्थः ॥

### ३१६१. ज्यादादीयसः ॥ १६० ॥ (२०१२)

ज्यादुत्तरस्य ईयस आकार आदेशो भवति । ज्यायान् ।

लोपस्य यिटा व्यवहितत्वादादित्युच्यते । लोपे हि सति अकृद्यकार इति दीर्घत्वेन ज्यायानिति सिध्यति ॥

### ३१६२. र ऋतो हलादेर्लघोः ॥ १६१ ॥ (१७८५)

रशब्द आदेशो भवति ऋकारस्य हलादेर्लघोरिष्ठेमेयस्सु परतः । प्रथिष्ठः, प्रथिमा, प्रथीयान् । म्रदिष्ठः,म्रदिमा, म्रदीयान् ।

ऋत इति किम्? पटिष्ठः, पटिमा, पटीयान् । हलादेरिति किम्? ऋजिष्ठः, ऋजिमा, ऋजीयान् ।

लघोरिति किम्? कृष्णिष्ठः, कृष्णीयान्, कृष्णिमा ।

परिगणनं कर्त्तव्यम् –

पृथुं मृदुं भृशं चैव कृशं च दृढमेव च ।
परिपूर्वं वृढं चैव षडेतान् रविधौ स्मरेत् ॥

तत इह न भवति– कृतमाचष्टे कृतयति, मातरमाचष्टे मातयति, भ्रातयति ॥

### ३१६३. विभाषर्जोश्छन्दसि ॥ १६२ ॥ (३५५५)

'ऋजु' इत्येतस्य ऋतः स्थाने विभाषा रेफ आदेशो भवति इष्ठेमेयस्सु परतश्छन्दसि विषये । रजिष्ठमेति पन्थानम् [रजिष्ठमनु नेषि पन्थाम् ऋ. १.९१.१]। त्वमृजिष्ठः ॥

### ३१६४. प्रकृत्यैकाच् ॥ १६३ ॥ (२०१०)

एकाज् यद्भसंज्ञकं तदिष्ठेमेयस्सु परतः प्रकृत्या भवति । स्रग्विन्नित्येतस्य विन्नन्तस्य – स्रजिष्ठः, स्रजीयान्, स्रजयति । स्रुग्वदित्येतस्य मत्वन्तस्य–स्रुचिष्ठः, स्रुचीयान्, स्रुचयति ।

एकाजिति किम्? वसुमदित्येतस्य वसिष्ठः । वसीयान् ।

प्रकृत्याऽके राजन्यमनुष्ययुवानः (म. भा.) । अके प्रत्यये परतो राजन्य, मनुष्य, युवन्–इत्येते प्रकृत्या भवन्ति । राजन्यानां समूहो राजन्यकम् । मनुष्याणां समूहो मानुष्यकम् । आपत्यस्य च तद्धितेऽनाति' (६.४.१५१) इति यलोपः प्रकृतिभावेन न भवति । यूनो भावः यौवनिका । मनोज्ञादित्वाद् वुञ्, तस्य 'नस्तद्धिते' (६.४.१४४) इति टिलोपो न भवति ॥

### ३१६५. इनण्यनपत्ये ॥ १६४ ॥ (१२४५)

इन्नन्तमनपत्यार्थेऽणि परतः प्रकृत्या भवति । सांकूटिनम् । सांराविणम् । सांमार्जिनम् । 'अभिविधौ भावे इनुण्' , (३.३.४४) 'अणिनुणः', (५.४.१५) इत्यण् । स्रग्विण इदं स्राग्विणम् ।

अणीति किम्? दण्डिनां समूहो दाण्डम् । 'अनुदात्तादेरञ्' (४.२.४४) इत्यञ्प्रत्ययः । अनपत्य इति किम्? मेधाविनोऽपत्यं मैधावः ॥

### ३१६६. गाथिविदथिकेशिगणिपणिनश्च ॥ १६५ ॥ (१२७५)

गाथिन्, विदथिन्, केशिन्, गणिन्, पनिन्–इत्येते चाणि प्रकृत्या भवन्ति । गाथिनोऽपत्यं गाथिनः । वैदथिनः । कैशिनः । गाणिनः । पाणिनः ।

अपत्यार्थोऽयमारम्भः ॥

### ३१६७. संयोगादिश्च ॥ १६६ ॥ (११५६)

संयोगादिश्च इननि प्रकृत्या भवति । शाङ्खिनोऽपत्यं शाङ्खिनः । माद्रिणः । वाज्रिणः ॥

### ३१६८. अन् ॥ १६७ ॥ (११५५)

अन्नन्तमणि प्रकृत्या भवति अपत्ये चानपत्ये च । सामनः । वैमनः । सौत्वनः ॥ जैत्वनः ॥

### ३१६९. ये चाभावकर्मणोः ॥ १६८ ॥ (११५४)

यकारादौ च तद्धितेऽभावकर्मणोरर्थयोरन् प्रकृत्या भवति । सामसु साधुः सामन्यः । वेमन्यः ।

अभावकर्मणोरिति किम्? राज्ञो भावः कर्म वा राज्यम् । 'राजन्' इति पुरोहितादिषु (५.१.१२८) पठ्यते, ततोऽयं यक् प्रत्ययः ॥

### ३१७०. आत्माध्वानौ खे ॥ १६९ ॥ (१६७०)

आत्मन्, अध्वन्–इत्येतौ खे परतः प्रकृत्या भवतः । आत्मने हित आत्मनीनः। अध्वानमलङ्गामी अध्वनीनः ।

ख इति किम्? प्रत्यात्मम् । प्राध्वम् । प्रत्यात्मम्–इत्यव्ययीभावे 'अनश्च' (५.४.१०८) इति समासान्तष्टच्प्रत्ययः । प्राध्वम्–इति 'उपसर्गादध्वनः' (५.४.८५) इति अच्प्रत्ययः ॥

### ३१७१. न मपूर्वोऽपत्येऽवर्मणः ॥ १७० ॥ (११५७)

मपूर्वोऽन् अवर्मणोऽणि परतोऽपत्येऽर्थे न प्रकृत्या भवति । सुषाम्णोऽपत्यं सौषामः । चान्द्रसामः ।

मपूर्व इति किम्? सौत्वनः । अपत्य इति किम्? चर्मणा परिवृतो रथः चार्मणः । अवर्मण इति किम्? चक्रवर्मणोऽपत्यं चाक्रवर्मणः ।

मपूर्वप्रतिषेधे वा हितनाम्न इति वक्तव्यम् (म.भा.) हितनाम्नोऽपत्यं हैतनामः, हैतनामनः ॥

### ३१७२. ब्राह्मोऽजातौ ॥ १७१ ॥ (११५८)

योगविभागोऽत्र क्रियते 'ब्राह्मः' इत्येतदपत्याधिकारेऽपि सामर्थ्यादपत्यादन्यत्राणि टेर्लोपार्थं निपात्यते । ब्राह्मो गर्भः । ब्राह्ममस्त्रम् । ब्राह्मं हविः । ततः 'जातौ' , अपत्य इत्येव–अपत्ये जातावणि ब्रह्मणष्टिलोपो न भवति । ब्रह्मणोऽपत्यं ब्राह्मणः।

अपत्य इत्येव – ब्राह्मी ओषधिः ॥

### ३१७३. कार्मस्ताच्छील्ये ॥ १७२ ॥ (१६१३)

'कार्मः' इति ताच्छील्ये टिलोपो निपात्यते । कर्मशीलः कार्मः । 'शीलम्' 'छत्रादिभ्यो णः' (४.४.६१–६२) इति णप्रत्ययः ।

यद्येवम्, किमर्थमिदम् 'नस्तद्धिते' (६.४.१४४) इत्येव टिलोपः सिद्धः? सत्यमेतत्; ज्ञापकार्थं तु; एतज् ज्ञापयति–ताच्छीलिके णेऽण्कृतानि भवन्तीति । तेन चौरी, तापसीति णान्तादपीकारः सिद्धो भवति ।

ताच्छील्य इति किम्? कर्मण इदं कार्मणम् ॥

### ३१७४. औक्षमनपत्ये ॥ १७३ ॥ (११५९)

औक्षमित्यनपत्येऽणि टिलोपो निपात्यते । औक्षं पदम् ।

अनपत्य इति किम्? उक्ष्णोऽपत्यमौक्ष्णः, 'षपूर्वहन्धृतराज्ञामणि' (६.४.१३५) इत्यलोपः ॥

### ३१७५. दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवासिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ॥ १७४ ॥ (११४५)

दाण्डिनायन, हास्तिनायन, आथर्वणिक, जैह्माशिनेय, वासिनायनि, भ्रौणहत्य, धैवत्य, सारव, ऐक्ष्वाक, मैत्रेय, हिरण्मय–इत्येतानि निपात्यन्ते ।

दण्डिन्, हस्तिन्–इत्येतौ नडादिषु (४.१.९९) पठ्येते, तयोरायेने परतः प्रकृतिभावो निपात्यते । केषाञ्चित्तु–हस्तिन्निति नडादिषु न पठ्यते, तेषामत एव निपातनात् फगपि भवति । दण्डिनोऽपत्यं दाण्डिनायनः । हस्तिनोऽपत्यं हास्तिनायनः। अथर्वन्–इति वसन्तादिषु (४.२.६३) पठ्यते । अथर्वणा प्रोक्तो ग्रन्थोऽपि उपचाराद् अथर्वन्नित्युच्यते, तमधीते यः स आथर्वणिकः । इके प्रकृतिभावो निपात्यते ।

जिह्माशिन्– इति शुभ्रादिषु (४.१.१२३) पठ्यते, तस्य ढे (एये) परतः

प्रकृतिभावो निपात्यते । जिह्माशिनोऽपत्यं जैह्माशिनेयः ।

वासिनोऽपत्यम्, 'उदीचां वृद्धादगोत्रात्' (४.१.१५७) इति फिञ्, तत्र प्रकृतिभावो निपात्यते–वासिनायनिः ।

भ्रूणहन्, धीवन्–इत्येतयोः ष्यञि परतस्तकारादेशो निपात्यते । भ्रूणघ्नो भावः भ्रौणहत्यम् ।धीव्नो धैवत्यम् । 'हनस्तोऽचिण्णलोः' (८.३.३२) इति यत्तत्वं तद्धातुप्रत्यय एवेति–भ्रौणघ्नः, वार्त्रघ्न इत्यत्र न भवति, अतो भ्रौणहत्ये तत्वं निपात्यते ।

सारव–इति 'सरयू' इत्येतस्य अणि परतोऽयूशब्दस्य 'व' इत्यादेशो निपात्यते। सरय्वां भवं सारवमुदकम् ।

ऐक्ष्वाक–इति स्वरसर्वनाम्ना एकश्रुत्या पठ्यते । ततोऽयमाद्युदात्तोऽन्तोदात्तश्च निपात्यते । इक्ष्वाकोरपत्यम्, 'जनपदशब्दात्क्षत्त्रियादञ्' (४.१.१६६) इत्यञ्, तत्र उकारलोपो निपात्यते । ऐक्ष्वाकः । इक्ष्वाकुषु जनपदेषु भवः 'कोपधादाण्' (४.२.१३२) इत्यण् । ऐक्ष्वाकः ।

मैत्रेय–इति, मित्रयुशब्दो गृष्ट्यादिषु (४.१.१३६) पठ्यते, ततो ढञि कृते यादेरियादेशापवादो युशब्दलोपो निपात्यते । मित्रयोरपत्यं मैत्रेयः ।

अथ किमर्थं मित्रयुशब्दो बिदादिष्वेव (४.१.१०४) न पठ्यते, तत्राञि कृते यादेरिति इयादेशेनैव सिद्धम्; एवं च युलोपार्थं निपातनं कर्त्तव्यं न भवति; यस्कादिषु (२.४.६३) च बहुषु लुगर्थः पाठो न कर्त्तव्यो भवति, मित्रयव इत्यञो 'यञञोश्च' (२.४.६४) इत्येव हि लुकः सिद्धत्वात्? नैतदस्ति; मित्रयूणां सङ्घ इत्यत्र गोत्रचरणाद् वुञं बाधित्वा मैत्रयकः सङ्घ इत्यत्र 'सङ्घाङ्कलक्षणेष्वञ्यञिञामण्' (४.३.१२७) इत्यण् प्राप्नोति ।

हिरण्मयम्–इति हिरण्यस्य मयटि यादिलोपो निपात्यते, हिरण्यस्य विकारः हिरण्मयः ।

## ३१७६. ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि ॥ १७५ ॥ (३५५६)

ऋत्व्य, वास्त्व्य, वास्त्व, माध्वी, हिरण्यय–इत्येतानि निपात्यन्ते छन्दसि विषये.। ऋतु, वास्तु–इत्येतयोर्यति यणादेशो निपात्यते । ऋतौ भवम् ऋत्व्यम् । (पै.

१९.२५.१४) वास्तौ भवं वास्त्व्यम् । वस्तुशब्दस्याणि यणादेशो निपात्यते । वस्तुनि भवो वास्त्वः । मधुशब्दस्याणि स्त्रियां यणादेशो निपात्यते 'माध्वीर्नः सन्त्वोषधी' (ऋ. १.१०.६) । हिरण्यशब्दाद्विहितस्य मयटो मशब्दस्य लोपो निपात्यते (म. भा.) हिरण्ययम् (ऋ. १.१५.१३) ॥

## ॥ इत्युपाध्यायश्रीवामनकृतायां काशिकावृत्तौ षष्ठाध्यायस्य चतुर्थः पादः ॥

## ॥ समाप्तश्चायं षष्ठाध्यायः ॥

॥ श्री गणेशाय नमः ॥

## पाणिनीयाष्टाध्यायीसूत्रवृत्तिः

# काशिका

## न्यास–पदमञ्जरी–भावबोधिनी–हिन्दी–व्याख्यासहिता

# अथ अष्टमाध्यायस्य प्रथमः पादः

### ३६१४. सर्वस्य द्वे ॥ १ ॥

सर्वस्येति च द्वे इति चैतदधिकृतं वेदितव्यम् । इत उत्तरं यद्वक्ष्यामः पदस्येत्यतः प्राक् सर्वस्य द्वे भवत इत्येवं तद्वेदितव्यम् । वक्ष्यति–नित्यवीप्सयोरिति । तत्र सर्वस्य स्थाने द्वे भवतः । के द्वे भवतः? ये शब्दतश्चार्थतश्चोभयथान्तरतमे, एकस्य पचतिशब्दस्य द्वौ पचतिशब्दौ भवतः । पचति पचति । ग्रामो ग्रामो रमणीयः । यदा तु द्विःप्रयोगो द्विर्वचनं तदा स एव पचतिशब्दो द्विरावर्त्तते, तस्य द्वे आवृत्ती भवतः । सर्वस्येति किम्? विस्पष्टार्थम् । अथ पदस्येत्येव कस्मान्नोच्यते? नैवं शंक्यमिह हि न स्यात् प्रपचति प्रपचतीति (१) । इह द्रोग्धा (२) द्रोढा इति घत्वढत्वयोर–सिद्धत्वादकृतयोरेव तयोर्द्विर्वचनं प्राप्नोति, तत्र पश्चाद्विकल्पे सत्यनिष्टमपि स्यात्–द्रोग्धा द्रोढा । द्रोढा द्रोग्धेति । तस्माद्वक्तव्यमेतत् पूर्वत्रासिद्धीयमद्विर्वचन इति । सर्वस्येत्येतदेव वा कृतसर्वकार्यप्रतिपत्त्यर्थं (३) द्रष्टव्यम् ॥

### ३६१५. तस्य परमाम्रेडितम् ॥ २ ॥

तस्य द्विरुक्तस्य यत्परं शब्दरूपं तदाम्रेडितसंज्ञं भवति । चौर चौर चौर । वृषल वृषल वृषल । दस्यो दस्यो दस्यो घातयिष्यामि त्वा, बन्धयिष्यामि त्वा । आम्रेडितप्रदेशा आम्रेडितं भर्त्सने इत्येवमादयः ॥

## ३६१६. अनुदात्तं च ॥ ३ ॥

अनुदात्तं च तद्भवति यदाम्रेडितसंज्ञम् । भुङ्क्ते भुङ्क्ते । पशून् पशून् ॥

## ३६१७. नित्यवीप्सयोः ॥ ४ ॥

नित्ये चार्थे वीप्सायां च यद्वर्त्तते तस्य द्वे भवतः । केषु नित्यता? तिङक्षु अव्ययकृत्सु (४) च । कुत एतत्? आभीक्ष्ण्यमिह नित्यता । आभीक्ष्ण्यं च क्रियाधर्मः । यां क्रियां कर्त्ता प्राधान्येनानुपरमन् करोति तन्नित्यम् । पचति पचति। जल्पति जल्पति । भुक्त्वा भुक्त्वा व्रजति । भोजं भोजं व्रजति । लुनीहिलुनीहीत्येवायं लुनाति। क्त्वाणमुलोर्लोटश्च द्विर्वचनापेक्षायामेव पौनःपुन्यप्रकाशने शक्तिः । यङ् तु तन्निरपेक्षः प्रकाशयति–पुनः पुनः पचति पापच्यत (१) इति । यदा तु तत्र दिर्वचनं तदा क्रियासममिहारे पौनःपुन्यं द्रष्टव्यं पापच्यते पापच्यत इति । अथ केषु वीप्सा? सुप्सु वीप्सा । का पुनः सा? व्याप्तिविशेषविषया प्रयोक्तुरिच्छा वीप्सा । का पुनरसौ? नानावाचिनामधिकरणानां (२) क्रियागुणाभ्यां युगपत्प्रयोक्तुर्व्याप्तुमिच्छा वीप्सा । नानाभूतार्थावाचिनां शब्दानां यान्यधिकरणानि वाच्यानि तेषां क्रियागुणाभ्यां युगपत्प्रयोक्तुमिच्छा वीप्ता । ग्रामो ग्रामो रमणीयः । जनपदो जनपदो रमणीयः । पुरुषः पुरुषो (३) निधनमुपैत्रि । यत्तिङन्तं नित्यतया प्रकर्षेण च युक्तं ततः कृतद्विर्वचनात् प्रकर्षप्रत्यय इष्यते । पचति पचति तरामिति। इह तु आढ्यतरमाढ्यतरमानयेति प्रकर्षयुक्तस्य वीप्सायोग इष्यते ॥

## ३६१८. परेर्वर्जने ॥ ५ ॥

परीत्येतस्य वर्जनेऽर्थे द्वे भवतः । परि परि त्रिगर्तेभ्यो वृष्टो देवः । परि परि सौवीरेभ्यः । परि परि सर्वसेनेभ्यः । वर्जनं परिहारः । वर्जन इति किम्? ओदनं परिषिञ्चति । परेर्वर्जनेऽसमासे वेति वक्तव्यम् । परि परि विगतेभ्यो वृष्टो देवः । परि त्रिगर्तेभ्यः । समासे तु तेनेवोक्तत्वाद्वर्जनस्य नैव भवति–परित्रिगर्त्तं वृष्टो देव इति ॥

## ३६१९. प्रसमुपोदः पादपूरणे ॥ ६ ॥

प्र सम् उप उत् इत्येतेषां पादपूरणे द्वे भवतो द्विर्वचनेन चेत्पादः पूर्यते । प्रप्रायमग्निर्भरतस्य शृण्वे । संसमिद्युवसे वृषन् । उपोप मे परामृश । किं नोदुदु

हर्षसे दातवा उ। (४) पादपूरण इति किम्? प्रदेवं देव्या धिया। सामर्थ्याच्छन्दस्ये–वैतद्विधानम् । भाषायामनर्थकं स्यात् प्रयोगाभावात् ॥

## ३६२०. उपर्यध्यधसः सामीप्ये ॥ ७ ॥

उपरि अधि अधस् इत्येतेषां द्वे भवतः सामीप्ये विवक्षिते । सामीप्यं (५) प्रत्यासत्तिः, कालकृता । देशकृता च । (६) उपर्युपरि दुःखम् । उपर्युपरि ग्रामम्। अध्यधि ग्रामम् । अधोधो नगरम् । सामीप्य इति किम्? उपरि चन्द्रमाः । इह कस्मान्न भवति–उपरि शिरसो घटं धारयति? औत्तराधर्यमेव विवक्षितं न सामीप्यमिति द्विर्वचनं न भवति ॥

## ३६२१. वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु ॥ ८ ॥

एकार्थः (१) पदसमूहो वाक्यम् । वाक्यादेरामन्त्रितस्य द्वे भवतः, असूया संमति कोप कुत्सन भर्त्सन इत्येतेषु यदि तद्वाक्यं भवति। तत्र परगुणानामसहनमसूया। पूजा संमतिः । कोपः क्रोधः । निन्दनं कुत्सनम् । अपकारशब्दैर्भयोत्पादनं भर्त्सनम् । एते च प्रयोक्तृधर्मा नाभिधेयधर्माः । असूयायां तावत्–माणवक ३ माणवक अभिरूपक ३ अभिरूपक रिक्तं ते आभिरूप्यम् । संमतौ–माणवक ३ माणवक अभिरूपक ३ अभिरूपक शोभनः खल्वसि । कोपे–माणवक ३ माणवक अविनीतक ३ अविनीतक इदानीं ज्ञास्यसि जाल्म । कुत्सने–शक्तिके ३ शक्तिके यष्टिके ३ यष्टिके रिक्ता ते शक्तिः । भर्त्सने–चौर ३ चौर वृषल३ वृषल घातयिष्यामि त्वा बान्धयिप्यामि त्वा। असूयादिषु स्वरितमाम्रेडितेसूयासंमतिकोपकु–त्सनेष्विति पूर्वपदस्य प्लुतः । भर्त्सने तु "आम्रेडितं भर्त्सने" इत्याम्रेडितस्यैव प्लुतः । वाक्यादेरिति किम्? अन्तस्य मध्यस्य च मा भूत् । शोभनः खल्वसि माणवक। आमन्त्रितस्येति किम्? उदारो देवदत्तः। असूयादिष्विति किम्? देवदत्त गामभ्याज शुक्लाम् ॥

## ३६२२. एकं बहुव्रीहिवत् ॥ ९ ॥

एकमित्येतच्छब्दरूपं द्विरुक्तं बहुव्रीहिवद्भवति । बहुव्रीहिवत्त्वे प्रयोजनं सुब्लोपपुंवद्भावौ। एकैकमक्षरं पठति। एकैकयाहुत्या जुहोति। सर्वनामसंज्ञाप्रतिषे–

धस्वरसमासान्ताः समासाधिकारविहिते बहुव्रीहौ विज्ञायन्ते, तेनातिदेशिके बहुव्रीहौ न भवन्ति । एकैकस्मै । न बहुव्रीहाविति प्रतिषेधो न भवति । बहुव्रीहिरेव यो बहुव्रीहिरिति विज्ञानात् । न न । सु सु । नञ्सुभ्यामित्यन्तोदात्तत्वम् न भवति । ऋक् ऋक् । पूः पूः । ऋक्पूरिति समासान्तो न भवति ॥

## ३६२३. आबाधे च ॥ १० ॥

आबाधनमाबाधः पीडा, प्रयोक्तृधर्मः नाभिधेयधर्मः, (२) तत्र वर्त्तमानस्य द्वे भवतः बहुव्रीहिवच्चास्य कार्यं भवति । गतगतः । नष्टनष्टः । पतितपतितः । गतगता। नष्टनष्टा। पतितपतिता । प्रियस्य चिरगमनादिना पीड्यमानः कश्चिदेवम् प्रयुङ्क्ते प्रयोक्ता ॥

## ३६२४. कर्मधारयवदुत्तरेषु ॥ ११ ॥

इत उत्तरेषु द्विर्वचनेषु कर्मधारयवत्कार्यं भवतीत्येतद्वेदितव्यम् । कर्मधारयत्वे प्रयोजनं सुब्लोपपुंवद्भावान्तोदात्तत्वानि । सुब्लोपः – पटुपटुः । मृदुमृदुः । पण्डितपण्डितः । पुंवद्भावः – पटुपट्वी । मृदुमृद्वी । कालककालिका । कीपधाया अपि हि कर्मधारयवद्भावात् "पुंवत्कर्म्मधारयेति" पुंवद्भावो भवति । अन्तोदात्तत्वम्– पटुपटुः पटुपट्वी । समासान्तोदात्तत्वमनेनैव विधीयत इति परत्वादाम्रेडितानुदात्तत्वं बाध्यते । अधिकारेणैव सिद्धे यदुत्तरेष्विति वचनं तद्विस्पष्टार्थम् ॥

## ३६२५. प्रकारे गुणवचनस्य ॥ १२ ॥

प्रकारो भेदः सादृश्यं च । तदिह सादृश्यं प्रकारो गृह्यते । प्रकारे वर्त्तमानस्य गुणवचनस्य द्वे भवतः । पटु पटु । मृदु मृदु । पण्डित पण्डित । अपरिपूर्णगुण इत्यर्थः । परिपूर्णगुणेन न्यूनगुणस्योपमाने सत्येवं प्रयुज्यते । जातीयरोऽनेन द्विर्वचनेन बाधनं नेष्यते । पटुजातीयः, मृदुजातीयः इत्यपि हि भवति । तत्कथम्? वक्ष्यमाणमन्यतरस्यांग्रहणमुभयोः शेषो विज्ञायते । प्रकार इति किम्? पटुर्देवदत्तः । गुणवचनस्येति किम्? अग्निर्माणवकः । गौर्वाहीकः । यद्यप्यत्राग्निशब्दो गोशब्दश्च मुख्यार्थसम्बन्धादवधृतभेदं (१) तेक्ष्ण्यजाड्यादिकमर्थान्तरे गुणविशेषमेव प्रतिपादयितुं प्रवृत्तस्तथापि सर्वदा गुणवचनो न भवतीति न द्विरुच्यते । आनुपूर्व्ये द्वे भवत इति वक्तव्यम् । मूले मूले स्थूलाः अग्रे अग्रे सूक्ष्माः । ज्येष्ठं ज्येष्ठं प्रवेशय । स्वार्थे

अवधार्यमाणेऽनेकस्मिन् द्वे भवत इति वक्तव्यम् । अस्मात् कार्षापणादिह भवद्भ्यां माषं माषं देहि । स्वार्थ एतद्द्विर्वचनं न वीप्सायाम् । अत्र हि द्वावेद माषौ दीयेते न सर्वे कार्षापणसंवन्धिनो माषाः, तेन वीप्सा न विद्यते । अवधार्यमाण इति किम्? अस्मात् कार्षापणादिह भवद्भ्यां माषमेकं देहि । द्वौ माषौ देहि । त्रीन् वा माषान् देहि । अनेकम्मिन्निति किम्? अस्मात् कार्षापणादिह भवद्भ्यां माषमेकं देहि । चापले द्वे भवत इति, वक्तव्यम् । संभ्रमेण प्रवृत्तिश्चापलम् । अहिरहिः, बुध्यस्व बुध्यस्व। नावश्यं द्वावेव शब्दौ प्रयोक्तव्यौ किं तर्हि? यावद्भिः शब्दैः सोऽर्थोऽवगम्यते तावन्तः प्रयोक्तव्याः । अहिः अहिः अहिः, बुध्यस्व बुध्यस्व बुध्यस्व इति । क्रियासमभिहारे द्वे भवत इति वक्तव्यम् । स भवान् लुनीहिलुनीहित्येवायं लुनाति । आभीक्ष्ण्ये द्वे भवत इति वक्तव्यम् । भुक्त्वा भुक्त्वा व्रजति । भोजंभोजं व्रजति । नित्य (२) इत्येव सिद्धमिति तत्रोक्तम् । डाचि द्वे भवत इति वक्तव्यम् । पटपटा करोति । पटपटायते। अव्यक्तानुकरणडाजन्तस्य द्विर्वचनमिष्यते । इह न भवति – द्वितीया करोति, तृतीया करोति । तदर्थं केचिड्डाचि बहूलमिति पठन्ति। पूर्वप्रथमयोरर्थातिशयविवक्षायां द्वे भवत इति वक्तव्यम् । पूर्व पूर्व पुष्यन्ति । प्रथमं प्रथमं पच्यन्ते । आतिशायिकोऽपि दृश्यते – पूर्वतरं पुष्यन्ति । प्रथमतरं पच्यन्त इति ॥ डतरडतमयोः (१) समसंप्रधारणयोः स्त्रीनिगदे भावे द्वे भवत इति वक्तव्यम्। उभाविमावाढ्यौ, कतरा कतरा अनयोराढ्यता । सर्व इमे आढ्याः, कतमा कतमा एषामाढ्यता । डतरतडतमाभ्यामन्यत्रपि, हि दृश्यते – उभाविमावाढ्यौ, कीदृशी कीदृशी अनयोराढ्यता। तथा स्त्रीनिगदाद्भावादन्यत्रापि हि दृश्यते– उभाविमावाढ्यौ, कतरः कतरोऽनयोर्विभव इति । कर्म्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यम् । समासवच्च बहुलम् । यदा न समासवत्प्रथमैकवचनं तदा पूर्वपदस्य । अन्यमन्यमिमे ब्राह्मणा भोजयन्ति। अन्योन्यमिमे ब्राह्मणा भोजयन्ति । अन्योन्यस्य ब्राह्मणा भोजयन्ति। इतरेतरं भोजयन्ति इतरेतरस्य भोजयन्ति ॥ स्त्रीनपुंसकयोरुत्तरपदस्य चाम्भावो वक्तव्यः । अन्योन्यामिमे ब्राह्मण्यौभोजयतः । अन्योन्यं भोजयतः । इतरेतरां भोजयतः। इतरेतरां भोजयतः । अन्योन्यामिमे ब्राह्मणकुले भोजयतः । इतरेतरामिमे ब्राह्मणकुले भोजयतः ।

### ३६२६. अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् ॥ १३ ॥

प्रिय सुख इत्येतयोरन्यतरस्यां द्वे भवतः अकृच्छ्रे द्योत्ये । कृच्छ्रं दुःखं,

तदभावोऽकृच्छ्रम् । प्रियप्रियेण ददाति(२) । सुखसुखेन ददाति । प्रियेण ददाति । सुखेन ददाति । अखिद्यमानो ददातीत्यर्थः । अकृच्छ्र इति किम्? प्रियः पुत्त्रः । सुखो रथः ॥

### ३६२७. यथास्वे यथायथम् ॥ १४ ॥

यो य आत्मा यद्यदात्मीयं तत्तद्यथास्वं तस्मिन् यथायथमिति निपात्यते । यथा शब्दस्य द्विर्वचनं नपुंसकलिङ्गता च निपात्यते । ज्ञाताः सर्वे पदार्था यथायथम् यथास्वभावमित्यर्थः । सर्वेषां तु यथायथं यथात्मीयमित्यर्थः (३) ॥

### ३६२८. द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ॥ १५ ॥

द्वन्द्वमिति द्विशब्दस्य द्विर्वचनं पूर्वपदस्याम्भावः अत्वं चोत्तरपदस्य निपात्यते रहस्य मर्यादावचन व्युत्क्रमण यज्ञपात्रप्रयोग अभिव्यक्ति इत्येतेषु अर्थेषु । तत्र रहस्यं द्वन्द्वशब्दवाच्यमितरे विषयीभूताः । द्वन्द्वं मन्त्रयन्ते (१) । मर्यादा स्थित्यनतिक्रमः । आचतुरं हीमे पशवो द्वन्द्व मिथुनायन्ते । माता पुत्रेण मिथुनं गच्छति, पौत्रेण तत्पुत्रेणापीति मर्यादार्थः । व्युत्क्रमणे–द्वन्द्व व्युत्क्रान्ताः । व्युत्क्रमणं भेदः, पृथगवस्थानम् । द्विवर्गसंबन्धेन पृथगवस्थिता द्वन्द्व व्युत्क्रान्ता इत्युच्यन्ते । यज्ञपात्रप्रयोगे–द्वन्द्व न्यञ्चि यज्ञपात्राणि प्रयुनक्ति धीरः । अभिव्यक्तौ–द्वन्द्व नारदपर्वतौ । द्वन्द्व संकर्षणवासुदेवौ । द्वावप्यभिव्यक्तौ साहचर्येणेत्यर्थः । अन्यत्रापि द्वन्द्वमित्येतद् दृश्यते, तदर्थ योगविभागः कर्तव्यः । द्वन्द्वं युद्धं वर्त्तते । द्वन्द्वानि सहते धीरः । चार्थे द्वन्द्व इति ॥

### ३६२९. पदस्य ॥ १६ ॥

पदस्येत्यमधिकारः प्रागपदान्ताधिकारात् । यदित ऊर्ध्वमनुक्रमिष्यामः पदस्येत्येवं तद्वेदितव्यम् । वक्ष्यति–संयोगान्तस्य लोपः । पचन् । यजन् । पदस्येति किम्? पचन्तौ यजन्तौ । वक्ष्यमाणवाक्यापेक्षया पदस्याधिकृतस्य षष्ठ्यर्थव्यवस्था द्रष्टव्या– क्वचित्स्थानषष्ठी, क्वचिदवयवषष्ठी ॥

### ३६३०. पदात् ॥ १७ ॥

पदादित्ययमधिकारः प्राक् ''कुत्सने च सुप्यगोत्रादौ'' इत्येतस्माद्यदित ऊद्ध्र्वमनुक्रमिष्यामः पदादित्येवं तद्वेदितव्यम् । वक्षयति – ''आमन्त्रितस्य'' । आमन्त्रितस्य पदात्परस्यानुदात्तादेशो भवतीति । पचसि देवदत्त । पदादिति किम्? देवदत्त पचसि ॥

## ३६३१. अनुदात्तं सर्वमपादादौ ॥ १८ ॥

अनुदात्तमिति च, सर्वमिति च, अपादादाविति च एतत् त्रयमधिकृतं वेदितव्यमापादपरिसमाप्तेः । इत उत्तरं यद्वक्ष्यामः अनुदात्तं सर्वमपादादावित्येवं तद्वेदितव्यम् । वक्ष्यति–''आमन्त्रितस्य चे'' ति । पचसि देवदत्त । अपादादाविति किम्? यत्ते नियतं रजसं मृत्योअनवधृष्ण्यम् । ''बहुवचनस्य वस्नसौ'' । ग्रामो वः स्वं जनपदो नः स्वम् । अपादादाविति किम्?

**रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता ।**
**स एव नाथो भगवानस्माकं शत्रुमर्दनः ॥**

पादग्रहणेनात्र ऋक्पादः श्लोकपादश्च गृह्यते । सर्वग्रहणं सर्वमनूद्यमानं विधीयमानं चानुदात्तं यथा स्यादिति । तेन युष्मदादेशानामपि वाक्यभेदेनानुदात्तत्वं विधीयते । युष्मदस्मदादेशाश्च सर्वस्य सुबन्तस्य पदस्य यथा स्थुः । यत्रापि स्वादिषु (१) पदसंज्ञं भवति ग्रामो वां दीयते । जनपदो नौ दीयते ॥

## ३६३२. आमन्त्रितस्य च ॥ १९ ॥

आमन्त्रितस्य पदस्य पदात्परस्यापादादौ वर्त्तमानस्य सर्वस्यानुदात्तो भवति । पचसि देवदत्त । पचसि यज्ञदत्त । आमन्त्रिताद्युदात्तत्वे प्राप्ते वचनम् । समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः । इह मा भूवन्–अयं दण्डो हरानेन (२) ओदनं पच तव भविष्यति । ओदनं पच मम भविष्यति । इह च यथा स्यात्–इह देवदत्त माता ते कथयति । नद्यास्तिष्ठति कूले । शालीनां त ओदनं दास्यामि इति । आमन्त्रितान्तं तिङन्तं युप्मदस्मदादेशाश्च यस्मात् पराणि न तेषां सामर्थ्यमिति तदाश्रया निघातयुष्मदस्मदादेशा न स्युः, समर्थः पदविधिरिति वचनात् ॥

## ३६३३. युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ ॥ २० ॥

युष्मदस्मद् इत्येतयोः षष्ठीचतुर्थीद्वितीयास्थयोर्यथासंख्यं वान्नौ इत्येतावादेशौ

भवतस्तौ चानुदात्तौ । पदस्य, पदादनुदात्तं सर्वमपादादाविति सर्वमिह संबध्यते । ग्रामो वां पश्यति । जनपदो नौ पश्यति । एकवचनबहुवचनान्तयोरादेशान्तरविधानाद् द्विवचनान्तयोरेतावादेशौ विज्ञायेते । षष्ठीचतुर्थीद्वितीयास्थयोरिति किम्? ग्रामे युवाभ्यां कृतम् । स्थग्रहणं श्रूयमाणविभक्त्यर्थम् । इह मा भूत् – (३) इति युष्मत्पुत्र(४) इति ॥

## ३६३४. बहुवचनस्य वस्नसौ ॥ २१ ॥

बहुवचनान्तयोर्युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्यथासंख्यं वस् नस् इत्येतावादेशौ भवतः । ग्रामो वः स्वम् । जनपदो नः स्वम् । ग्रामो वो दीयते । जनपदो नो दीयते । ग्रामो वः पश्यति । जनपदो नः पश्यति ॥

## ३६३५. तेमयावेकवचनस्य ॥ २२ ॥

युष्मदस्मदोरेकवचनान्तयोः षष्ठीचतुर्थीस्थयोर्यथासंख्यं ते मे इत्येतावादेशौ भवतः । ग्रामस्ते स्वम् । ग्रामो मे स्वम् । ग्रामस्ते दीयते । ग्रामो मे दीयते । द्वितीयान्तस्यादेशान्तरविधानसामर्थ्यात् षष्ठीचतुर्थ्योरेवायं योगः ॥

## ३६३६. त्वामौ द्वितीयायाः ॥ २३ ॥

एकवचनस्येति वर्त्तते । द्वितीयाया यदेकवचनं तदन्तयोर्युष्मदस्मदोर्यथासंख्यं त्वा मा इत्येतावादेशौ भवतः । ग्रामस्त्वा पश्यति । ग्रामो मा पश्यति ॥

## ३६३७. न चवाहाहैवयुक्ते (१) ॥ २४ ॥

च वा ह अह एव एभिर्योगे युष्मदस्मदोर्वान्नावादयो न भवन्ति । पूर्वेण प्रकारेण प्राप्ताः प्रतिषिद्ध्यन्ते । ग्रामस्तव च स्वम् । ग्रामो मम च स्वम् । युवयोश्च स्वम् । आवयोश्च स्वम् । युष्माकं च स्वम् । अस्माकं च स्वम् । ग्रामस्तुभ्यं च दीयते । ग्रामो मह्यं च दीयते । युवाभ्यां च दीयते । आवाभ्यां च दीयते । युष्मभ्यं च दीयते । अस्मभ्यं च दीयते । ग्रामस्त्वां च पश्यति । ग्रामो मां च पश्यति । युवां च पश्यति । आवां च पश्यति । युष्मांश्च पश्यति । अस्मांश्च पश्यति । वा–ग्रामस्तव वा स्वम् । ग्रामो मम वा स्वम् । युवयोर्वा स्वम् । आवयोर्वा स्वम् । युष्माकं वा स्वम् । अस्माकं वा स्वम् । ग्रामस्तुभ्यं वा दीयते।

ग्रामो मह्यं वा दीयते । युवाभ्यां वा दीयते । आवाभ्यां वा दीयते । युष्मभ्यं वा दीयते । अस्मभ्यं वा दीयते । ग्रामस्त्वां वा पश्यति । ग्रामो मां वा पश्यति । युवां वा पश्यति । आवां वा पश्यति । युष्मान् वा पश्यति । अस्मान्वा पश्यति । ह–ग्रामस्तव ह स्वम् । ग्रामो मम ह स्वम् । युवयोर्ह स्वम् । आवयोर्ह स्वम् । युष्माकं ह स्वम् । अस्माकं ह स्वम् । ग्रामस्तुभ्यं ह दीयते । ग्रामो मह्यं ह दीयते। युवाभ्यां ह दीयते । आवाभ्यां ह दीयते । युष्मभ्यं ह दीयते । अस्मभ्यं ह दीयते। ग्रामस्त्वां ह पश्यति । ग्रामो मां ह पश्यति । युवां ह पश्यति । आवां ह पश्यति। युष्मान् ह पश्यति । अस्मान् ह पश्यति । अह–ग्रामस्तवाह स्वम् । ग्रामो ममाह स्वम् । युवयोरह स्वम् । आवयोरह स्वम् । युष्माकमह स्वम् । अस्माकमह स्वम्। ग्रामस्तुभ्यमह दीयते । ग्रामो मह्यमह दीयते । युवाभ्यामह दीयते । आवाभ्यामह दीयते । युष्मभ्यमह दीयते । अस्मभ्यमह दीयते । ग्रामस्त्वामह पश्यति । ग्रामो मामह पश्यति । युवामह पश्यति । आवामह पश्यति । युष्मानह पश्यति । अस्मानह पश्यति । एव–ग्रामस्तवेव स्वम् । ग्रामो ममैव स्वम् । युवयोरेव स्वम्। आवयोरेव स्वम् । युष्माकमेव स्वम् । अस्माकमेव स्वम् । ग्रामस्तुभ्यमेव दीयते। ग्रामो मह्यमेव दीयते । युवाभ्यामेव दीयते । आवाभ्यामेव दीयते । युष्मभ्यमेव दीयते । अस्मभ्यमेव दीयते । ग्रामस्त्वामेव पश्यति । ग्रामो मामेव पश्यति । युवामेव पश्यति । आवामेव पश्यति । युष्मानेव पश्यति । अस्मानेव पश्यति । युक्तग्रहणं साक्षाद्योगप्रतिपत्त्यर्थम्, (२) युक्तयुक्ते प्रतिषेधो न भवति–ग्रामश्च ते स्वम् । नगरं च मे स्वम् ॥

### ३६३८. (१) पश्यार्थैश्चानालोचने ॥ २५ ॥

पश्यार्था दर्शनार्थाः । दर्शनं ज्ञानम् । आलोचनं चक्षुर्विज्ञानम् । तैः पश्यार्थैरनालोचने वर्त्तमानैर्युक्ते युष्मदस्मदोर्वान्नावादयो न भवन्ति । ग्रामस्तव स्वं समीक्ष्यागतः (२) । ग्रामो मम स्वं समीक्ष्यागतः । ग्रामस्तुभ्यं दीयमानं समीक्ष्यागतः। ग्रामो मह्यं दीयमानं समीक्ष्यागतः। ग्रामस्त्वां समीक्ष्यागतः । ग्रामो मां समीक्ष्यागतः। अनालोचन इति किम्? ग्रामस्त्वा पश्यति । ग्रामो मा पश्यति । पश्यार्थैर्युक्तयुक्तेऽपि च प्रतिषेध इष्यते । तथा चैवोदाहृतम् ॥

### ३६३९. सपूर्वायाः प्रथमाया विभाषा ॥ २६ ॥

विद्यमानपूर्वात् प्रथमान्तात् पदादुत्तरयोर्युष्मदस्मदोर्विभाषा वान्नावादयो न भवन्ति । ग्रामे कम्बलस्ते स्वम् । ग्रामे कम्बलस्तव स्वम् । ग्रामे कम्बलो मे स्वम्। ग्रामे कम्बलो मम स्वम् । ग्रामे कम्बलस्ते दीयते । ग्रामे कम्बलस्तुभ्यं दीयते । ग्रामे कम्बलो मे दीयते । ग्रामे कम्बलो मह्यं दीयते । ग्रामे छात्रास्त्वा पश्यन्ति । ग्रामे छात्रास्त्वाम् पश्यन्ति । ग्रामे छात्रा मा पश्यन्ति । ग्रामे छात्रा मां पश्यन्ति । सपूर्वाया इति किम्? कम्बलस्ते स्वम् । कम्बलो मे स्वम् । प्रथमाया इति किम्? कम्बलो ग्रामे ते स्वम् । कम्बलो ग्रामे मे स्वम् ।

### ३६४०. तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ॥ २७ ॥

तिङन्तात् पदात् पराणि गोत्रादीनि कुत्सने आमीक्ष्ण्ये चार्थे वर्त्तमानानि अनुदात्तानि भवन्ति । पचति गोत्रम् (३) । जल्पति गोत्रम् । आभीक्ष्ण्ये–पचति पचति गोत्रम् (४) । जल्पति जल्पति गोत्रम् । ब्रुवः – पचति ब्रुवम् । जल्पति ब्रुवम् । पचति पचति ब्रुवम् । जल्पति जल्पति ब्रुवम् । ब्रुव इति ब्रुवः कन्निपातनाद् वच्यादेशाभावश्च । गोत्र । ब्रुव । प्रवचन । प्रसहन । प्रकथन । प्रत्ययन । प्रचक्षण । प्राय । विचक्षण। अवचक्षण । स्वाध्याय । भूयिष्ठ । नाम वा (१) । नामेत्येतद्वा निहन्यते । पक्षे आद्युदात्तमेव भवति–पचति नाम । पठति नाम । गोत्रादिः । तिङ इति किम्? कुत्सितं गोत्रम् । गोत्रादीनीति किम्? पचति पापम् । कुत्सनाभीक्ष्ण्ययोरिति किम्? खनति गोत्रं समेत्य कूपम् (२) । कुत्सनाभीक्ष्ण्ययोरिति पाठविशेषणं द्रष्टव्यम् । तेनान्यत्रापि गोत्रादिग्रहणेन कुत्सनाभीक्ष्ण्ययोरेव कार्यं भवति ॥

### ३६४१. तिङ्ङतिङः ॥ २८ ॥

तिङन्तं पदमतिङन्तात् पदात् परमनुदात्तं भवति । देवदत्तः पचति । यज्ञदत्तः पचति । तिङिति किम्? नीलमुत्पलम् । शुक्लं वस्त्रम् । अतिङ इति किम्? भवति पचति (३) ॥

### ३६४२. न लुट् ॥ २९ ॥

पूर्वेणातिप्रसक्ते प्रतिषेध आरभ्यते । लुडन्तं नानुदात्तं भवति । श्वः कर्ता श्वः कर्त्तारौ । मासेन कर्त्तारः । तासेः परस्य लसार्वधातुकस्यानुदात्तत्वे सति सर्वतासिरेवोदात्तः । यत्र तु टिलोपस्तत्रोदात्तनिवृत्तिस्वरो भवति ॥

**३६४३. (४) निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चणकच्चिद्यत्रयुक्तम् ॥ ३० ॥**

नेति वर्त्तते । यत् यदि हन्त कुवित् नेत् चेत् चण् कच्चित् यत्र इत्येतैर्निपातैर्युक्तं तिङन्तं नानुदात्तम् भवति । यत्करोति । यत्पचति । यदि–यदि करोति । यदि पचति। हन्त–हन्त करोति । हन्त पचति । कुवित् – कुवित्करोति । कुवित्पचति । नेत्–नेञ्जिह्मायन्तो नरकं पताम । चेत्–स चेद्भुङ्क्ते । कञ्चिदधीते । यत्र–यत्र भुङ्क्ते । यत्राधीते । निपातैरिति किम्? यत्कूजति शकटम् । गच्छत्कूजति शकटमित्यर्थः । इणः शतरि रूपमेतत् । युक्तमिति किम्? यत्र क्व च ते मनो दक्षं दधस उत्तरम् ॥

**३६४४. नह प्रत्यारम्भे ॥ ३१ ॥**

नह इत्येतेन युक्ते प्रत्यारम्भे तिङन्तं नानुदात्तं भवति । (१) चोदितस्यावधीरणे उपलिप्सया प्रतिषेधयुक्तः प्रत्यारम्भः क्रियते । न ह भोक्ष्यसे । नहाध्येष्यसे । प्रत्यारभ्भ इति किम्? नह वै तस्मिंश्च लोके दक्षिणामिच्छन्ति ॥

**३६४५. सत्यं प्रश्ने ॥ ३२ ॥**

सत्यमित्यनेन युक्तं तिङन्तं नानुदात्तं भवति प्रश्ने । सत्यं भोश्क्ष्यसे । सत्यमध्येष्यसे । प्रश्न इति किम्? सत्यं वक्ष्यामि नानृतम् ॥

**३६४६. अङ्गाप्रातिलोम्ये ॥ ३३ ॥**

अङ्ग इत्यनेन युक्तं तिङन्तमप्रातिलोम्ये नानुदात्तं भवति । अङ्ग कुरु । अङ्ग पच । अङ्ग पठ । अप्रातिलोम्य इति किम्? अङ्ग कूज वृषल इदानीं ज़ास्यसि जाल्म। कूजनमनभिमतमसौ कुर्वन् प्रतिलोमो भवति ॥

**३६४७. हि च ॥ ३४ ॥**

हि इत्यनेन युक्तं तिङन्तमप्रातिलोम्ये नानुदात्तं भवति । स हि कुरु । स हि पच । स हि पठ । अप्रातिलोम्य इत्येव । स हि कूज वृषल इदानिं ज़ास्यसि जाल्म ॥

## ३६४८. छन्दस्यनेकमपि साकाङ्क्षम् ॥ ३५ ॥

हि चेति वर्त्तते । छन्दसि विषये हियुक्तं तिङन्तं साकाङ्क्षमनेकमपि नानुदात्तं भवति एकमपि । कदाचिदेकं कदाचिदनेकमित्यर्थः । तत्रानेकं तावत्–अनृतं हि मत्तो वदति, पाप्मा एनं विपुनाति । तिङन्तद्वयमप्येतन्न निहन्यते । एकं खल्वपि–अग्निर्हि अग्ने उदजायत् । तिङन्तद्वयमपि हिशब्दयुक्तमेतत् । तत्रैकमुदजयदित्यादिरुदात्तम् । अपरमनुदात्तम् । अजा ह्यग्नेरजनिष्ट गर्भम् । सा वा अपश्यज्जनितारमग्ने । अजनिष्टेत्याद्युदात्तमपश्यदित्यनुदात्तम् ॥

## ३६४९. यावद्यथाभ्याम् ॥ ३६ ॥

यावद्यथा इत्येताभ्यां युक्तं तिङन्तं नानुदात्तं भवति । यावद्भुङ्क्ते । यथा भुङ्क्ते । यावदधीते । यथाधीते । देवदत्तः पचति यावत् । देवदत्तः पचति यथा । परेणापि योगे भवति प्रतिषेधः ॥

## ३६५०. पूजायां नानन्तरम् ॥ ३७ ॥

यावद्यथा इत्येताभ्या युक्तमनन्तरं तिङन्तं पूजायां विषये नानुदात्तं न भवति । किं तर्हि? अनुदात्तमेव । यावत्पचति शोभनन् । यथा पचति शोभनम् । यावत् करोति चारु । यथा करोति चारु । पूजायामिति किम्? यावद्भुदृक्ते । यथा भुङ्क्ते। अनन्तरति किम्? यावद्देवदतः पचति शोभनम् । यथा देवदत्तः करोति चारु । पूर्वेणात्र निघातः प्रतिषिद्ध्यते ॥

## ३६५१. उपसर्गव्यपेतं च ॥ ३८ ॥

यावद्यथाभ्यां युक्तमुपसर्गव्यपेतं च पूजायां विषये नानुदात्तं न भवति । किं तर्हि? अनुदात्तमेव भवति । पूर्वमनन्तरमित्युक्तमुपसर्गव्यवधानार्थोयमारम्भः । यावत्प्रपचति शोभनम् । यथा प्रपचति शोभनम् । यावत्प्रकरोति चारु । यथा प्रकरोति चारु । अनन्तरमित्येव । यावद्देवदत्तः प्रपचति शोभनम् । यथा विष्णुमित्रः प्रकरोति चारु ॥

## ३६५२. तुपश्यपश्यताहैः पूजायाम् ॥ ३९ ॥

तु पश्य पश्यत अह इत्येतैर्युक्तं तिङन्तं नानुदात्तं न भवति पूजायां विषये । तु–माणवकस्तु भुङ्क्ते शोभनम् । पश्य–पश्य माणवको भुङ्क्ते शोभनम् । पश्यत–पश्यत माणवको भुङ्क्ते शोभनम् । अह–अह माणवको भुङ्क्ते शोभनम् । पूजायामिति किम्? पश्य मृगो धावति । पूजायामिति वर्त्तमाने पुनः पुजायामित्युच्यते निघातप्रतिषेधार्थम् । तद्धि प्रतिषेधस्य प्रतिषेधेन संवद्धमिति ॥

**३६५३. अहो च ॥ ४० ॥**

अहो इत्यनेन युक्तं तिङन्तं नानुदात्तं भवति पूजायाम् विषये । अहो देवदत्तः पचति शोभनम् । अहो विष्णुमित्रः करोति चारु । पृथग्योगकरणमुत्तरार्थम् ॥

**३६५४. शेषे विभाषा ॥ ४१ ॥**

अहो इत्यनेन युक्तं तिङन्तं शेषे विभाषा नानुदात्तं भवति । कश्च् शेषः? यदन्थत्पूजायाः । कटमहो करिष्यसि । मम गेहमेष्यसि । असूयावचनमेतत् । पूजायामित्यस्य पूर्वत्र चानुकृष्टत्वादनधिकारे सिद्धे शेषवचनं विस्पष्टार्थम् ॥

**३६५५. पुरा च परीप्सायाम् ॥ ४२ ॥**

पुरा इत्यनेन युक्तं परीप्साथामथ विभाषा नानुदात्तं भवति । परीप्सा त्वरा अधीष्व माणवक पुरा विद्योतते विद्यत् । पुरा स्तनयति स्नतथित्नुः । पुराशब्दोऽत्र भविष्यदासर्ति द्योतयति । परीस्पायामिति किम्? न तेन स्म पुराधीयते । अत्र भूतकालविप्रकर्ष पुराश्ब्दो द्योतयति । कर्नया स्म पुराधीयते ॥

**३६५६. नन्वित्यनुज्ञैषणायाम् ॥ ४३ ॥**

ननु इत्यनेन युक्तं तिङन्तं नानुदात्तं भवति अनुज्ञैषणायां विषये । अनुज्ञाया एषणा अनुज्ञेषणा । (१) अनुज्ञाप्रार्थनेत्यर्थः । ननु करोमि भोः । अनुजानीष्व मां करणं प्रतीत्यर्थः । अनुज्ञैषणायामिति किम्? अकार्षीः कटं देवदत्त? ननु करोमि भोः । पृष्ठप्रतिवचनमेतन्नानुज्ञैषणा ॥

**३६५७. किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम् ॥ ४४ ॥**

किमिर्येतत्क्रियाप्रश्ने यदा वर्त्तते तदानेन युक्तं तिङन्तमनुप्सर्गमप्रतिषिद्धं

नानुदात्तं भवति । किं देवदत्तः पचति, अहोस्विद्भुङ्क्ते? किं देवदत्तः शेते आहोस्विदधीते? अत्र केचिदाहुः – पूर्व क्रियुक्तमिति तन्न मिहन्यते । उत्तरं तु न क्रियुक्तमिति तन्निहन्यत एवेति । अपरे त्वाहुः – यद्यप्येकस्याल्यातस्य समीपे किंशब्दः श्रूयते तथापि सर्वस्य संशयविषस्य तेन योग इति उभयत्र प्रतिषेधेन भवितव्यमिति । क्रियाग्रहणं किम्? साधनप्रश्ने माभूत् किं देवदत्त ओदनं पचति अहोस्विच्छाकमिति? प्रश्न इति किम्? किमधीते देवदत्तः । क्षेपे किंशब्दोऽयं न प्रश्ने । अनुपसर्गमिति किम्? किं देवदत्तः प्रपचति आहोस्वित्प्रकराति? अप्रतिषिद्धमिति किम्? किं देवदत्तो न पठति आहोस्विन्न करोति ॥

## ३६५८. लोपे विभाषा ॥ ४५ ॥

किमो लोपे क्रियाप्रश्ने तिङन्तमनुपसर्गमप्रतिषिद्धं विभाषा नानुदात्तं भवति। क्व चास्य लोपः? यत्र गम्यते चार्थो न च प्रयुज्यते किंशब्दः । देवदत्तः पचति आहोस्वित्पठति? विनैव किमा प्रश्नोऽवगम्यते । प्राप्तविभाषेयं किमर्थेन योगत् । पूर्ववत् प्रत्युदाहरणानि (२) ॥

## ३६५९. एहिमन्ये प्रहासे लृट् ॥ ४६ ॥

एहिमन्ये इत्यनेन युक्तं तिङन्तं नानुदात्तं भवति प्रहासे । प्रकृष्टो हासः प्रहासः, क्रीडा । एहि मन्ये ओदनं भोक्ष्यसे, नहि भोक्ष्यसे भुक्तः सोऽतिथिभिः । एहि मन्ये रथेन यास्यसि, नहि यास्यसि थातस्तेन पिता । प्रहास इति किम्? एहि मन्यसे ओदनं भोक्ष्ये इति । सुष्ठु च मन्यसे । साधु च मन्यसे । गत्यर्थलोटा लृडित्येव सिद्धे सत्यारम्भो नियमार्थः – एहिमन्येयुक्तं प्रहस एव यथा स्यात्, अन्यत्र मा भूदिति–एहि मन्यसे ओदनं भोक्ष्य इति । एहिमन्य इत्युत्तमोपादानमतन्त्रम्। प्रहास एव हि मन्यतेरुत्तमो विहितस्ततोऽन्यत्र मध्यम एव भवति । तत्रानेन नियमेन निवृत्तिः क्रियते । एहि मन्यसे ओदनं भोक्ष्य इति ॥

## ३६६०. जात्वपूर्वम् ॥ ४७ ॥

जातु इत्येतदविद्यमानपूर्वम् तेन युक्तं तिङन्तं नानुदात्तं भवति । जातु भोक्ष्यसे।

जातु करिप्यामि । अपूर्वमिति किम्? कटं जातु करिष्यति ॥

## ३६६१. किंवृत्तं च चिदुत्तरम् ॥ ४८ ॥

किमो वृत्तं किंवृत्तं, किवृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयात्, डतरडतमौ च प्रत्ययौ, तत्किंवृत्तं चिदुत्तरमविद्यमानपूर्व यत्तेन युक्तं तिङन्तं नानुदात्तं भवति । कश्चिद्भुङ्क्ते । कश्चिद्भोजयति । कश्चिदधीते । केन चित्करोमि । कस्मै चिद्ददाति । कतरश्चित्करोति । कतमश्चिदभुङक्ते । चिदुत्तरमिति किम्? को भुङ्क्ते । अपूर्वमित्येव। देवदत्तः किंचित्पठति ॥

## ३६६२. आहो उताहो चानन्तरम् ॥ ४९ ॥

निघातप्रतिषेधोऽनुवर्त्तते, अपूर्वमिति च । आहो इत्येताभ्यामपोर्वाभ्यां युक्तमनन्तरं तिङन्तं नानुदात्तं भवति । आहो भुङ क्ते । उताहो भुङ्क्ते । आहो पठति । उताहो (१) पठति । अनन्तरमिति किम्? शेषे विभाषां वक्ष्यति । अपूर्वमित्येव । देवदत्त आहोभुङ्क्ते । देवदत्त उताहो भुङक्ते ॥

## ३६६३. शेषे विभाषा ॥ ५० ॥

आहो उताहो इत्येताभ्यां युक्तं तिङन्तं नानुदात्तं शेषे विभाषा भवति । कश्च शेषः? यदन्यदनन्तरात् । आहो देवदत्तः पचति २ । उताहो देवदत्तः पचति २ । आहो देवदत्तः पठति २ । उताहो देवदत्तः पठति २ ॥

## ३६६४. गत्यर्थलोटा लृणनचेत्कारकं सर्वान्यत् ॥ ५१ ॥

गमिना समानार्था गत्यर्थाः, (२) गत्यर्थानां लोट् गत्यर्थलोट्, तेन गत्यर्थलोटा युक्तलृडन्तं तिङन्तं नानुदात्तं भवति न चेत्कारकं सर्वान्थद्भवति । यत्रैव कारके कर्त्तरि कर्म्मणि वा लोट् तत्रैव यदि लृडपि भवतीत्यर्थः । कर्तृकर्मणी एवात्र तिङन्तवाच्ये कारकग्रहणेन गृह्येते । न करणादि कारकान्तरम् । आगच्छ देवदत्त ग्रामं द्रक्ष्यस्येनम् । आगच्छदेवदत्त ग्राममोदनं भोक्ष्यसे । उद्यन्तां शालयः – तेनैव भोक्ष्यन्ते । उद्यन्तां देवदत्तेन शालयः, यज्ञदत्तेन भोक्ष्यन्ते । गत्यर्थग्रहणं किम्? पच देवदत्तौदनं भोक्ष्यस एनम् । लोटेति नम् । न चेत्कारकं सर्वान्यदिति किम्? आगच्छ देवदत्त ग्रामं पिता ते ओदनं भोक्ष्यते । उह्यन्तां देवदत्तेन शालायः

सक्तवस्तेन पास्यन्ते । सर्वग्रहणं किम्? आगच्छ देवदत्त ग्रामं त्वं चाहं च द्रक्ष्याव एनमित्यत्रापि निघातप्रतिषेधो यथा स्यात् । लृडन्तवाच्ये हि सर्वस्मिन् कारकेऽन्यस्मिन्न भवितव्यम् । इह तु यल्लोडन्तस्य कारकं तच्चानच्च लृडन्तेनोच्यते इति ॥

### ३६६५. लोट् च ॥ ५२ ॥

पेरन्तं तिङन्तं गात्यर्थलोटा युक्तं नानुदात्तं भवति, न चेत्कारकं सर्वान्यद्भवति। लोकरेकं कारकं यदि भवतीत्यर्थः । आगच्छ देवदत्त ग्रामं पश्य । आव्रज विष्णुमित्र ग्रामे लधि । आगम्यतां देवदत्तेन ग्रामो दृश्यतान् । गत्यर्थानामित्येव– पच देवदत्तौदन चवेनम् । लोटेत्येव – आगच्छेर्देवदत्त ग्रामं पश्यैनम् । न चेत्कारकं सर्वान्यदित्येव । अगच्छ देवदत्त ग्रामं पश्यत्वेनं यज्ञदत्तः । सर्वग्रहणानुवृत्तेस्त्विह भवत्येव । आगच्छ देव ग्रामं त्वम् चाहं च पश्याव । पृथग्योगकरणमुत्तरार्थम् ॥

### ३६६७. विभाषितम् सोपसर्गमनुत्तमम् ॥ ५३ ॥

सर्व पूर्वमनुवर्त्तते । प्राप्तविभाषेयम्, लोडन्तं सोपसर्गमुत्तमवर्जितं गत्यर्थलोटा युक्तं तिङन्तं विभाषितं नानुदार्त्त भवति, न चेत्कारकं सर्वान्यद्भावति । आगच्छ देवदत्त ग्रामं प्रविश २ । आगच्छ देवदत्त ग्रामं प्रशाधि २ । सोपसर्गमिति किम्? आगच्छ देवदत्त ग्रामं पश्य । अनुत्तममिति किम्? आगच्छानि देवदत्त ग्रामं प्रविशानि ॥

### ३६६८. हन्त च ॥ ५४ ॥

पूर्व सर्वमनुवर्त्तते गर्यर्थलोटं वर्जयित्वा । हन्त इत्यनेन युक्तं लोडन्तं सोपसर्गमुत्तमवर्ज्जितं विभाषितं नानुदात्तं भवति । हन्त प्रविश २ । हन्त पशाधि २ । सोपसर्गमित्येव, हन्त कुरु । निपतैर्यद्यदिहन्तेति नित्यमत्र निघातप्रतिषेधो भवति । अनुत्तममित्येव, हन्त प्रमुञ्जावहै । हन्त प्रभुञ्जामहै ॥

### ३६६९. आम एकान्तरमामन्त्रितमनन्तिके ॥ ५५ ॥

आम उत्तरमेकपदान्तरमामन्त्रितान्तमनन्तिके नानुदात्तं भवति । आम् पचसि

देवदत्त ३। आम् भो देवदत्त ३। भो इत्यामन्त्रितान्तमपि, नामन्त्रिते समानाधिकरणे सामान्यवचनमिति नाविद्यमानवद्भवति। आम इति किम्? शाकं पचसि देवदत्त ३। एकान्तरमिति किम्। आम् प्रपचसि देवदत्त ३। आमन्त्रितमिति किम् ? आम्पचति देवदत्तः। अनन्तिक इति किम्? आम् देवदत्त। आम एकान्तरमामन्त्रितं यत्तस्य एकश्रुतेरनुदात्तस्य च प्रतिषेध इष्यते। तदुभयमनेन क्रियत इति केचिदाहुः। प्लुतोदात्तः पुनरसिद्धत्वान्न प्रतिषिद्ध्यते। अपरेषां दर्शनमनन्तिक इत्यनेन यन्न दूरं न संन्निकृष्टं तत्परिगृह्यते। तेनास्मिन्नेकश्रुतेः प्राप्तिरेव नास्ति। प्लुतोदात्तोऽपि नोदाहर्त्तव्य इति ॥

### ३६७०. यद्धितुपरं छन्दसि ॥ ५६ ॥

आमंन्त्रितमित्येतदस्वरितत्वान्नानुवर्त्तते। तिङिति वर्त्तत एव। यत्परं हिपरं च तिङन्तं छन्दसि नानुदात्तं भवति। यत्परं तावत् – गवां गोत्रमुदसृजो यदङ्गिरः। हिपरम्–इन्दवो वामुशन्ति हि। तुपरम्–आख्यास्यामि तु ते। निपातैर्यद्यदिहन्तेति हि चेति तुपस्यपश्यताहैरिति च निघातप्रतिषेधे सिद्धे वचनमिदं नियमार्थम्– एभिरेव परैर्योगे प्रतिषेधो भवति, नान्यैरिति। इह न भवति – जाये स्वोरोहावैहि। एहीत्यनेन गत्यर्थलोटा युक्तस्य रोहावेत्यस्य लोडन्तस्य निघातो भवत्येव ॥

### ३६७१. चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः ॥ ५७ ॥

चन चिद् इव गोत्रादि तद्धित आम्रडित इत्येतेषु परतः अगतेरुत्तरं तिङन्तं नानुदात्त भवति। चन – देवदत्तः पचति चन। चित्–देवदत्तः पचति चिद्। इव– देवदत्तः पचतीव। गोत्रादि–देवदत्तः पचति गोत्रम्। देवदत्तः पचति ब्रुवम्। देवदत्तः पचति प्रवचनम्। इहापि गोत्रादयः कुत्सनाभीक्ष्ण्ययोरेव गृह्यन्ते। तद्धित– देवदत्तः पचतिकल्पम्। देवदत्तः पचतिरूपम्। अनुदात्तस्तद्धित इह उदाहरणमन्यत्र तद्धितस्वरेण तिङ्स्वरो बाध्यते–पचतिदेश्यः। आम्रेडित–देवदत्तः पचति २। अगतेरिति किम्? देवदत्तः प्रपचति चन। यत्काप्ठं शुक्लीकरोति। यत्काष्ठं कृष्णीकरोति ॥

### ३६७२. चादिषु च ॥ ४८ ॥

चादिषु च परतः तिङन्तमगतेः परं नानुदात्तं भवति। चादयो नचवाहाहैवयुक्ते

इत्यत्र ये निर्दिष्टाः त इह परिगृह्यन्ते । चशब्दे तावत्–देवदत्तः पचति च खादति च। वा–देवदत्तः पचति वा खादति वा । ह – देवदत्तः पचति ह खादति ह । अह–देवदत्तः पचत्यह खादत्यह । एव–देवदत्तः पचत्येव खादत्येव । अगतेरित्येव। देवदत्तः प्रपचति च प्रखादति च । प्रथमस्यात्र तिङन्तस्य चषायोगे प्रथमेति निघातःप्र तिषिद्ध्यते, एवपरंतु निहन्यते ॥

## ३६७३. चवायोगे प्रथमा ॥ ५९ ॥

अगतोरिति पूर्वसूत्रे चानुकृष्टमित्यत्र नानुवर्त्तते । व वा इत्येताभ्यां योगे प्रयमा तिङ्विभक्तिर्नानुदात्ता भवति । गद्र्धभांञ्ज कालयति । वीणां च वाचयति । गदर्दभान् वा कालयति । वीणां च वादयति । गदर्दभान् वा कालयति, वीणां वा वादयति । योगग्रहणं पूर्वभ्यामपि योगे निघातप्रतिषेधो यथा स्यादिति । प्रथमाग्रहणं द्वितीयादेस्तिङन्तस्य मा भूदिति । चवायोगो हि द्विसमुञ्चये विकल्पे च सति भवति । स सानेकस्य धर्म इति ॥

## ३६७४. हेति क्षियायाम् ॥ ६० ॥

ह इत्यनेन युक्ता प्रथमा तिङविभक्तिर्नानुदात्ता भवति क्षियायां गम्यमानायाम्। क्षिया धर्मव्यतिक्रमः, आचारभेदः । स्वयं ह रथेन याति ३ उपाध्यायं पदार्ति गमयति । स्वयं हौदनं भुङ्क्ते ३ उपाध्यायं सक्तून् पाययति । पथमस्य तिङन्तस्यात्र निघातः प्रतिषिध्यते । क्षियाशीःप्रैषेषु तिङाकौक्षमिति च प्लुतो भवतो ।

## ३६७५. अहेति विनियोगे च ॥ ६१ ॥

अह इत्यनेन युक्ता प्रथमा तिङविभक्तिर्नानुदात्ता भवति विनियोगे गम्यमाने, चशब्दात् क्षियायां च । नानप्रयोजनो नियोगो विनियोगः । त्वमह ग्रामं गच्छ । त्वमहारण्यं गच्छ । क्षियायाम्–स्वयमह रथेन याति ३ उपाध्यायं पदार्ति गमयै । स्वयमहौदनं भुङ्क्ते ३ उपाध्यायं सक्तून्पाययति । पूर्ववन्निघातप्रतिषेधः प्लुतश्च ॥

## ३६७६. चाहलोप एवेत्यवधारणम् ॥ ६२ ॥

चलोपे अहलोपे च प्रथमा तिङ्विभक्तिर्नानुदात्ता भवति । एवेत्येतच्चेदवधारणार्थ प्रयुज्यते । क्व चास्य लोपः? यत्र गम्यते चाऽर्थो न च प्रयुज्यते, तत्र लोपः । तत्र

च शब्दः समुञ्चयार्थः, अहशब्दः केवलार्थ इति समानकर्तृके चलोपः नानाकर्तृके अहलोपः । चलोपे–देवदत्त एव ग्रामं गच्छतु देवदत्त एवारण्यं गच्छतु । ग्रामं चारण्यं च गच्छत्वित्यर्थः । अहलोपोए–देवदत्त एव ग्रामं गच्छतु यज्ञदत्त एवारण्यं गच्छतु । ग्रामं केवलमरण्यं केवलमित्यर्थः । अवधारणमिति किम्? देवदत्तः क्वेव भोक्ष्यते । अनवक्लृप्तावयमेवशब्दः । न क्विचिद्भोक्ष्यत इत्यर्थः । एवे चानियोग इति पररूपम् ॥

## ३६७७. चादिलोपे विभाषा ॥ ६३ ॥

चादयो नचवाहाहैवयुक्त इति सूत्रनिर्दिष्टा गृह्यन्ते, तेषां लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता भवति विभाषा । चलोपे–शुक्ला वीहयो भवन्ति २ श्वेता गा आह्याव दुहन्ति । भवन्तीत्येतद्विकल्पेन न निहन्यते । वालोपे–व्रीहिभिर्यजेत । यवैर्यजेत । एवं शेषेष्वपि यथादर्शनमुदाहार्यम् ॥

## ३६७८. वैवावेति च च्छन्दसि ॥ ६४ ॥

वै वाव इत्येताभ्यां युक्ता प्रथमा तिङ्विभक्तिर्विभाषा नानुदात्ता भवति छन्दसि विषये । अहर्वै देवानामासीत् २ रात्त्रीरसुराणामासीत् । वृहस्पतिर्वै देवानाम् पुरोहित आसीत् २ शण्डामर्कावसुराणाम् । वाव–अयं वाव हस्त आसीत् २ नेतर आसीत् ॥

## ३६८०. एकान्याभ्यां समर्थाभ्याम् ॥ ६५ ॥

एक अन्य इत्येताभ्याम् समर्थाभ्यां युक्ता प्रथमा तिङ्विभक्तिर्विभाषा नानुदात्ता भवति छन्दसि विषये । प्रजामेका जिन्वति २ ऊर्जमेका रक्षति । जिन्वतीत्येतर्पक्षे निहन्यते । तयोरन्यः पिप्पलं स्वाद्वत्ति २ अनश्नन्नन्यो अभिचाकशीति । अत्तीत्येतत् पक्षे न निहन्यते । समर्थाभ्यामिति किम्? एको देवानुपातिष्ठत् । एक इति संख्यापदमेतद् अन्यार्थे न वर्त्तते । एकशब्दस्य व्यवस्थार्थ च समर्थग्रहणं व्यभिचारित्वात्तस्य ॥

## ३६८१. यद्वृत्तान्नित्यम् ॥ ६६ ॥

प्रथमा छन्दसीति निवृत्तं, निघातप्रतिषेध इत्येव । यदो वृत्तं यद्वृत्तम् । यत्र पदे यद्वर्त्तते तत्सर्व यद्वृत्तम् । इह वृत्तग्रहणेन तद्विभवत्यन्तं प्रतीयात् । डतरडतमौ

च प्रत्ययौ इत्येतन्नाश्रीयते । तस्माद्यद्वृत्तादुत्तरं तिङन्तं नानुदात्तं भवति नित्यम् । यो भुङ्क्ते । यं भोजयति । येन भुङ्क्ते । यस्म ददाति । यत्कामास्ते जुहुमः । यदद्र्यङ् वायुर्वाति । यद्वायुः । पञ्चमीनिर्देशेऽप्यत्र व्यवहिते कार्यमिष्यते ॥

## ३६८२. पूजनात्पूजितमनुदात्तं काष्ठदिभ्यः ॥ ६७ ॥

पूजनेभ्यः काष्ठादिभ्य उत्तरपदं पूजितमनुदात्तं भवति । काष्ठ–काष्ठाध्यापकः। काष्ठा–भिरूपकः । दारुण–दारुणाध्यापकः । दारुणाभिरूपकः । अमातापुत्र–अमातापुत्राध्यापकः । अयुत–अयुताभिरूपकः । अयुताध्यापकः । अद्भुत–अद्भुताध्यापकः । अनुक्त–अनुक्ताध्यापकः । भृश–भृशाध्यापकः । घोर–घोराध्यापकः। परम–परमाध्यापकः। सु–स्वध्यापकः। अति–अत्यध्यापकः (१)। मलोपश्च । इति वार्तिककारमतम् । मयूरव्यंसकादित्वात्समासः । समासे चैतदन्दात्तत्वम्। समासान्तोदात्तत्वापवाद इष्यते । दारुणमध्यापक इत्येवमादिषु न भवति। मलोपश्चेत्यनेनाप्ययमेव विषय आख्यायते। यत्र बिभक्तेरभावात् मकारो न श्रूयते तत्रानुदात्तत्वमिति । असमासे हि मलोपो नैवेप्यते । दारुणमधीते दारुणमध्यापक इति । पूजनादित्येव पूजितपरिग्रहे सिद्धे पूजितग्रहणमनन्तरपूजितप्रतिपत्यर्थम्। एतदेव ज्ञापकभिह प्रकरणे पञ्चमीनिर्द्देशेऽपि नानन्तर्यमाश्रीयते इति । तथा च यद्वृत्तान्नित्यमित्यत्रोदाहृतम् । अनुदात्तमिति वर्त्तमाने पुनरनुदात्तग्रहणं प्रतिषेधनिवृत्त्यर्थम्॥

## ३६८३. सगतिरपि सिङ् ॥ ६८ ॥

सगतिरगतिरपि पूञ्जनेभ्यः काष्टादिभ्यह् परं पूजितं तिङन्तमनुदात्तं भवति । यत्काष्ठं पचति । यत्काष्ठं प्रपचति । यद्दारुणं पचति । यद्दारुणं प्रपचति । तिङ्ङ्तिङ इति निघातस्य निपातैर्द्यत्यदिहन्तेति प्रतिषेधे प्राप्ते पुनर्बिधानम् । सगतिग्रहणाञ्च गतिरपि निहन्यते। गतिग्रहणे चाञ उपसर्गग्रहणमिष्यते। इह न भवति – यत्काष्ठं शुक्लीकरोति । यत्काष्ठं कृष्णीकरोति ॥

## ३६८४. कुत्सने च सुप्यगोत्रादौ ॥ ६९ ॥

पदादिति निवृत्तम्। सगतिरपि तिङिति वर्त्तते। कुत्सने च सुबन्ते गोत्रादिवर्जिते परतः सगतिरपि तिङ् अगतिरप्यनुदात्तो भवति । पचति पूति । प्रपचति पूति ।

पचति मिथ्या । ग्रपचति मिथ्या । कुत्सन इति किम्? पचति शोभनम् । सुपीति किम्? पचति क्लिश्नाति । अगोत्रादाविति किम्? पचति गोत्रम् । पचति ब्रुवम् । पचति प्रवचनम् । क्रियाकुत्सन इति वक्तव्यम् । कर्त्तः कुत्सने मा भूत्–पचति पूतिर्देवदत्तः । प्रपचति पूति । पूतिश्च चानुयन्धो भवतीति वक्तव्यम् । तेनायं चकारानुबन्वकत्यात् अन्तोदात्तो भवति । विभाषितं चापि बह्वर्थमनुदात्तं भवतीति वैक्तव्यम् । पचन्ति पृति २ । प्रपचन्ति पूति २ ॥

सुपि कुत्सने क्रियाया मलोप इष्टोऽतिङीति चोक्तार्थे ।

पूतिश्च चानुबन्धो विभाषितं चापि बह्वर्थम् ॥

### ३६८५. गतिर्गतौ ॥ ७० ॥

गतिर्गतौ परतोऽनुदात्तो भवति । अभ्युद्धरति । समुदानयति । अभिसंपर्याहरति । गतिरिति किम्? देवदत्तह् प्रपचति । गताविति किम्? आ मन्द्रैरिन्द्र हरिभिर्या हि मयूररोमभिः । याहीत्येतत् प्रति क्रियायोगादाङित्येष गतिः, तस्य गतावित्येतस्मिन्नसति गतिरित्यनाश्रितपरनिमित्तेकमनुदात्तत्वं स्यात् ॥

### ३६८६. तिङि चोदात्तवति ॥ ७१ ॥

गतिरिति वर्त्तते । तिङन्ते उदात्तवति परतो गतिरनुदात्तो भवति । यत्प्रपचति । यत्करोति । तिङ्ग्रहणमुदात्तवतः परिमाणार्थम् । अन्यथा हि यं प्रति गतिस्तत्रानुदात्तो भवतीति धातावेवोदात्तवति स्यात्, प्रत्यये न स्यात् – यत्प्रकरोतीति । यत्क्रियायुक्ताः प्रादयस्तेषां तं प्रति गत्युपसर्गसंज्ञे भवत इति तिङन्ते धातुमेव प्रति अगतिसंज्ञा । आमन्ते तर्हि न प्राप्नोति–प्रपचतितराम्, प्रपचतितमामिति? अत्र केचिदामन्तेन गतेः समासं कुर्वन्ति । तेषामव्ययपूर्वपदप्रकृतिस्वरत्वे सत्यक्रियमाणेऽपि तिङग्रहणे परमनुदात्तवद्भावतीति गतिनिघातो नैव सिद्ध्यति । अथ तरवन्तस्य गतिसमास एवमपि सतिशिष्टत्वादाम एव स्वरे सति गतेरनुदात्तम् पदमेकवर्जमित्येवानुदात्तत्वं सिद्धम् । येषां गतिकारकोपपदानां कृद्भिः समासवचनं प्रकसुबुत्पत्तेरित्थनेन वचनेन कृदन्तेनैव प्राक्सुवुत्पत्तेः समासो भवति नान्येनेति दर्शनम्, तेषामेवंविधे विषये समासेन नैव भवितव्यमिति । पृथक् स्वरप्रवृत्तौ सत्त्यामनेन प्रयोमनमस्ति । तदर्थं यत्नः कर्त्तव्यः । उदात्तवतीति किम्? प्रपचति ।

### ३६८७. आमन्त्रितं पूर्वमविद्यमानवत् ॥ ७२ ॥

आमन्त्रितं पूर्वमविद्यमानवद्भवति तस्मिन् सति यत्कार्य तन्न भवति । असति यत्तद्भवति । कानि पुनरविद्यमानवत्त्वे प्रयोजनानि । आमन्त्रिततिङ्निघातयुष्मदस्मदा- देशाभावाः । देवदत्त यज्ञदत्तेत्यत्रामन्त्रितस्य पदात्परस्येति निघातो न भवति । षाष्ठिकामन्त्रिताद्युदात्तत्वं भवति । देवदत्त पचसीत्यत्र तिङ्ङतिङ इति निघातो न भवति देवदत्त तव ग्रामः स्वम्, देवदत्त मम ग्रामः स्वमित्येवमादिषु युष्मदस्मदादेशा न भवन्ति । पूजायामनन्तरप्रतिषेधः प्रयोजनम् । यावद्देवदत्त पचसीत्यत्रापि पूजायां नानन्तरमित्येव प्रतिषेधो भवति । जात्वपूवमित्येतद्- देवदत्त जातु पचसीत्यत्रापि भवति । आहो उताहो चानन्तरमिति-अहो देवदत्त पचसि, उताहो देवदत्त पचसीत्यत्रापि भवति । आम एकान्तरमामन्त्रितमनन्तिक इति-आम् भो पचसि देवदत्त इत्यत्रापि भवति । आमन्त्रितमिति किम्? देवदत्तः पचति । पूर्वमिति किम्? देवदत्त इत्येअस्यामन्त्रिताद्युदात्तत्वे कर्त्तव्ये नाविद्यमानवद्भवति । पूर्वत्वं च परापेक्षं भवतीति परस्यैव कार्ये स्वनिमित्तेऽन्यनिमित्ते वा तदविद्यमानवद्भवति, न तु स्वकार्ये । देवदत्त पचसीत्यत्रापि ह्यामन्त्रिताद्युदात्तत्वं भवत्येव । इह इमं मे गङ्गे यमुने इति गङ्गेशब्दः पूर्वमामन्त्रितं ततः परस्य यमुने शब्दस्यानुदात्तत्वे कर्त्तव्ये स्वयमविद्यमानवत्त्वान्निमित्तं न भवति । मेशब्दस्य निमित्तभावं न प्रतिबध्नाति ॥

## ३६८८. नामन्त्रिते समानाधिकरणे सामान्यवचनम् ॥ ७३ ॥

अविद्यमानवत्त्वस्य प्रतिषेधः । आमन्त्रितान्ते समानाधिकरणे परतः पूर्वमामन्त्रितान्तं सामान्यवचनं नाविद्यमानवद्भवति । किं तर्हि? विद्यमानवदेव । अग्ने गृहपे माणवक जटिलकाध्यापक पूर्वस्य विद्यमानवत्त्वात्परमनुदात्तमेव भवति। आमन्त्रित इति किम्? देवदत्त पचसि । समानाधिकरण इति किम्? देवदत्त पण्डित यज्ञदत्त । अत्र यज्ञदत्तविशेषणं पण्डितशब्दः न पूर्वेण समानाधिकरणः । सामान्यवचनमिति किम्? पर्यायेषु मा भूत्-अघ्न्ये देवि सरस्वति ईडे काव्ये विहव्ये । पर्यायशब्दा एते । एवं ह्युक्तमेतानि ह्यघ्न्येनामानीति ॥

## ३६८९. विभाषितं विशेषवचने बहुवचनम् ॥ ७४ ॥

पूर्वेणाविद्यमानवत्वे प्रतिषिद्धे विकल्प उच्यते । विशेषवचने समानाधिकरणे आमन्त्रितान्ते परतः पूर्वमामन्त्रितं बहुवचनान्तं विभाषितमविद्यमानवद्भवति । देवाः शरण्याः २ । ब्राह्मणा वैयाकरणाः २ । सामान्यवचनाधिकारादेव विशेषवचन इति सिद्धे विशेषवचनग्रहणं विस्पष्टार्थम् । बहुवचनमिति किम्? माणवक । जटिलक।

नित्यमेतद्विद्यमानवदेव ॥

इति श्रीवामनविरचितायां काशिकायां वृ्त्तावष्टः
माध्यायस्य प्रथमः पादः ॥

# अथ अष्टमाध्ययस्य
# द्वितीयः पादः ॥

## ३६९०. पूर्वत्रासिद्धम् ॥ १ ॥

पूर्वत्रासिद्धमित्यधिकार आध्यायपरिसमाप्तेः । यदित ऊदर्ध्व मनुक्रमिष्यामाः पूर्ववासिद्धमित्येवं तद्वेदितव्यम् । तत्र येयं सपादसप्ताध्याय्यनुक्रान्ता एतस्यामयं पादोनोऽध्यायोऽसिद्धो भवति । इत उतरं चोत्तरोत्तरो योगः पूर्वत्र पूर्वत्रासिद्धो भवति । असिद्धबद्भवति (१) । सिद्धकार्य न करोतीत्यर्थः । तदेतदसिद्धत्ववचनमादेश–लक्षणप्रतिषेधार्थम्, उत्सर्गलक्षणभावार्थ च करोतीत्यर्थः । तदेतदसिद्धत्ववचनमादेश–लक्षणप्रतिषेधार्थम्, उत्सर्गलक्षणभावार्थ च । अस्मा उद्धर । द्वा अत्र । द्वा आनय । असा आदित्यः इत्यत्र व्यलोपस्यासिद्धत्वाद् आद्गुण इत्यकः सवर्णे दीर्घ इति च न भवति । अमुष्मै । अमुष्मात् । अमुष्मिन् इति उत्वस्यासिद्धत्वात् स्मायादयो भवन्ति ॥

शुष्किका शुष्कजङ्घा च क्षामिमानौजढत्तथा ।
मतोर्वत्त्वे झलां जश्त्वे गुडलिण्मान्निदर्शनम् ॥

शुष्किकेत्यत्र शुषः क इयस्यासिद्धत्वाद् उदीचामातः स्थाने यकपूर्वाया इत्येतन्न भवति । शुष्कजङ्घा इति न कोपधाया इति पुंवद्भावप्रतिषेधो न भवति । क्षामिमानिति क्षामस्यापत्यम् क्षामिः, क्षामो वा अस्यास्तीति क्षामी । क्षामिः क्षामी वा यस्यास्तीति क्षामिमान् । क्षायो म इत्यस्यासिद्धत्वान्मादुपधायाश्चेति वत्वं न भवति । औजढविति वहेर्निष्ठायामूढस्यमाख्यदिति णिच् तदन्ताल्लुङ् । चङीति द्विर्वचने कर्त्तव्ये ढत्वधत्वष्टुत्वढलोपानामसिद्धत्वाण्णौ च यष्टिलोपस्तस्य स्थानिवद्भावाद् हत इत्येतद् द्विरुच्यते । अनग्लोप इति प्रतिषेधात्सन्वदित्त्वं नास्ति । तेन औजढदिति भवति । औजिढदित्येतत्तु क्तिन्नन्तस्य उढिशब्दस्य भाति ।

गुडलिमानिति गुडलिहोऽस्य सन्ति इति मतुप् । तत्रढत्वजश्त्वयोरसिद्धत्वाद् क्षय इति वत्वं न भवति । येऽत्र षष्ठीनिद्दशाः सप्तमीनिर्द्देशाः पञ्चमीनिदर्देशाश्च तेषां षष्ठी स्थानेयोगा, तस्मिन्निति निदिष्टे पूर्वस्य, तस्मादित्युत्तरस्येति च कर्त्तव्ये नासिद्धत्वं भवति । कार्यकालं हि संज्ञापरिभाषमिति पूर्वत्वमसां परिभाषाणां नास्तीति। विप्रतिषेधे परमित्येषा तु परिभाषा येन पूर्वेण लक्षणेन सह स्पर्द्धते पर लक्षणं तत्प्रति तस्यासिद्धत्वान्न प्रवर्त्तते । तथाच सति विस्फोर्यमवगोर्यमिति गुणः परेण हलिचेति दीर्घत्वेन न बाध्यते । अपवादस्य तु परस्यापि उत्सर्गे कर्त्तव्ये वचनप्रामाण्यादसिद्धत्वं न भवति ।

## ३६९१. नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ॥ २ ॥

नलोपः पूर्वत्रासिद्धो भवै सुब्विधौ स्वरविधौ संज्ञाविधौ तुग्विधौ च कृति । विधिशब्दोऽयं प्रत्येकमाभसंबध्यमानः स्वरसंज्ञातुकां विधेयत्वात्तैः कर्म्मषष्ठीयुक्तैर्भवसाधनोऽभिसंवध्यते । सुपा तु सम्बच्धसामान्यवचनषष्यन्तेन कर्म्मसाधनः । तेन सुपः स्थाने यो विधिः सुपि च परभूते, सर्वोऽसौ सुब्विधिरिति सर्वत्रासिद्धत्वं भवति । सुब्विधौ तावत्–राजभिः तक्षभिरित्यत्र नलोपस्यसिधत्वादतो भिस ऐसिति न भवति । राजभ्याम्, तक्षभ्याम्, राजसु, तक्षस्विति, सुपि चेति, बहुवचने झल्येदिति दीर्घत्वमेत्वं च न भवति । स्वरविधौ–राजवतीत्यत्र नलोपस्यासद्धत्वादन्तोवत्या इति न भवति । पञ्चार्म दशार्ममिति । अत्र नलोपस्यासिद्धत्वाद् अर्मे चावर्णद्व्यजिति पूर्वपदस्याद्युदात्तत्वं न भवति । पञ्च्बीजीत्यत्र नलोपस्यासिद्धत्वादिगन्ते द्विगाविति पूर्वपदप्रकृतिस्वरो न भवति । सज्ञाविधौ–पञ्च ब्राह्मण्यो, दश ब्राह्मण्य इति नलोपस्यासिद्धत्वात् ष्णान्ता षडिति षट्संज्ञा भवति । ततश्च न षट्स्वस्रादिभ्य इति टापः प्रतिषेधो भवति । तदेतत्कथं प्रयोजनं भवति, यदि प्रतिकार्यं संज्ञाप्रवृत्तिरित्येतदृर्शनम् । या हि जश्शसोर्लुगर्था षट्संज्ञा प्रवृत्ता तया स्त्रीप्रत्ययप्रतिषेधो न क्रियत इति सा पुनः प्रवर्त्तयितष्येति । तुग्विधौ – वृत्रहभ्याम्, वृत्रह–भिरिति नलोपस्यासिद्धत्वाधहस्वस्य पिति कृति तुगिति तुग्न भवति । अत्र केचित् सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति तुकं प्रति नलोपस्यानिमित्तत्वाद् बहिरङ्गलक्षणेन वाऽसिद्धत्वात्तुग्विधिग्रहणमनर्थकमिति प्रतिपन्नाः, तत्तु क्रियते परिभाषाद्वयस्यानित्यत्वं ज्ञापयितुम् । कृतीति किम्? वृत्रहच्छत्रम्। वृत्रहच्छाया । छे चेति तुग्भवति । अत्र सिद्धे सत्यारभ्भो नियमार्थः

। एतेष्वेव नलोपोऽसिद्धो भवति, नान्यत्र । तेन राजीयति, राजायते, राजाश्व इति ईत्वं दीर्घत्वमेकादेशश्च सिद्धो भवति ॥

## ३६९२. न मु ने ॥ ३ ॥

मुभाषो नाभावे कर्त्तव्ये नासिद्धो भवति । किं तर्हि? सिद्ध एव । अमुना । मुभावस्यासिद्धत्वाद् घिलक्षणो नाभावो न स्यात् । कृते तु नाभावे मुभावस्यासिद्धत्वात्, सुपि चेति दीर्घत्वं यत्प्राप्नोति तत्सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न भवति । अथवा योगद्वयमिदमुभयार्थं तन्त्रेणोच्चारितम् । अथवा ने परतो यत्प्राप्नोति तस्मिन् कर्त्तव्ये मुभावो नासिद्ध इत्येष एवात्र सूत्रार्थः । ने तु कर्त्तव्ये मुभावस्य यत्सिद्धत्वं तदर्थतो गृहीतम् । तेनात्र मुभावस्य सिद्धत्वान्नाभावश्च भवति । दीर्घत्वम् च न भवति । एकादेशस्वरोऽन्तरङ्ग सिद्धो वक्तव्य । किं प्रयोजनम्? अयायावेकादेशशतृस्वरैकाननुदात्तसर्वानुदातर्थम् । वृक्ष इदम्, प्लक्ष इदम् । अत्र प्रातिपदिकान्तसप्तम्येकवचनयोरुदात्तानुदात्तयोरेकादेशः । स एकादेश उदात्तेनोदात्त इत्युदात्तः । तस्य सिद्धत्वं वक्तव्यम् । आन्तर्यतः अयादेश उदात्तो यथा स्यात् । आय्–कुमार्या इदम् । कथमिदमुदाहरणम्? यदि उदात्तयणो हल्पूर्वादित्युदात्तत्वे कृते विभक्तेराटश्चेत्येकादेशस्तदा भवतीदमुदाहरणम् । अथ कृते एकादेश उदात्तयणो हलपूर्वादिति स्वरस्तदा नैतदस्य प्रयोजनं भवति । आव्–वृक्षाविदं प्लक्षाविदम् । एकादेशस्वरः – गाङ्गेऽनूप इति गाङ्गे शब्दे एकार एकादेश उदात्तेन इत्युदात्तः । तस्य सिद्धत्वाद् यः प्यनरेङः पदान्तादतीति एकादेशः स एकादेश उदात्तेनोदात्त इति, स्वरितो वाऽनुदात्त पदादाविति, एतद्भवति । शतृस्वरः – तुदती । तुदते । अदुपदेशादिति लसार्वधातुकानुदात्तत्वे कृते एकादेशः तदुदात्तस्य सिद्धत्वात्, शतुग्नुमो नद्यजादी, अनोदात्तादिति, एष स्वरो भवति । अनुम इति प्रतिषेधो ज्ञापकः – एकादेशस्वरः शतृस्वरे सिद्ध इति । न हि सनुमं शत्रन्तं किंचिदेकादेशस्वरमन्तरे–णानोदात्तमस्ति । एकाननुदात्तः – तुदन्ति । लिखन्ति । एकादेशस्वरमन्तरेणान्तोदात्त–मस्ति । एकाननुदात्तः – तुदन्ति । लिखन्ति । एकादेशस्वरस्य सिद्धत्वाद् अनुदात्तं पदमेकवर्जमिति वर्ज्यमानता भवति । सर्वानुदात्तः –ब्राह्मणास्तुदन्ति । ब्राह्मणा लिखन्ति । एकादेशस्वरस्य सिद्धत्वाद् कृते तस्मिस्तिङ्ङतिङ इति निघातो भवति । अन्तरङ्ग इति वचनाद् बहिरङ्गस्यासिद्धत्वमेव पचतीति । प्रपचतीति । संयोगान्तस्य लोपो रोरुत्वे सिद्धो वक्तव्यः । किं प्रयोजनम्?

हरिवो मेदिन त्वा । हरिव इति मतुयन्तमेतत् । तत्र छन्दसीर इति वत्वं संयोगान्तस्य लोपे च कृते, मतुवसो रु संभुद्धौ छन्दसीर इति वत्वं संयोगान्तस्य लोपे च कृते, मतुवसो रु संबुद्धौ छन्दसीति रुत्वम् । तस्य संयोगान्तस्य लोपस्यासिद्धत्वाद्धशि चेत्युत्वं न प्राप्नोति। सिज्लोप एकादेशे सिद्धो वक्तव्यः । अलावीत् । अपावीत् । इट ईटीति सिज्लोपस्य सिद्धत्वात् सवर्णदीर्घत्वं भवति । निष्ठादेशः षत्वस्वरप्रत्ययविधीड्विधिषु सिद्धो वक्तव्यः । वृक्णः । वृक्णवान् । निष्ठादेशस्य सिद्धत्वात् झलीति षत्वं न भवति । कुत्वं प्रत्यसिद्ध एवेति तद्भवति । स्वरप्रत्ययविधीड्विधिषु क्षीवशब्द उदाहियते । तत्र च निपातनमनेकधा समाश्रीयते । यदा क्षीबेर्निष्ठायामिटि कृते इतशब्दलोपो निपात्यते तदा क्षिब इति संज्ञाथामित्शब्दलोपस्याऽसिद्धत्वान्निष्ठा च द्व्यजनादित्येष स्वरो न प्राप्नोति । क्षीबेन तरति क्षीबिक इति द्वयज्लक्षणष्ठन्न प्राप्नोति । यदा तु तुकारलोपो निपात्यते तदा तस्यासिद्धत्वादिडागमः प्राप्नोति । प्लुतविकारस्तुग्विधौ छे सिद्धो वक्तव्यः । अग्ना३ इच्छत्रम् । पटा३ उच्छत्रम् । प्लुतविकारस्या-सिद्ध्त्वाच्छे चेति ह्रस्वलक्षणस्तुग्नित्यं न प्राप्नोति । श्चुत्वं धुटि सिद्धं वक्तव्यम्। श्च्युतिर् क्षरणे इत्ययं धातुः सकारादिः पठ्यते । तस्य श्चुत्वस्यासिद्धत्वाद् अटश्च्योतति, रटश्चोतति इति डः सि धुट् इति प्राप्नोति । अटतीत्यड् । रटतीतिरड् । क्विबन्तोऽयम्। किमर्थं पुनः सकारादिः पठ्यते? इह मधु श्च्योततीति मधुश्युत् । क्विबन्तः । मधुश्च्यु तमाचष्टे इति णिच् । मधुश्च्ययति । मधुश्च्ययतेः पुनः क्विपि कृते संयोगादित्वात् सलोपः संयोगान्तलोपेन यकारचकारयोर्लुप्तयोः शकारस्य षत्वे सति मधुडिति स्यात् । अभ्यासजश्त्वचर्त्वे एत्वतुकोः सिद्धे वक्तव्ये । बभणतुः । बभणुः । अभ्यासजश्त्वस्यासिद्धत्वादबादेशादेरित्येवम् प्राप्नोति (१) । छिदेः - चिच्छित्सति, उच्छेः - उचिच्छिषतीति अभ्यासदेशस्यासिद्धत्वात् छे चेति तुक् न प्राप्नोति । द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यम् । सयँ व्यतसरः, यलँल्लोकम्, तँलल्लोकमिति। परसवर्णस्यासिद्धत्वाद्यर इति द्विर्वचनं न स्यात् । पदाधिकारश्चेल्लत्वघत्वढत्व-नत्वलत्वषत्वणत्वानुनासिकछत्वानि सिद्धानि वक्तव्यानि । लत्वम्-गलो गलः । गरो गरः । घत्वम्-द्रोग्धा २ । ढत्वं-द्रोढा २ । नत्वं - नुन्नो नुन्नः । नुत्तो नुत्तः। लत्वम्-अमिनोऽमिन्ः, अभिनदभिनत् । षत्वम्-मातुः ष्वसा । मातुःस्वसा । णत्वं - माषवपानि । माषवापानि । अनुनासिकवाङ्नयनम् । वाग्नयनम् । छत्वं - वाक्च्छयनम् । वाकशयनम् । लत्वादीनां विकल्पितानामसिद्धत्वात् कृते द्विर्वचने

सत्युपरिष्टाद्विकल्पे सति गरोगलः गलोगरः इत्येवं रूपमपि द्विरुक्तं स्यात् । तदेतत् सर्वं न मुने इति योगविभागेन साध्यते । न इत्येतावदनिष्ठे विषये पूर्वत्रासिद्धत्वस्य प्रतिषेधार्थम् । ततो मु ने इति । नेत्येतदनुवर्त्तते ॥

## ३६९३. उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ॥ ४ ॥

उदात्तयणः स्वरितयणश्च परस्यानुदात्तस्य स्वरित आदेशो भवति । उदात्तयणः – कुमार्यै । कुमार्याः । उदात्तनिवृत्तिस्वरेणायमीकार उदात्तः, तस्य स्थने यणादेशः स उदात्तायण्, तस्मात् परस्यानुदात्तस्य स्व्रित आदेशो भवति । स्वरितयणः – सकुल्लव्याशा । खलप्व्याशा । सकृल्लूः, शलपूरिति कृत्स्वरेणान्तोदात्तौ, तयोरोःसुपीति यणादेशः स उदात्तयण् । ततः परस्य सप्तम्येकवचनस्य स्वरितत्वम्, तस्य यणादेशः स्वरितयण्, तस्मात् स्वरितयणः परस्याशाशब्दाकारस्यनुदात्तस्य स्वरितो भवति । ननु च सप्तम्येकवचनस्य यदुदात्तयण इति स्वरितत्वं तदसिद्धं यणादेशे । तत्कथमयम् स्वरितयण् भवति? आश्रयात् सिद्धत्वं भविष्यति । यदि एवमुदात्तादनुदात्तस्य स्वरित इति, एतस्याप्याश्रयात्सिद्धत्वं प्राप्नोति । ततश्च दध्याशेत्यत्रापि स्वरितः स्यात् । तस्मदयमेव यण्स्वरो यणादेशे सिद्धो वक्तव्यः । केचित्तु ब्रुवते, उदात्तात् स्वरितयणोऽपि परस्यनुदात्तस्य स्वरितत्वं दृश्यते । तथाच तैत्तिरीयके शाखान्तरे पठ्यते–यास्ते विश्वाः समिधः सन्त्यग्ने इति । अग्ने इत्यथमकारः स्वरितः पठ्यते । तथा ब्राह्मणेऽपि–दध्याशयतीत्याकारः स्वरितः पठ्यते इति । यथा तु वार्त्तिकं भाष्यं च तथा उदात्तात् स्वरितयणः परस्थानुदात्तस्यानेन स्वरितत्वं न भवतीति स्थितम् । तथाच भाष्ये स्वरितयण्ग्रहणमिदं प्रत्याख्यायते । सकृल्लव्याशेत्युदात्तयण इत्येव स्वरितस्य सिद्धत्वात् स्वरितयण्व्यवधानमव्यवधानमेव स्वरविधौ व्यञ्जनमविद्यमानवदिति । तत्तु क्रियते, पूर्वस्मादपि विधौ स्थानिवध्बावाद् व्यवधानमस्ति । स्वरदीर्घयलोपेषु च लोपाजादेशस्य स्थानिवद्भावः प्रतिषिद्ध्यते इति । उदात्तस्वरितयोरिति किम्? वैदी आशा वैद्याशा । शार्ङ्गरव्याशा । अनुदात्तयणादेशोऽयम् । अनुदात्तस्येति किम्? कुमार्यत्र । किशोर्यत्र । अत्रेत्ययमाद्युदात्तो लित्स्वरेण ॥

## ३६९४. एकादेश इदात्तेनोदात्तः ॥ ५ ॥

उदात्तेन सहानुदात्तस्य य एकादेशः स उदात्तो भवति । अनुदात्तस्येति

वर्त्तते। अग्नी । वायू । वृक्षैः । प्लक्षैः । उदात्तेनेति किम्? पचन्ति । यजन्ति । लसार्वधातुकानुदात्तत्वे कृते द्वयोरनुदात्तयोरयमेकादेशः । पररूपे कर्त्तव्ये स्वरितस्यासिद्धत्वात् ॥

### ३६९५. स्वरितो वाऽनुदात्ते पदादौ ॥ ६ ॥

अनुदात्ते पदादौ उदात्तेनसह य एकादेशः स स्वरितो वा भ्वत्युदात्तो वा । सु डत्थितः – सूत्थितः । वि ईक्षते–वीक्षते । वसुकः असि–वसुकोऽसि । सूत्थित इति सुशब्दः सुः पूजायामिति कर्म्मप्रवचनीयः तस्य प्रादित्वात् समासे सति अव्ययपूर्वप्रकृतिस्वरत्वेनाद्युदात्तः शेषमनुदात्तमिति चानुदात्ते पदादावेकादेशो भवति। वीक्षते । वसुकोऽसीति । अत्रापि तिङ्ङतिङ इति निघाते कृतेऽनुदात्ते पदादावेकादेशः। स्वरितग्रहणं विस्पष्टार्थम् । उदारो हि विकल्पिते तस्मिन्नसत्यानन्तर्यत् एव स्वरितो भविष्यईति । अनुदात्त इति किम्? देवदत्तोऽत्र । पदादाविति किम्? वृक्षौ, वृक्षाः ॥

### ३६९६. नलोपः प्रातिपदिकान्तस्य ॥ ७ ॥

पदस्येति वर्त्तते । प्रातिपदिकस्य पदस्य योऽन्त्यो नकारस्तस्य लोपो भवति। राजा । राजभ्याम् । राजभिः । राजता । राजतरः । राजतमः । प्रातिपदिकग्रहणं किम्? अहन्नहिम् । अन्तग्रहणं किम्? राजानौ । राजानः । प्रातिपदिकग्रहणमसमस्तमेव सुपां सुलुगिति षष्ठ्या लिका निर्द्दिष्टम् । अह्नो नलोपप्रतिषेधो वक्तव्यः । अहः । अहोभ्याम् । अहोभिः । रोऽसुपि, अहन्निति रेफरुत्वयोरसिद्धत्वाद् नलोपः प्राप्नोति। सावकाश तदुभयं संबुद्धौ–हेऽहः । हे दीर्घाहो निदाघेति । तत्र समाधिमाहुः – अहन्निति रुविधौ यदुपादीयते प्रथमैकवचनान्तमकृतनलोपं तदावर्त्त्यते, तत्रैकयाऽऽवृत्त्या तदेवं रूपं नलोपाभावार्थमान्वाक्ययते, द्वितीययापि तस्य रुर्विधीयते ॥

### ३६९७. न ङिसम्बुद्ध्योः ॥ ८ ॥

ङौ परतः संबुद्धौ च नकारलोपो न भवति । आर्द्रे चर्म्मन् । लोहिते चर्मन्। सुपां सुलुगिति ङेर्लुक् । संबुद्धौ–हे राजन् । हे तक्षन् । अस्मादेव नलोपप्रतिषेधवचनादप्रत्यय इति प्रत्ययलक्षणेन प्रातिपदिकसंज्ञा न प्रतिषिद्धयते इति ज्ञाप्यते । भसंज्ञा च न भवतीति । तया हि राज्ञः पुरुषो राजपुरुष इति । अत्र

नलोपश्च भवति । अल्लोपश्च न भवति ॥ ङावुत्तरपदे प्रतिषेधस्य प्रतिपेधो वक्तव्य। चर्मणि तिला अस्य चर्मतिलः । हे राजवृन्दारक इत्यत्र समुदायार्थसंबोधनं, न पूर्वपदार्थसंबोधनं प्रतीयत इति संबुद्ध्यन्तं पूर्वपदं नैव समस्यते । वा नपुंसकानामिति वक्तव्यम् । हे चर्मन् । हे चर्म ॥

### ३६९८. मादुपधायाश्च मतोर्वोऽयवादिभ्यः ॥ ९ ॥

मतोरिह कार्यित्वेनोपादानत् सामर्थ्यलब्धं प्रातिपदिकं तन्मादिति मकारावर्णाभ्यां विशिष्यते । मकारावर्णविशिष्टया चोपधया इत्ययमर्थो भवति – मकारान्ताद् मकारोपधादवर्णान्तादवर्णोपधाच्चोत्तरस्य मतोर्व इत्ययमादेशो भवति, यवादिभ्यस्तु परतो न भवति । मकारान्तात् – किंवान् । शंवान् । मकारोपधात्–शमीवान् । दाडिमीवान् । अवर्णान्तात् – वृक्षवान् । प्लक्षवान् । खट्वावान् । मालावान् । अवर्णोपधात् – पयस्वान् । यशवान् । भास्वान् । मादुपधायाश्चेति किम्? अग्निमान्। वायुमान् । अयवादिभ्य इति किम्? यवमान् । दल्मिमान् । ऊर्म्मिमान् । यव । यल्मि । उम्मि । भूमि । कृमि । क्रुञ्चा । वशा । द्राक्षा (१) एतेषां मादुपधायाश्चेति प्राप्नोति । ध्रजि । ध्वजि । सञ्जि (२) इत्येतेषां छन्दसीर इति । हरित् ककुत् गरुत् इत्येतेषां झय इति । इक्षु मधु द्रुम मण्द धूम इत्येतेषां संज्ञायामिति । आकृतिगणश्च यवादिः । अकृतवत्वो मौत्प् यवादिषु द्रष्टव्यः । यस्य सति निमित्ते मतुपो वत्वं न दृश्यते म यवादिषु द्रष्टव्यः (३) । इह नृमत इदं नार्मतमिति बहिरङ्गलक्षणत्वादवर्णोपधस्य मतुपो वत्बं न भवति ॥

### ३६९९. झयः ॥ १० ॥

झयन्तादुत्तरस्य मतोर्व इत्ययमादेशो भवति । अग्निचित्वान् ग्रामः । उदश्वित्वान् घोषः । विद्युत्वान् बलाहकः । इन्द्रो मरुत्वान् । दृषद्वान् देशः ॥

### ३७००. संज्ञायाम् ॥ ११ ॥

संज्ञायां विषये मतोर्व इत्ययमादेशो भवति । अहीवती । कपीवती । ऋषीवती। मुनीवती ॥

### ३७०१. आसन्दीवदष्ठीवच्चक्रीवत् कक्षीवद्रुमण्वच्चर्मण्वती

॥ १२ ॥

आसन्दीवद् अष्ठीवत् चक्रीवत् कक्षीवद् रुमण्वत् चर्म्मण्वती इत्येतानि संज्ञायां निपात्यन्ते। वत्वं पूर्वेणैव सिद्धमादेशार्थानि निपातनानि। आसन्दीवदिति। आसनशब्दस्यासन्दीभावो निपात्यते। आसन्दीवान् ग्रामः। आसन्दीवदहिस्थलम्। आसनवानित्येवान्यत्र। अपरे त्वाहुः – आसन्दीशब्दोऽपि प्रकृत्यन्तरमेवास्ति। तथा चोक्तमौदुम्बरी राजासन्दी भवतीति। तस्य संज्ञायामिति वत्वेन सिद्धम्। आसन्दीवदित्येतत्प्रपञ्चार्थमिह पठ्यते। अष्ठीवदिति। अस्थ्नोऽष्ठीभावः। अष्ठीवानिति शरीरैकदेशसंज्ञा। अस्थिमानित्येवान्यत्र। चक्रीवदिति। चक्रशब्दस्य चक्रीभावो निपात्यते। चक्रीवान् राजा। चक्रवानित्येवान्यत्र। चक्रीवन्ति सदो हविर्द्धनानि भवन्तीत्येतत्तु छान्दसत्वात् अनुगन्तव्यम्। कक्षिवदिति। कक्ष्यायाः संप्रसारणं निपात्यते। कक्षीवान्नाम ऋषिः। कक्ष्यावानित्येवान्यत्र। रुमण्वदिति लवणशब्दस्य रुमणभावो निपात्यते। लवणवानित्येवान्यत्र। अपरे त्वाहुः – रुमन्निति प्रकृत्यन्तरमस्ति। तस्यैतन्निपातनं नकारलोपाभावार्थ णत्वार्थं च। मतोर्वा नुडर्थमिति। चर्मण्वतीति। चर्मणो नलोपाभावो णत्वं च निपात्यते। मतोर्वा नुडागमः। चर्मण्वती नाम नदी। चर्म्मवतीत्येवन्यत्र ॥

### ३७०२. उदन्वानुदधौ च ॥ १३ ॥

उदन्वानित्युदकशब्द्स्य मतावुदन्भावो निपात्यते उदधावर्थे, संज्ञायां विषये च। उदन्वान्नाम ऋषिर्यस्यौदन्वतः पुत्रः। उदधौ–उदन्वान्। यस्मिन्नुदकं धीयत स एवमुच्यते। उदधाविति किम्? उदकवान् घट इत्यत्र तु दधात्यर्थो न विवक्ष्यते, किं तर्हि? उदकसत्तासंबन्धसामान्यम् ॥

### ३७०३. राजन्वान् सौराज्ये ॥ १४ ॥

राजन्वानिति निपात्यते सौराज्ये गम्यमाने। शोमनो राजा यस्मिन्निति स राजन्वान देशः। राजन्वती पृष्वी। राजवानित्येवान्यत्र ॥

### ३७०४. छन्दसीरः ॥ १५ ॥

छन्दसि विषये इवर्णान्ताद्रेफान्ताच्चोत्तरस्य मतोर्वत्वं भवति। इवर्णान्तात्तावत्– त्रिवती याज्यानुवाक्या भवति। हरिवो मेदिनं त्वा। अधिपतिवतो जुहोति। चरुरग्निवानिव। आरेवानेतु मा विशत्। रयेर्मताविति संप्रसारणम्। सरस्वतीवान्।

भारतीवान् । दधीवांश्चरुः । छन्दसि सर्वे विधयो विकल्प्यन्त इतीह न भवति– सप्तर्षिमन्तम् । ऋषिमान् । ऋतीमन् । सूर्य ते द्यावापृथिवीमन्तमिति । रेफान्तात् – गीर्वान् । भूर्वान् । आशीर्वान् ॥

### ३७०५. अनो नुट् ॥ १६ ॥

छन्दसीति वर्तते । अनम्तादुत्तरस्य मतोर्नडागमो भवति छन्दसि विषये । अक्षण्वन्तः कर्मवन्तः सखायः । अस्थन्वन्तं यदनस्था विभत्ति । अक्षण्वता लाङ्गलेन। शेर्षण्वती । मूर्द्धन्वती । नुटोऽसिद्धत्वात्तस्य च वत्वं न भवति । ततः परस्य च भवति ॥

### ३७०६. नाद् घस्य ॥ १७ ॥

नकारान्तादुत्तरस्य घसंज्ञकस्य नुडागमो भवति छन्दसि विषये । सुपथिन्तरः । दस्युहन्तमः । भूरिदाव्नस्तुडवक्तव्यः । भूरिदावत्तरः । ईद्रथिनः । रथिन ईकारान्तादेशो घे परतः । रथीतरः । रथशब्दादेव मत्वर्थीयोऽयमीकारः छन्दसीवनिपाविति ॥

### ३७०७. कृपो रो लः ॥ १८ ॥

कृपेर्द्धातो रेफस्य लकारादेशो भवति । र इति श्रुतिसामान्यमुपादीयते । तेन यः केवलो रेफो यश्च ऋकारस्थस्तयोर्द्वयोरपि ग्रहणम् । ल इत्यपि सामान्यमेवोपादीयते। ततोऽयं केवलस्य रेफस्य स्थाने लकारादेशो विधीयते, ऋकारस्याप्येकदेशविकारद्वारेण ऌकारस्तथा च लुटि च क्लृप इत्येवमादयो निर्देशा उपपद्यन्ते । कल्प्ता । कल्प्तारौ । कल्प्तारः । कलृप्तवान् । कृपा इत्येतत्क्रपेः संप्रसारणं चेति भिदादिषु पाठाद्भवति । तस्य हि कृतसप्रसारणस्य लाक्षणिकत्वात् । इह कृप इति ग्रहणं नास्ति । कृपणकृपाणकृपीटकर्पूरादयोऽपि कपेरेव द्रष्टव्याः उणादयो वहुलमिति वा कृपेरेव लत्वाभावः । वालमूललध्वसुरालमङ्गुलीनां वा रो लमापद्यत इति वक्तव्यम्। वालः । वारः । मूलम् । मूरम् । लघु । रघु । असुरः । असुलः । अलम् । अरम्। अङ्गुलिः । अङ्गुरिः । कपिलकादीनां संज्ञाछन्दसोर्वा रो लमापद्यत इति वक्तव्यम् । कपिरकः । कपिलकः । तिल्पिलीकम् । तिपितीकम् । लोमानि । रोमाणि । पांशुरम्। पांशुलम् । कर्म । कल्म । रलयोरेकत्वस्मरणमिति केचित् । किमिदमेकत्वस्मरणमिति? समानविषयत्वमेव तयोः स्मर्यत इत्यर्थः ॥

### ३७०८. उपसर्गस्यायतौ ॥ १९ ॥

अयतौ परत उपसर्गस्य यो रेफस्तस्य लकार आदेशो भवति । प्लायते । पलायते । अत्र च योऽयमेकादेशस्तस्य स्यानिवद्भावादयतेरुसर्गस्य च विभागे सति यद्ययतिग्रहणं रेफस्य विशेषणं तदा येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादिति एकेन व्यवधानेऽपि सति लत्वं भवति । तथा च पल्ययते इत्यत्रापि भवति । उपसर्गस्य विशेषणे त्वयतिग्रहणे सिद्धमेवैतत् सर्वं प्रतेरपि तु व्यवहितेऽपि प्राप्नोति । तत्र केषांचिद्दर्शनं भवितव्यमेव प्लत्ययत इति । प्रथमपक्षदर्शनाभिनिविष्टास्तु प्रत्ययत इत्येव भवतीति मन्यन्ते । अपरे तु प्रतिशब्दोपसृष्टस्यायतेः प्रयोगमेव नेच्छन्ति । दुस् निस् इत्येतयोस्तु रुत्वस्यासिद्धत्वाल्लत्वेन नैव भवितव्यम् । निरयणम् । दुरयणम् ॥

### ३७०९. ग्रो यङि ॥ २० ॥

गृ इत्येतस्य धातो रेफस्य लकार आदेशो भवति यङि परतः । निजेगिल्यते । निजेगिल्येते । निजेगिल्यन्ते । भावगर्हयां ग्रो यङ्विहितः (१) । केचित् ग्र इति गिरतेर्गृणातेश्च सामान्येन ग्रहणमिच्छन्ति । अपरे तु गिरतेरेव, न गृणातेः । गृणातेहि यङेव नास्ति, अनभिधानादिति । यङीति किम्? निगीर्यते ॥

### ३७१०. अचि विभाषा ॥ २१ ॥

अजादौ–प्रत्यये परतो ग्रो रेफस्य विभाषा लकारादेशो भवति । निगिरति । निगिलति । निगरणम् । निगलनम् । निगारकः । निगालकः । इयं तु व्यवस्थितविभाषा। तेन गल इति प्राण्यङ्गे नित्यं भवति । गर इति विषे नित्यं न भवति । निगार्यते । निगाल्यत इति णिलोपस्य स्थानिवद्भवादचि विभाषेति लत्वविकल्पः । पूर्वत्रासिद्धे न स्थानिवदिति एतदपि सापवादमेव, तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति । अन्तरङ्गत्वाद्वा कृते लत्वविकल्पे णिलोपो भविष्यति । गिरौ गिर इत्यत्र धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमिति लत्वं न भवति । गिरतिर्वा लत्वविधावधिकृतो गृणातेरेतद्रूपम् ॥

### ३७११. परेश्च घङ्कयोः ॥ २२ ॥

परि इत्येतस्य यो रेफस्तस्य घशब्देऽङ्कशब्दे च परतो विभाषा लकार आदेशो भवति । परिघः । पलिघः । पर्यङ्कः । पल्यङ्कः । घ इति स्वरूपग्रहणमत्रेष्यते, न तरप्तमपौ घइति । योगे चेति वक्तव्यम् । परियोगः । पलियोगः ॥

## ३७१२. संयोगान्तस्य लोपः ॥ २३ ॥

संयोगानस्य पदस्य लोपो भवति । गोमान् । यवमान् । कृतवान् । हतवान् । इह श्रेयान् भूयानिति रुत्वं परगपसिद्धवात् संयोगान्तस्य लोपं न बाधते । जश्त्वे तु नाप्राप्ते तदारभ्यत इति तस्य बाधकं भवति – यशः पय ति । दध्यत्र मध्वत्रेत्यत्र तु यणादेशस्य बहिरङ्गलक्षणस्यासिद्धत्वात् संयोगान्तलोपो न भवति । पदस्येति किम्? गोमन्त इति ॥

## ३७१३. रात्सस्य ॥ २४ ॥

संयोगान्तपदस्य यो रेफस्तस्मादुत्तरस्यान्यस्य सकारस्थ लोपो भवति । गोभिरक्षाः, प्रत्यञ्चमत्साः, क्षरतेः त्सरतेश्च लुङि सिचश्छान्दसत्वादीडभावो बहुलं छन्दसीति बचनादीर्घे सति रूपमेतत् । मातुः पितुरिति ऋत उदिति उत्वे कृते रपरत्वे च सति रात्सस्येति सलोपः । सिद्धे सत्यारम्भो नियमार्थः – रात्सस्यैव लोपो भवति नान्यस्येति । ऊर्जे क्विप्–ऊर्क् । मृजेर्लङि–अमार्ट् ॥

## ३७१४. धि च ॥ २५ ॥

धाकारादौ प्रत्ययेपरतः सकारस्य लोपो भवति । अलविध्वम् । अलविढवम् । अपविध्वम् । अपविढवम् । यद्यत्र सकारलोपो न स्यात्, सिचः षत्वे जश्त्वे च विभाषेट इति मूर्द्धन्याभावपक्षेऽपि न धकारः श्रूयेत । इतः प्रभृति सिचः सकारस्थ लोप इष्यते । इह न भवति – चकाद्धि पलितं शिर इति । तथा पयो धावतीत्येवमादीनामपि न भवति । सग्धिर्वब्धामिति छान्दसो वर्णलोपः । भाष्यकारस्वत्वाह – चकाधीत्येव भवितव्यमिति । तेभ पयो धावतीत्येवमादौ यत्नान्तरमास्थेयम् ॥

धि सकारे सिचो लोपश्चकद्धीति प्रयोजनम् ।

आशाध्वं तु कथं जश्त्वं सकारस्य भविष्यति ।

सर्वमेव प्रसिद्धं स्याच्छ्रुतिश्चापि न विद्यते ।

लुङश्चपि न सूर्द्धन्ये ग्रहणं सेटि दुष्यति ॥
घसिभसोर्न सिध्येत तस्मात् सिज्ग्रहणं न तत् ।
छान्दसो वर्णलोपो वा यहेष्कर्त्तारमध्वरे ॥
निष्कर्त्तारमध्वरस्थेत्येवं प्राप्ते ॥

### ३७१५. झलो झलि ॥ २६ ॥

झल उत्तरस्य सकरस्य झलि परतो लोपो भवति । अभित्त । अभित्थाः । अच्छित्त । अच्छित्थाः । अवात्ताम् , अवात्तेत्यत्र वा सिचः सकारलोपस्थासिद्धत्वात् सः स्यार्द्धधातुक इति सकारस्य तकारः । झल इति किम्? अमंस्त । अमंस्थाः । झलीति किम्? अभित्साताम् । अभित्सत । अयमपि सिच एव लोपस्तेनेह न भवति – सोमसुत् स्तोता । दृषत् स्थानमिति ॥

### ३७१६. ह्रस्वादङ्गात् ॥ २७ ॥

ह्रस्वान्तादङ्गादुत्तरस्य लोपो भवति झलि परतः । अकृथाः । अहृथाः । ह्रस्वादिति किम्? अच्योष्ट । अप्लोष्ट । अङ्गादिति किम्? अलाविष्टाम् । अलाविषुः । झलीत्येव । अकृषाताम् । अकृषत । अयमपि सिच एव लोपस्तेनेद न भवति – द्विष्टरां द्विष्टमामिति । सुजन्ताद् द्विशब्दात्तरप्तमपौ । अद्रव्यप्रकर्षे आतिशयिक आम् प्रत्ययः ॥

### ३७१८. इट ईटि ॥ २८ ॥

इट उत्तरस्य सकारस्य लोपो भवति ईटि परतः । अदावीत् । असेवीत् । अकोषीत् । अमोषीत् । इट इति किम्? अकार्षीत् । ईटीति किम्? अलाविष्टाम् । अलाविषुः ॥

### ३७१९. स्कोः संयोगाद्योरन्ते च ॥ २९ ॥

पदस्यान्ते यः संयोगः झलि परतो वा यः संयोगस्तदाद्योः सक्वारककारयोर्लोपो भवति । लस्जेः – लग्नः । लग्नवान् । साधुलक् । ककारस्य–तक्षेः, तट् । तष्टवान् । कष्ठतट् । झलि सडीति वक्तव्यम् । किमिदं सडीति? सनः सात्प्रभृति महिङो ङकारेणप्रत्याहारः । इह मा भूत्–काष्ठशक्स्थातेति थकारे झलि ककारस्थ

संयोगादेर्लोपः प्राप्नोति । तदत्र लकेः किबन्तस्य प्रयोग एव नास्तीत्याह । कष्ठशगेव नास्ति कुतोऽयं काष्ठशकि तिष्ठेविति । वास्यर्थं, वाक्यर्थमिति । अत्रापि बहिरङ्गलक्षणस्य यणादेशस्यासिद्धत्वात् संयोगादिलोपो न भवति । स्कोरिति किम्? नर्नत्ति, वर्वर्ति। संयोगद्योरिति किम्? पयः शक् । अन्ते चेति किम्? तक्षिता । तक्षकः ॥

### ३७२०. चो कुः ॥ ३० ॥

चवर्गस्य कवर्गादेशो भवति झलि परतः पदान्ते च । पक्ता । पक्तुम् । पक्तव्यम् । ओदनपक । वक्ता । वक्तुम् । वक्तव्यम् । वाक् । कुञ्चत्यत्र सङीति वचनात् अकारस्य चकारे झलि कुत्वं न भवति । युजिक्रुञ्चां चेति निपातनाद्वा । वकारोपधो वा धातुरयं रेफरहितश्च कच्च कौटिल्यालपीभावयोरिति पठ्यते । नकारलोपे हि निकुचिरिति दृश्यते । युजिकुञ्चां चेति तस्यैव रेफोऽधिको नकारस्य लोपाभावश्चेति निपात्यते । तत्रानुस्वारस्य परसवर्णस्य चासिद्धत्वात् ञकार एव नास्तीति कुत्वं न भविष्यति ॥

### ३७२१. हो ढः ॥ ३१ ॥

हकारस्य ढकारादेशो भवति झलि परतः पदान्ते च । सोढा । सोढुम् । सोढध्यम् । तुरानाट् । वोढा । वोढुम् । प्रष्ठवात् । दित्यवाट् ।

### ३७२२. दादेर्धातोर्घः ॥ ३२ ॥

दकारादेर्धातोर्हकारस्थ घकारादेशो भवति झलि परतः पदान्ते च । दग्धा । दग्धुम् । दग्धव्यम् । काष्टधक् । दोग्धा । दोग्धुम् । दोग्धव्यम् । गोधुक् । दादेरिति किम्? लेढा । लेढुम । लेढव्यम् । गुडलिट् । धातोरिति दादिसमानाधिकरणमेतन्न, किं तर्हि? तद्विशेषणमवयवषष्ठयन्तं धातोरवयवो यो दादिः शब्दस्तवयबस्थ हकारस्येति। किमेवं कुतं भवति? अधोगित्यत्रापि घकारः सिद्धो भवति । कथं दोग्धा दोग्धुमिति? व्यपदेशिवद्भावात् । अथवा धातूपदेशे यो दारिदित्येवं विज्ञायते । तथा च दामलिहमिच्छति दामलिझति, दामलिह्यतेः क्विप् प्रत्ययः, दामलिडित्यत्रापि न भवति ॥

### ३७२३. वा द्रुहमुहष्णुहष्णिहाम् ॥ ३३ ॥

द्रुह मुह ष्णुह ष्णिह इत्येतेषां धातूनां हकारस्य वा धकारादेशो भवति झलि परतः पदान्ते च । द्रुह–द्रोग्धा । द्रोढा । मित्रध्रुक् । मित्रध्रुट् । मुह–उन्मोग्धा । उन्मोढा । उन्मुक् । उन्मुट् । स्नुह – उत्स्नोग्धा । उत्स्नोढा । उत्स्नुक् । उत्स्नुट् । स्निह–स्नेग्धा । स्नेढा । स्निक् । स्निट् । द्रुहेर्दादित्वात् घत्वं नित्यं प्राप्तमितरेषाम–प्राप्तमेव घत्वं विकल्प्यते ॥

### ३७२४. नहो धः ॥ ३४ ॥

नहो हकारस्य धकारादेशो भवति झलि परे पदान्ते च । नद्धम् । नद् धुम् । नद्धव्यम् । उपानत् । परीणत् ॥

### ३७२५. आपस्थः ॥ ३५ ॥

आहो हकारस्य थकारादेशो भवति झलि परतः । इदमात्थ । किमात्थ । आदेशान्तरकरणं झषस्तथोर्ध्दोऽध इत्यस्य निवृत्त्यर्थम् । झलीत्येव । आह । आहतुः । आहुः । हृग्रहोर्भश्छन्दसि हस्येति वक्तव्यम् । गदर्दभेन – संभरति । प्रभीता । जभ्रिरे । उद्ग्राभं च निगाभं च ब्राह्म देवा अवीवृधन् ॥

### ३७२६. व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ॥ ३६ ॥

व्रश्च भ्रस्ज सृज मृज यज राज भ्राज इत्येतेषां छकारान्तानां शकारान्तानां च षकार आदेशो भवतिझलि परतः पदान्ते च । व्रश्च–व्रष्टा । व्रष्टुम् । व्रष्टव्यम् । मूलवृट् । भ्रस्ज–भ्रष्टा । भ्रष्टुम् । भ्रष्ठव्यम् । धानाभृट् । सृज–स्रष्टा । स्रष्टुम् । रज्जुसृट् । मृज–मार्ष्टा । मार्ष्टुम् । मार्श्टव्यम् । कंसपरिमृट् । यज–यष्टा । यष्टुम् । यष्टव्यम् । उपयट् । राज–सभ्राट । स्वराट । विराट । भ्राज–विभ्राट । राजभ्राजयोः पदान्तार्थ ग्रहणं, झलादिराभ्यामिटा पर्यवपद्यते । केचित्तु राष्टिरिति क्तिन्नन्तमिच्छन्ति । छकारान्तानाम् – प्रच्छ–प्रष्टा । प्रष्टुम् । प्रश्टव्यम् । शब्दप्राट् । च्छवोः शूडनुनासिके चेत्यत्र क्ङितीत्यनुवर्त्तते इति छग्रहणमिह क्रियते । शकारान्तानाम् – लिश्–लेष्टा। लेश्टुम् । लिट् । विश्–वेष्टा । वेष्टुम् । वेष्टव्यम् । विट् ॥

### ३७२७. एकाचो वशो भष् झषन्तस्य स्ध्वोः ॥ ३७ ॥

धातोरवयवो व एकाच् झषन्तः तदवयवस्य यशः स्थाने भष् आदेशो

हवति झलि सकारे ध्वशब्दे च परतः पदान्ते च । बुध–धोक्ष्यते । अधुग्ध्वम् । गोधुक् । अजर्घाः – गृधेर्यङ्लुगन्तस्य लङि सिपि अटि लधूपधगुणे कृते सिपो हलङ्यादिलोपे च धातोरवयवस्यैकाचो वशः स्थाने भष्भावस्ततो धकारस्य जश्त्वं दश्चेति रुत्वं, रो तीति पूर्वरेफस्य लोपः, ढलोपे पूर्वस्य दीर्घोऽण इति दीर्घत्वम् । गद्र्दभयतेरप्रत्ययः – गर्द्धप् । एकाच इति किम्? दामलिहमिच्छति दामलिह्यति, दामलिह्यतेरप्रत्ययः – दामलिट् । असति ह्येकाज्ग्रहणे धातोरित्येतद्बशो विशेषणं स्यात् । बश इनि किम्? क्रुध–क्रोत्स्यति । झषन्तस्येति किम्? दास्यति । स्ध्वोरिति किम्? बोद्दा । बोद्धुम् । बोद्धव्यम् । धकारस्य वकारोपसृष्टस्थ ग्रहणं किम्? दावद्धि । दध धारण इत्येतस्य यङ्लुकि लोटि हुझल्भ्योहेधिरिति धिभावे सत्येतद्भवति । अत्र चत्वारो बशः स्थानिनो भाषादेशश्चत्वार एव । तत्र संख्यातानुदेशे प्राप्ते डकारस्य स्थानिनोऽभावात् ढकारादेशो न भवति । आन्तर्यतो व्यवस्था विज्ञास्यते ॥

## ३७२८. दधास्तथोश्च ॥ ३८ ॥

दध इति दधातिः कृतद्विर्वचनो निर्द्दिश्यते । तस्य झलन्तस्य वश स्थाने भश आदेशो भवति तकारथकारयोः परतश्चकारात् स्ध्वोश्च परतः । धप्तः । धत्थः । धत्से । धत्स्व । धद्धवम् । वचनसामर्थ्यादातो लोपस्य स्थानिवद्भावो न भवति । अभ्यासजश्त्वस्य चासिद्धत्वम् । तथोरिति किम्? आनन्तर्यात्स्ध्वोरेव विज्ञायेत । चकारस्तयोरनुवृत्त्यर्थः । झषन्तस्येत्येव–दधाति ।

## ३७२९. झलां जशोन्ते ॥ ३९ ॥

प्तलां जश आदेशा भवन्ति पदस्यान्ते वर्त्तमानानाम् । वागत्र । श्वलिडत्र । अग्निचि दत्र । त्रिष्टुवत्र । अन्तग्रहणं झलीत्येतस्य निवृत्त्यर्थम् । वस्ता । वस्तव्यम् ॥

## ३७३०. झपस्तथोर्द्धोऽघः ॥ ४० ॥

झष उत्तरयोस्तकारथकारयोः स्थाने धकार आदेशो भवति दधार्ति वर्जयित्वा । लब्धा । लब्धुम । लब्धव्यम् । अलब्ध । अलब्धाः । दुह–दोग्धा । दोग्धुम् । दोग्धव्यम् । अदुग्ध अदुग्धाः । लिह–लेढा । लेढुम् । लेढव्यम् । अलीढ । अलीढाः । बुध–बोद्धा । बोद्धुम् । बोद्धव्यम । अबुद्ध । अबुद्धाः । अध इति किम्? धत्त । धत्यः ॥

**३७३१. षढोः कः सि ॥ ४१ ॥**

षकारस्ढकारयोः ककारादेशो भवति सकारे परतः । षकारस्य–विष्–विवेक्षयति। अवेक्ष्यत् । विवक्षति । ढकारस्य–लिह–लेक्ष्यति । अलेक्ष्यत् । लिलिक्षति । सीति किम्? पिनष्टि । लेढि ॥

**३७३२. रदाभ्यां निष्ठातो नः पूर्वस्य च दः ॥ ४२ ॥**

रेफदकाराभ्यामुत्तरस्य निष्ठातकारस्य नकार आदेशो भवति पूर्वस्य च दकारस्य। रेफान्तात्तावत्–आस्तीर्णम् । विस्तीर्णम् । विशीर्णम् । निगीर्णम् । अवगूर्णम् । दकारात्–मिन्नः । मिन्नवान् । छिन्नः । छिन्नवान् । रदाभ्यामिति किम्? कृतः । कृतवान् । र इत्यत्र रश्रुतिसामान्थं नोपादीयते, किं तर्हि व्यञ्जनमात्रम् । रेफसामान्यनिद्देशेऽपि सति रेफात् परा याज्यक्तिन्तदव्यवधानान्नत्वं न भवति । निष्ठेति किम्? कर्त्ता । हर्त्ता । त इति किम्? चरितम् । मुदितम् । पूर्वस्येति । किम्? परस्य मा भूत् । भिन्नवद्भ्यम । भिन्नवद्भिः । इह कृतस्यापस्थं कातिरिति वृद्धेर्बहिरङ्गलक्षणाया असिद्धभ्वान्नत्वे कर्त्तव्ये रेफस्यासिद्धत्वम् ॥

**३७३३. संयोगादेगतो धातोर्यण्वतः ॥ ४३ ॥**

संयोगादिर्यो धातुराकारान्तो यण्वान् तस्मादुत्तरम्य निष्ठातकारस्य नकारादेशो भवति । प्रद्राणः । प्रद्राणवान् । ग्लानः । ग्लानवान् । संयोगादेरिति किम्? यातः । यातवान् । आत इति किम्? च्युतः । च्युतवान् । प्लुतः । प्लुतवान् । धातोरिति किम्? निर्यातः । निर्वातः । यण्वत इति किम्? स्नातः । स्नातवान् ॥

**३७३४. ल्वादिभ्यः ॥ ४४ ॥**

लृञ छेदने इत्येतत्प्रभृति वृञ वरणे इति यावत् वृत्करणेन समापिता ल्वादयो गृह्यन्ते । तेभ्य उत्तरस्य निष्ठातकारस्य नकारादेशो भवति । लूनः । लूनवान् । धूनः । धूनवान् । जीनः । जीनबान् ।ऋकारल्वादिभ्यः क्तिन्निष्ठावद्भवतीति वक्तव्यम्। कीर्णिः । गीर्णिः । शीर्णिः । लूनिः । पूनिः दुग्वोर्दीर्घश्चेति वक्तव्यम् । दु–आदूनः। गु–विगूनः । पूञो विनाश इति वक्तव्यम् । पूना यवाः, विनष्टा इत्यर्थः । विनाशः इति किम्? पूतं धान्यम् । सिनोतेर्ग्रासकर्म्मकर्तृकस्येति वक्तव्यम् । सिनो ग्रासः

स्वयमेव । ग्रासकर्मकर्तृकस्येति किम्? सिता पाशेन सूकरी । ग्रासोऽपि यदा कर्मैव भवति न कर्मकर्त्ता तदा न भवति–सितो ग्रासो देवदत्तेनेति ॥

### ३७३५. ओदितश्च ॥ ४५ ॥

ओकारेतो धातोरुत्तस्य निष्ठातकारस्य नकारादेशो भवति । ओलस्जी–लग्नः । लग्नवान् । ओविजी–उद्विग्नः । उद्विग्नवान् । ओप्यायी वृद्धौ–आपीनः । आपीनवान् । स्वादय ओदितः – षूङ्–सूनः । सूनवान् । दूङ्–दूनः । दूनवान् । दीङ्–दीनः । दीनवान् । डीङ्–डीनः । डीनवान् । धोङ्–धीनः । धीनवान् । मीङ्–मीनः । मीनवान् । रीङ्–रीणः । रीणवान् । लीङ्–लोनः । लीनवान् । व्रीङ्–व्रीणः । व्रीणवान् ॥

### ३७३६. क्षियो दीर्घात् ॥ ४६ ॥

क्षियो धातोर्दीर्धादुत्तरस्य निष्ठातकारस्य नकारादेशो भवति । क्षीणाः क्लेशाः । क्षीणो जाल्मः । क्षीणस्तपस्वी । क्षियो निष्ठायामण्यदर्थे, वाऽऽक्रोशदैन्ययोरिति दीर्घत्वं भवति । दीर्घादिति किम्? अक्षितमसि मामेक्षेष्ठाः । अक्षितमिति क्तप्रत्ययो भावे । भावश्च ण्यदर्थ इति दीर्घाभावः । ह्रस्वान्तरस्यापि धात्वनुकरणस्य इह इयङा निर्देशः । क्षियो निष्ठायामण्यदर्थ इत्यत्र दीर्घग्रहणं क्रियते । विपराभ्यां जेरित्येवमादौ तु धातुत्वमनुकार्यगतं सदप्यविवक्षितत्वाद् जिरूपसामान्यानुकरणं द्रष्टव्यम् ॥

### ३७३८. श्योऽस्पर्शे ॥ ४७ ॥

श्यायतेरुत्तरस्य निष्ठातकास्स्य स्पर्शे नकार आदेशो भवति । शीनं घृतम् । शीनं मेदः । शीना वसा । अस्पर्श इति किम्? शीतं वर्त्तते । शीतो वायुः । शीतमुदकमित्यत्र गुणभूतोऽपि स्पर्शो नत्वप्रतिषेधस्य सम्प्रसारणस्य च निमित्तं भवति । गुणे च स्पश प्रति–षेधोऽयं न रोगे, तेन प्रतिशीन इत्यत्र नत्वं भवत्येव ॥

### ३७३९. अञ्चोऽनपादाने ॥ ४८ ॥

अञ्जतेरुत्तरपदस्य निष्ठातकारस्य नकारादेशो भवति न चेदपादानं तत्र भवति । समक्नौ शकुनेः पादौ । तस्मात् पशवो न्यक्नाः । अनपादान इति किम्? उदक्तमुदकं कूपात् । व्यक्तमित्येतदब्जे रूपम् ॥

### ३७४०. दिवोऽविजिगीषायाम् ॥ ४९ ॥

दिव उत्तरस्य निष्ठातकारस्य नकारादेशो भवति अविजिगीषायामर्थे। आद्यूनः। परिद्यनः। अविजिगीषायामिति किम्? द्यूतं वर्त्तते। विजिगोषता हि तत्राक्षपातनोदि क्रियते ॥

### ३७४१. निर्वाणोऽवाते ॥ ५० ॥

निर्वाण इति निस्पूर्वाद्धातोरुत्तरस्य निष्ठातकारस्य नकारो निपात्यये न चेद्वाताधिकरणो वात्यर्थो हवति। निर्वाणोऽग्निः। निर्वाणः प्रदीपः। निर्वाणो भिक्षुः। अवात इति किम्? निर्वातो वातः। निर्वातं वातेन। निर्वाणः प्रदीपो वातेनेत्यत्र तु प्रदीपाधिकरणो वात्यर्थोवातस्तु तस्य करणमिति भवत्येव नत्वम् ॥

### ३७४२. शुषः कः ॥ ५१ ॥

शुषेर्द्धातोरुत्तरस्य निष्ठातकारस्य ककारादेशो भवति। शुष्कः। शुष्कवान् ॥

### ३७४३. पचो वः ॥ ५२ ॥

पचेर्द्धातोरुत्तरस्य निष्ठातकारस्य वकारादेशो भवति। पक्वः। पक्ववान् ॥

### ३७४४. क्षायो मः ॥ ५३ ॥

क्षैधातोरुत्तरस्य निष्ठातकारस्य मकारादेशो भवति। क्षामः। क्षामवान् ॥

### ३७४५. प्रस्त्योऽन्यतरस्याम् ॥ ५४ ॥

प्रपूर्वात् स्त्यायतेरुत्तरस्य तिष्थातकारस्यान्यतरस्यां मकारादेशो भवति। प्रस्तीमः। प्रस्तीमवान्। प्रस्तीतः। प्रस्तीतवान्। यदा मत्वं नास्ति तदा संयोगादेरातो धातोर्यण्वत इत्यस्य पूर्वत्रासिद्धत्वात् संप्रसारणं प्रथमं क्रियते। तत्र कृते निमित्तव्याघातान्नत्वम् न भवति ॥

### ३७४६. अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः (१) ॥ ५५ ॥

फुल्ल क्षिब कृश उल्लाघैत्येते निपात्यन्ते न चेदुपसर्गादुत्तरा भवन्ति । फुल्ल इति ञिफला विशरण इत्येतस्माद्धातोरुत्तरस्य निष्ठातकारस्थ लकारो निपात्यते। उत्वमिडभावश्च सिद्ध एव । क्तवत्वन्तस्याप्येतदृत्वप्रिष्यते । फुल्लः । फुल्लवान् इति । क्षीबकृशोल्लघा इति क्षीबकृशिभ्यामुत्पूर्वाच्च लाधेः क्तप्रत्ययस्य तलोप इडागमाभावश्च निपात्यते । कृते वा इटि इच्छब्दलोपः । क्षिबः । कृशः । उल्लाघः। अनुपसर्गादिति किम्? प्रफुल्ताः समनसः । प्रक्षीबितः । प्रकृशितः । प्रोल्लाघितः। लाडेरुदोऽन्य उपसर्गः प्रतिषिद्ध्यते। उत्फुल्लसंफुल्लयोरिति वक्तव्यम् । उत्फुल्लः। संफुल्लः । परिकृश कृशः परिकृश इति ॥

## ३७४७. नुदविदोन्दत्राघ्रहीभ्योऽन्यतरस्याम् ॥ ५६ ॥

नु द विद उन्दी त्रा घ्रा ही इत्येतेभ्य उत्तरस्य निष्ठातकारस्य नकर आदेशो भवति अन्यतरस्याम् । नुद–नुन्नः । नुत्तः । विद–विन्नः । उन्द–समुत्तः । त्रा–त्राणः। त्रातः । घ्रा–घ्राणः । घ्रातः । ही–ह्रीणः । ह्रीतः । ह्री इत्येतस्मादप्राप्तं नन्वमितरेषां नित्यं प्राप्तम् विकल्प्यते। विद विचारण इत्यस्य विदेरिह ग्रहणमिष्यते। एवमुक्तम्–

> वेत्तेन्तु विदितो निष्ठा विद्यतेविन्न इष्यते ।
> वित्तेर्विन्नश्च वित्तश्च भोगे विन्नञ्च विन्दतेः ॥ इति ॥

## ३७४८. न ध्याख्यापृसूर्च्छिमदाम् ॥ ५७ ॥

ध्या ल्या पृ मूर्छि मद इत्येतेषां निष्ठातकारस्य नकारादेशो न भवति । ध्यातः। ध्यातवान् । ख्यातः । ख्यातवान् । पूर्त्तः । पूर्त्तवान् । मूर्त्तः । मूर्त्तवान् । मत्तः । मत्तवान् । रदाभ्यां संयोगादेरिति च प्राप्त प्रतिपिद्ध्यते ॥

## ३७४९. वित्तो भोगप्रत्यययोः ॥ ५८ ॥

वित्त इति विदेर्लामार्थादुत्तरस्य क्तस्य नत्वाभावो निपात्यते भोगे प्रत्यये चाभिधेये। वित्तमस्य बहु। धनमस्य बह्वित्यर्थः। धनं हि भुज्यत इति भोगोऽभिधीयते। प्रत्ययेवित्तोऽयं मनुष्यः । प्रतीत इत्यर्थः । प्रतीयत इति प्रत्ययः । भोगप्रत्ययोरिति किम्? विन्नः ॥

**३७५०. भित्तं शकलम् ॥ ५९ ॥**

मित्तमिति निपात्यते शकलं चेत्तद्भवति । भित्तं तिष्ठति । भित्तं प्रपतति । शकलपर्यायोऽयम् । अत्र भिदिक्रिया शब्दव्युत्पत्तेरेव निमित्तम् । भिदिक्रियाविवक्षायां हि शकलविषये भिन्नमित्येव भवति ॥

**३७५१. ऋणमाधमर्ण्ये ॥ ६० ॥**

ऋणमिति ऋ इत्येतस्माद्धातोरुत्तरस्य निष्ठातकारस्य नकारो निपात्यते आधमर्ण्यविषये । अधम ऋणे, अधमर्णः । एतस्मादेव निपातनात् सप्तम्यन्तेनोत्तरपदेन समासः । तद्भाव आधमर्ण्यम् । यद्येवमुत्तमर्ण इति न सिद्ध्यति? नेष दोषः । कालान्तरदेयविनिमयोपलक्षणर्थ चेदमुपात्तम् । तेन उत्तमर्ण इत्यपि हि भवति । ऋणं ददाति । ऋणं धारयति । आधमर्ण्य इति किम्? ऋतं वक्ष्यामि नानृतम् ॥

**३७५२. नसत्तनिषत्तानुत्तप्रतूर्त्तमूर्त्तगूर्त्तानि छन्दसि ॥ ६१ ॥**

नसत्त निषत्त अनुत्त प्रतूर्त्त सूर्त्त गूर्त्त इत्येतानि छन्दसि विषये निपात्यन्ते । नसत्तनिषत्तेति सदेर्नञ्पूर्वान्निपूर्वाच्च नत्वाभावो निपात्यते । नसत्तमञ्जसा । नसन्नमिति भाषायाम् । निषत्तः । निषण्ण इति भाषायाम् । अनुत्तमित्युन्देर्नञ्पूर्वस्य निपातनम् । अनुत्तमा ते मघवन् । अनुन्नमिति भाषायाम् । प्रतूर्त्तमिति त्वरतेः तूर्विहत्येतस्थ वा निपातनम् । प्रतूर्त्त वाजिनम् । प्रतूर्णमिति भाषायाम् । सूर्त्तमिति सृ इत्येतस्य उत्वं निपात्यते । सोर्त्ता गादः । सृता गाव इति भाषायाम् । गूर्त्तमिति गूरी इत्येतस्यनत्वाभावो निपात्थते । गूर्त्ता अमृतस्य । गूर्णमिति भाषायाम् ॥

**३७५३. क्विन्प्रत्ययस्य कुः ॥ ६२ ॥**

पदस्येति वर्त्तते । क्विन्प्रत्ययस्य सर्वत्र पदान्ते कुत्वमिष्यते । क्विन्प्रत्ययो यस्माद्धातोः स क्विन्प्रत्ययः । तस्य पदस्यालोऽन्त्यस्य कवर्गादेशो भवति । स्पृशोऽनुदके क्विन् । धृतस्पृक् । हलस्पृक । मन्त्रदृक् । क्विनः कुरिति वक्तव्ये प्रत्ययग्रहणं कृतं बहुव्रीहिविज्ञानाऽर्थम्–क्विन् प्रत्ययो यस्माद्विहितस्मादन्यस्मिन्नपि प्रत्यये कुत्वं यथा स्यात् । मा नो अस्राक् । मा नो अद्राक् । सृजिदृशिभ्यां हि क्विन् विहितः । तयोर्लुङि कुत्वमेतत् । माङ्योगेऽपि छान्दसत्वादडागमः । ईडपि

न भवति बहुलं छन्दसीति । तथा दृग्भ्यां दृग्भिरिति क्विबन्तस्यापि दृशेः कुत्वं भवै । एवं च सति रज्जुसृडभ्यामित्यत्रापि कुत्वं प्राप्नोति? अथ तु नेष्यते, ततस्तत्प्रतिविधातव्यमिति ॥

### ३७५४. नशेर्वा ॥ ६३ ॥

पदस्येति वर्त्तते । नशेः पदस्य वा कवर्गादेशो भवति । सा वै जीवनगाहुतिः । सा वै जीवनडाहुतिः । नशेरयं सम्पदादित्वाद् भावे क्विप् । जीवस्य नाशो जीवनक् । जीवनट् । चत्वे प्राप्ते कुत्वाविकल्पः ॥

### ३७५५. मो नो धातोः ॥ ६४ ॥

मकारान्तस्य धातोः पदस्य नकारादेशो भवति । प्रशान् । प्रतान् । प्रदान् । शमितमिदमादीनां क्विप । अनुनासिकस्य क्विझलोः क्ङितीति दीर्घत्वम् (१) । नवस्यासिद्धत्वान्नलोपो न भवति । म इति किम्? भिइत् । छित् । धातोरिति किम्? इदम् । किम् । पदस्येत्येव । पतामौ । पतामः ॥

### ३७५६. म्वोश्च ॥ ६५ ॥

मकारवकारयोश्च परतः मकारान्तस्य धातोर्नकारादेशो भवति । अगन्म तमसः पारम् । अगन्व । गमेर्लङि बहुलं छन्दसीति शपो लुक् । जगन्वान् । विभाषा गमहनजनविदविशामिति क्वसाविडागमस्याभावः । अपदानार्थ आरम्भः ॥

### ३७५७. ससजुषो रुः ॥ ६६ ॥

सकारान्तस्य पदस्य सजुष इत्येतस्य च रुर्भवति । सकारान्तस्य–अग्निरत्र । वायुरत्र । सजुषः – सजूर्ऋषिभिः । सजूर्दीभिः । जुषेः क्विपि सपूर्वस्य रूपमेतत् ॥

### ३७५८. अवयाः श्वेतवाः पुरोडाश्च ॥ ६७ ॥

अवयाः श्वेतवाः पुरोडाः इत्येते निपात्यन्ते । अवपूर्वस्य यजेः श्वेतपूर्वस्य वहेः पुरस्पूर्वस्य दाशतेः मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्, अवे यज इति ण्विनि कृते श्वेतवहादीनां डस्पदस्येति डस्प्रत्यये निपातनन्येतानि । किमर्थ तर्हि निपातनं यावता पूर्वेणैव रुः सिद्धः, दीर्घत्वमप्यत्वसन्तस्य चाधातोति? संबुद्धौ दीर्घार्थमेते निपात्यन्ते । अत्वसन्तम्य चाधातोरित्यत्र हि असंभुद्धाबिति वर्त्तते । हे

अषयाः । हे श्वेतवाः । हे पुरोडाः । चकारोऽनुक्तसमुच्चयार्थः । हे उक्थशाः ॥

## ३७५९. अहन् ॥ ६८ ॥

अहन्नित्येतस्य पदस्य रुर्भवति । अहोभ्याम् । अहोभिः । नलोपमकृत्वा निर्देशो ज्ञापकः – नलोपाभावो यथा स्यादिति । दीर्घाहो निदाघः । हे दीर्घाहोऽत्रेति । अहन्नित्यत्र तु लाक्षणिकत्वादहन्शब्दस्य रुर्न भवति । अह्नो रुविधौ रूपरात्रिरथन्तरेषूपसंख्यानं कर्त्तव्यम् । अहो रूपम् । अहो रात्रः । अहो रथन्तरम् । रोऽसुपीत्यस्यापवादो रुत्वमुपसंख्यायते । अपर आह – सामान्येन रेफादौ रुत्वम् भवति – अहो रम्यम् । अहो रत्नानीति ॥

## ३७६०. सेऽसुपि ॥ ६९ ॥

अहनित्येतस्य रेफादेशो भवत्यसुपि परतः । अहदर्ददारि । अहर्भुङ्क्ते । असुपीति किम्? अहोभ्याम् । अहोभिः । ननु चात्रापि प्रत्ययलक्षणेन सुबस्ति– अहद्र्ददाति, अहर्भुङ्क्त इति? नैतदस्ति । उक्तमेतत् । अह्नो रविधौ लौमता लुप्ते प्रत्ययलक्षणं न भवतीति नायमहः शब्दः सुप्परो भवति । यत्र तु लोप्शब्देन लुप्यते तत्र प्रत्ययलक्षणं भवत्येव । यथा–हे दीर्घाहोऽत्र, दीर्घाहो निदाघ इति । अत्र हि हल्ङ्याविति लोपेन प्रत्ययस्य निवृतिः ॥

## ३७६१. अम्नरूधरवरित्युभयथा छन्दसि ॥ ७० ॥

अम्नस् ऊधस् अवस् इत्येतेषां छन्दसि विषये उभयथा भवति – रुवां रेफो वा । अम्नस्–अग्न एव । अम्नरेव । ऊधस्–ऊध एव । ऊधरेव । अवस्–अव एव। अवरेव । यदा रुत्वम् तदा भोभगोअघोअपूर्वस्य योऽशीति यकारः । छन्दसि भाषायां च विभाषा प्रचेतसो राजन्युपसंख्यानं कर्त्तव्यम् । प्रचेता राजन् । प्रचेतो राजन् । अहरादीनां पत्यादिपूपसंख्यानं कर्त्तव्यम् । अहर्पतिः । अहः पतिः । गीर्प्पतिः । गीःपतिः । धूर्प्पतिः । धूःपतिः । विसर्जनीयबाधनार्थमत्र पक्षे रेफस्यैव रेफो विधीयते ॥

## ३७६२. भुवश्च महाव्यहृतेः ॥ ७१ ॥

भुवस् इत्येतस्य महाव्याहृतेश्छन्दसि विषये उभयथा भवति–रुर्वा रेफो वा। भुवरित्यन्तरिक्षम् । भुव इत्यन्तरिक्षम् । महाव्याहृतेरिति किम्? भुवो विश्वेषु भुवनेषु यज्ञियः (१) । भुवरित्येतदव्ययमन्तरिक्षवाचि महाव्याहृतिः ॥

**३७६३. वसुस्रंसुध्वंस्वनडुहां दः ॥ ७२ ॥**

ससजुषो रुरित्यतः स इति वर्त्तते । तेन संभवाद व्यभिचाराच्च वसुरेव विशेष्यते । न स्रंसुध्वम्सू, व्यभिचाराभावात् । असंभवाञ्च नानडुहशब्दः । वस्वन्तस्य पदस्य सकारान्तस्य स्रंसुध्वंसु अनडुह इत्येतेषां च दकारादेशो भवति। वसु – विद्वद्भाम् । विद्वद्भिः । पपिवद्भ्याम् । पपिवद्भिः । स्रंसु– उखास्रद्भ्याम्। उखास्रद्भिः । ध्वंसु–पर्णध्वद्भ्याम् । पर्णध्वद्भिः । अनडुह– अनडुद्भ्याम् । अनडुद्भिः। स इत्येव । विद्वान् । पपिवान् । नकारस्य न भवति । रुत्वे नाप्राप्ते इदमारभ्यत इति तद् बाध्यते । संयोगान्तलोपस्तु नैवमिति तेन तदेव दत्वं बाध्यते । अनडुहोऽपि ढत्वमनेन बाध्यते । नुमस्तु विधानसामर्थ्यान्न भवति । अनड्वान् । हे अनड्वन्निति। पदस्युत्येव । विद्वांसौ । विद्वांसः ॥

**३७६४. तिप्यनस्तेः ॥ ७३ ॥**

तिपि परतः सकारान्तस्य पदस्य अनस्तेर्दकार आदेशो भवति। अचकाद्भवान्। अन्वशाद् भवान् । तिपीति किम्? चकास्तेः क्विप् । चकाः । अनस्तेरिति किम्? आप एवेदं खलिलं सर्वमाः । आ इत्यस्तेर्लङि तिपि बहुलं छन्दसीति ईड् न कृतः ॥

**३७६५. सिपि धतो रुर्वा ॥ ७४ ॥**

सिपि परतः सकारान्तस्य पदस्य धातो रुरित्ययमादेशो भवति दकारो वा । अचकास्त्वम् । अचकात्त्वम् । अन्वशास्त्वम् । अन्वशात्त्वम् । धातुग्रहणं चोत्तरर्थ रुग्रहणं च ॥

**३७६६. दश्च ॥ ७५ ॥**

दकारान्तस्य धातो पदस्य सिपि परतो रुर्भवति दकारो वा । अभिनत्त्वम् । अभिनस्त्वम् । अच्छिनत्त्वम् । अच्छिनस्त्वम् ॥

### ३७६७. र्वोरुपधाया दीर्घ इकः ॥ ७६ ॥

रेफवकारान्तस्य धातोः पदस्य उपधाया इको दीर्घो भवति । गीः । धूः । पूः । आशीः । वाग्रहणमुत्तरार्थम् । उपधाग्रहणं किन्? अबिमर्भवान् । अभ्यासेकारस्य मा भूत् । इक इति किम्? अत्रैव प्रत्युदाहरणे भशब्दाकारस्य मा भूत् । धातोरित्येव। अग्निः । वायुः । पदस्येत्येव । गिरौ । गिरः ॥

### ३७६८. हलि च ॥ ७७ ॥

हलि च परतो रेफवकारान्तस्य धातोरुपधाया इको दीर्घो भवति । आस्तीर्णम्। विस्तीर्णम् । विशीर्णम् । अवगूर्णम् । वकारान्तस्य–दीव्यति । सीव्यति । धातोरित्येव। दिवमिच्छति चिव्यति । चतुर इच्छति–चतुर्यति । इक इत्येव स्मयते । भव्यम् । अपदान्तार्थोऽयमारम्भः ॥

### ३७६९. उपधायां च ॥ ७८ ॥

हलीत्यनुवर्त्तते । धातोरुपधाभूतौ यौ रेफवकारौ हल्परौ तयोरुपधाया इको दीर्घो भवति । हुर्छा–हूर्छिता । मुर्छा–मूर्छिता । उर्वी–ऊर्विता । धुर्वी–धूर्विता । हलीत्येव । चिरि, जिरि–चिरिणोति । जिरिणोति । इह कस्मान्न भवति । री गतौ–रिर्यतुः । रिर्युः । वी गत्यादिषु–विव्यतुः । विव्युरिति? यणादेशस्य स्थानिवत्त्वाद् असिद्धत्वाच्च बहिरङ्गलक्षणत्वेन हल्परौ रेफवकारौ न भवतः । चतुर्यितेत्यत्रापि बहिरङ्गलक्षणत्वादतो लोपस्य धातोरुपधाभूतो रेफो न भवति । प्रतिदीवनेत्यत्र तु हलि चेति दीर्घत्वम् । दीर्घविधौ लोपाजादेशस्य स्थानिवद्भावप्रतिषेधात् । असिद्धं बहिरङ्गमन्तरङ्ग इत्येतत्तु नाश्रयितव्यम् । उणादयोऽव्युत्पन्नानि प्रातिपदिकानीति जिविः किर्योगिर्योरित्येवमादिषु दीर्घो न भवति ॥

### ३७७०. न भकुर्छुराम् ॥ ७९ ॥

रेफवकारान्तस्य भस्य कुर छुर इत्येतयोश्च दीर्घो न भवति । धुरं वहाते धुर्यः । धुरि साधुर्धुर्यः । दिव्यम् । कुर–कुर्यात् । रेफवकाराभ्यां भविशेषणं किम्? प्रतिदीव्ना । प्रतिदीव्ने ॥

### ३७७१. अदसोऽसेर्दादु दो मः ॥ ८० ॥

अदसोऽसकारान्तस्य वर्णस्य दात्परन्य उवर्णादेशो भवति दकारस्य च मकारः। अमुम् । अमू । अमून् । अमुना । अमूभ्याम् । भाव्यमानेनाप्युकारेण सवर्णानां ग्रहणमिष्यत इत्येकमात्रिकस्य मात्रिको द्विमात्रिकस्य द्विमात्रिक आदेशो भवति । असेरिति किम्? अद इच्छति, अदस्यति । अदसोऽनोस्र इति वक्तव्यम् । ओकाररेफयोरपि प्रतिषेधो यथा स्यादिति । अदोत्र । अदः । तदर्थ केचित्सूत्रं वर्णयन्ति । अः सेर्यस्य सोऽयमसिः । यत्र सकारस्य अकारः । क्रियत इति । तेन त्यदाद्यत्वविधाने एतद्, अन्यत्र न भवितव्यमेवेति । अद्रयदेशे कथम् ?

अदसोद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत् ।

केचिदन्त्यसदेशस्य नेत्येकेऽसेहि दृश्यते ॥ इति ।

यैरसेरिति सकारस्य प्रतिषेधः क्रियते । अनन्त्यविकारेऽन्त्यसदेशस्येति च परिभाशा नाश्रीयते, तेशामुभयोरपि मुत्वेन भवितव्यम्– अमुमुयङ् । अमुमुयञ्चौ । अमुमुयञ्च इति । यथा चलीक्लृप्यत इति लत्वम् । ये तु परिभाशामाश्रयन्ति तेषामन्त्यसदेशस्यैव भवितव्यम्–अदमुयङ् । अदमुयञ्चौ । अदभुयञ्च इति । येषां तु त्यदाद्यत्वविषय एव मुत्वेन भवितव्यमिति दर्शनं तेषामत्र न भवितव्यम् – अदद्र्यञ्चौ । अदद्रयञ्च इति । दादिति किम्? अलोन्त्यस्य मा भूत्–अमुया । अमुयोः ॥

## ३७७२. एत ईद् बहुवचने ॥ ८१ ॥

अदसो दकारादुत्तरस्य एकारस्य ईकारादेशो भवति दकारस्य च मकारः बहुवचने वहूनामर्थानमुक्तौ । अमी । अमीभिः । अभीभ्यः । अमीषाम् । अमीषु । बहुवचन इत्यर्थनिर्देशोऽयं पारिभाषिकस्य हि बहुवचनस्य ग्रहणेऽमी इत्यत्र न स्थात् ॥

## ३७७३. वाक्यस्य टेः प्लुत उदात्तः ॥ ८२ ॥

अधिकारोऽयम् । वाक्यस्य टेरिति प्लुत इति च उदात्त इति च एतत्त्रयमप्यधिकृतं वेदितव्यमापादपरिसमाप्तेः । यदित ऊर्ध्वमनुक्रमिष्यानो वाक्यस्य टेः प्लुत उदात्त इत्येवं तद्वेदितव्यम् । दक्ष्यति–प्रत्यभिवादेऽशुद्रे । अभिवादये देवदत्तोऽहं भोः, आयुष्मानेधि देवदत्त ३ । पदाधिकारोऽनुवर्त्तत एव । वाक्यग्रहणमनन्त्यस्य पदस्य प्लुतनिवृत्त्यर्थम् । टिग्रहणं व्यञ्जनान्तस्थापि टेरचः प्लुतो यथा स्यात्–अग्निचि

३ दिति ॥

## ३७७४. प्रत्यभिवादेऽशूद्रे ॥ ८३ ॥

प्रत्यभिवादो नाम यदत्राभिवाद्यमानो गुरुराशिषं प्रयुङ्क्ते तत्राशूद्रविषये यद्वाक्थम् वर्त्तते तस्य टेः प्लुत उदात्तो भवति । अभिवादये देवदत्तोऽहं भोः आयुष्मानेधि देवदत्त ३ । अशुद्र इति किम्? अभिवादये तुषजकोऽहं भोः, आयुष्मानेधि तुषजक । स्त्रियामपि प्रतिषेधो वक्तव्यः । अभिवादये गार्ग्यहं भोः आयुष्मती भव गागि । असूयकेपि केचित् प्रतिषेधमिच्छन्ति । अभिवादये स्थाल्यहं भोः आयुष्मानेधि स्थालिन् । यावञ्च तस्या सूयकत्वं न ज्ञायते तावदेव प्रत्यभिवादवाक्यम् । तस्मिस्त्वसूयकत्वेन विज्ञाते प्रत्यभिवाद् एव नास्ति, कुतः प्लुतः । तथा ह्युक्तम्, असूयकस्त्वं जाल्म न त्वं प्रत्यभिवादनमर्हसि । भिद्यस्व वृषल स्थालिन्निति । अभिवादवाक्ये यत् संकीत्तितं नाम गोत्रं वा तद् यत्र प्रत्यभिवादवाक्यान्ते प्रयुज्यते तत्र प्लुत इष्यते । इह न भवति – देवदत्त कुशल्यसि । देवदत्त आयुष्मानेधीति । भोराजन्यविशां वेति वक्तव्यम् । भो अभिवादये देवदत्तोऽहम् । आयुष्मानेधि देवदत्त भोः ३ । आयुष्मानेधि देवदत्त भोः । राजन्य–अभिवादये इन्द्रवर्म्माऽहंभोः । आयुष्मानेधीन्द्रवर्म्म ३ न् । आयुष्मानेधीन्द्रवर्म्मन् । विश्–अभिवादये इन्द्रपालितोऽहं मोः । आयुष्मानेधीन्द्रपालित ३ । आयुय्मानेधीन्द्रपालित ॥

## ३७७५. दूराद्धूते च ॥ ८४ ॥

दूराद्धते यद्वाक्यम् वर्त्तते तस्य टेः प्लुतो भवति स चोदात्तः । आह्वानं हूतं शब्देन सम्बोधनम् । आगच्छ भो माणवक देवदत्त ३ । आगच्छ भो माणवक यज्ञदत्त ३ । दूरं यद्यप्यपेक्षाभेदादनवस्थितं तथापि हूतापेक्षं यत्तदाश्रीयते इति । यत्र प्राकृतात् प्रयत्नाद्यत्ववुशेषे आश्रीयमाणे शब्दः श्रूयते तद्दूरम् । हूतग्रहणं च सम्बोधनमात्रोपलक्षणार्थ द्रष्तव्यम् । तेन यत्राप्यह्वानं नास्ति प्लुतिर्भवति । सक्तन्पिब देवदत्त ३ । पलापस्व देवदत्त ३ इति । अस्याश्च प्लुतेरेकश्रुत्या समावेश इष्यते । दूरादिति किम्? आगच्छ भो माणवक देवदत्त । दूरादाह्वाने वाक्यस्यान्ते यत्र सम्बोधनपदम् भवति तत्रायं प्लुत इष्यते । तेनेह न भवति – देवदत्त आगच्छ (१) ॥

**३७७६. हैहेप्रयोगे हैहयोः ॥ ८५ ॥**

हैहेप्रयोगे दूराद्धूते यद्वाक्यं वर्त्तते तत्र हैहयोरेव प्लुतो भवति । है ३ देवदत्त। देवदत्त है ३ । हे ३ देवदत्त । देवदत्त हे ३ । पुनर्हैहयोर्ग्रहणमन्त्ययोरति यथा स्यात् ॥

**३७७७. गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् ॥ ८६ ॥**

प्रत्यभिवादेऽशूद्र इत्येवमादिना यः प्लुतो विहितस्तस्यैवायं स्थानिविशेष उच्यते। ऋकारवर्जितस्य गुरोरनन्त्यस्य, अपिशब्दादन्त्यस्यापि टेरेकेकस्य सम्बोधने वर्त्तमानस्य प्लुतो भवति प्राचामाचार्याणां मतेन । दे ३ वदत्त । देवद ३ त्त । देवदत्त ३ । य ३ ज्ञदत्त । यज्ञद ३ त्त । यज्ञदत्त ३ । गुरोरिति किम्? वकारात् परस्य मा भूत् । अनृत इति किम्? कृष्णामि ३ त्र । कृष्णामित्र ३ । एकैकग्रहणं पर्यायार्थम् । प्राचामिति ग्रहणं विकल्पार्थम् । आयुष्मानेधि देवदत्त । तदनेन यदेतदुच्यते सर्व एव प्लुतः साहसमनिच्छता विभाषा कर्त्तव्य इति तदुपपन्नं भवति ॥

**३७७८. ओमभ्यादाने ॥ ८७ ॥**

अभ्यादानं प्रारम्भः । तत्र य ओम्शब्दः तस्य प्लुतो भवति । ओ३म् अग्निमीले पुरोहितम् । अभ्यादान इति किम्? ओमित्येतदक्षरमुद्गीथमुपासीत ॥

**३७७९. ये यज्ञकर्म्मणि ॥ ८८ ॥**

ये इत्येतस्य यज्ञकर्म्मणि प्लुतो भवति । ये ३ यजामहे । यज्ञकर्म्मणीति किम्? ये यजामह इति पञ्चक्षरमिति स्वाध्यायकाले मा भूत् । ये यजामह इत्यत्रैवायं प्लुत इष्यते । इह हि न भवति – ये देवासो दिव्येकादशस्थ इति ॥

**३७८०. प्रणवष्टेः ॥ ८९ ॥**

यज्ञकर्म्मणीति वर्त्तते । यज्ञकर्म्मणि टेः प्रणव आदेशो भवति । क एष प्रेणवो नाम? पादस्य वार्द्धर्चस्य वान्त्यमक्षरमुपसंहृत्य तदाद्यक्षरशेषस्य स्थाने त्रिमात्रमोकारमोङ्कारं वा विदधति तं प्रणवमित्याचक्षते । अपां रेतांसि जिन्वतो३म्। देवान् । जिगाति सुम्नयो३म् । टिग्रहणं सर्वादेशार्थम्(१) । ओकारः सर्वादेशो

यथा स्यात् । व्यञ्जनान्ते अपत्यस्य मा भूदिति । यज्ञकर्म्मणीत्येव । अपां रेतासि जिन्वति ॥

### ३७८१. याज्यान्तः ॥ ९० ॥

याज्या नाम ये याज्याकाण्दे पथ्यन्ते मन्त्रास्तेषामन्त्यो यष्टिः स प्लवते यज्ञकर्मणि । स्तौमैर्विधेमाग्नये ३ । जिह्वामग्ने चकृषे हव्यवाहाम् ३ । अन्तग्रहणं किम्? याज्या नाम ऋचः काश्चिद्वाक्यसमुदायरूपास्तत्र यादन्ति वाक्यानि तेषां सर्वेषां टेः प्लुतः प्राप्नोति । सर्वान्त्यस्यैवेष्यते, तदर्थमन्तग्रहणम् ॥

### ३७८२. ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः ॥ ९१ ॥

ब्रूहि प्रेष्य श्रौषट् वौषट् आवह इत्येतेषामादेः प्लुओ भवति यज्ञकर्मणि । अग्नयेऽनुब्रु३हि । प्रेष्य – अग्नये गोमयान् प्रे३ष्य । श्रौषट्–अस्तु श्रौ३षत् । वौषट्–सोमस्थाग्ने व्रीहि वौदषट् । आवह–अग्निमा३वह । आवह देवान् यजमानायेत्येवमादावयं प्लुतो न भवति, सर्वे विधयश्छन्दसि विकल्प्यन्त इति ॥

### ३७८३. अग्नीत्प्रेषणे परस्य च ॥ ९२ ॥

अग्नीधः प्रेषणमग्नीत्प्रेषणम् । तत्रादेः प्लुतो भवति परस्य च । आ३श्रा३वय । श्रो३श्रा३वय । अत्रैवायम् प्लुत इष्यते । तेनेह न भवति – अग्नीदग्नीन्विहर वर्हिस्तृणीहिति । तदर्थ केचिद्वक्ष्यमाणं विभाशेत्यभिसंबन्धनन्ति । सा च व्यवस्थितविभाषेति । अपर आहसर्व एव प्लुतः साहसमनिच्छिता विभाषा विज्ञेय इति । इह तु उद्धर३, उद्धर; अभिहर३, अभिहरेति छन्दसः प्लुतव्यत्ययः । यज्ञकर्मणीत्येव । ओश्रावय ॥

### ३७८४. विभाषा पृष्टप्रतिवचने हेः ॥ ९३ ॥

पृष्टप्रतिवचने विभाषा हेः प्लुतो भवति । अकार्षीः कटं देवदत्त? अकार्ष हि ३ । अकार्ष हि । अलावीः केदारं देवदत्त? अलाविषं हि ३ । अलाविषं हि । पृष्टप्रतिवचन इति किम्? कटं करिष्यति हि । हेरिति किम्? करोमि ननु ॥

### ३७८५. निगृह्यानुयोगे च ॥ ९४ ॥

स्वमतात्प्रच्यावनं निग्रहः । अनुयोगस्तस्य मतस्याविष्करणम् । तत्र निगृह्यानुयोगे

यद्वाक्यं वर्त्तते तस्य टेः प्लुतो भवति विभाषा । अनित्यः शब्द इति केनचित्प्रतिज्ञातम्, तमुपालिप्सुरुपपात्तेभिर्निगृह्य साभ्यसूयमनुयुङ्क्ते–अनित्यः शब्द इत्यात्थ३, अनित्यः शब्द इत्यात्थ । अद्य श्राद्धमित्यात्थेवं वादी युक्त्या प्रच्याव्य स्वमतादेवमनुयुज्यते ॥

## ३७८६. आम्रेडितं भर्त्सने ॥ ९५ ॥

वाक्यादेरामन्त्रितस्येति भर्त्सने द्विर्वचनमुक्तं तस्याम्रेडितं प्लवते । चौर चौर३, वृषल, वृषल ३, दस्यो३, दस्यो धातयिष्यामि त्वा बन्धयिष्यामि त्वा भर्त्सने पर्यायेणेति वक्तव्यम् । चौर ३ चौर । चौर चौर ३ । तदर्थमाभ्रेडितग्रहणं द्विरुक्तोपलक्षणार्थं वर्णयन्ति ॥

## ३७८७. अङ्गयुक्तं तिङाकाङ्क्षम् ॥ ९६ ॥

अङ्ग इत्यनेन युत्तं तिङन्तमाकाङक्षं भर्त्सने प्लवते । अङ्ग कूज ३ । अङ्ग व्याहर३ इदानीं ज्ञास्यसि जाल्म । तिङिति किम्? अङ्ग देवदत्त मिथ्या वदसि । आकाङ्क्षमिति किम्? अङ्ग पच । नैतदपरमाकाङक्षति । भर्त्सन इत्येव । अङ्गधीष्व, ओदनं ते दास्यामि ।

## ३७८८. विचार्यमाणानाम् ॥ ९७ ॥

मानेन वस्तुपरीक्षणं विचारः । तस्य विषये विचार्यमाणानां वाक्यानां टेः प्लुतो भवति होतव्यं दीक्षितस्य गृहा ३ ह । होतव्यं न होतव्यमिति विचार्यते । तिष्ठेद्यृपा ३ इ । अनुप्रहरेद्यृपा ३ इ । यूपे तिष्ठेद्यूपे अनुप्रहरेदिति विचार्यते ॥

## ३७८९. पूर्वं तु भाषायाम् ॥ ९८ ॥

भाशायां विषये विचार्यमाणानां पूर्वमेव प्लवते । अहिर्नु ३ । लोष्टो नु ३ । कपोते नु ३(१) । प्रयोगापेक्षं पूर्वत्वम् । इह भाषाग्रहणात् पूर्वयोगश्छन्दसि विज्ञायते ॥

## ३७९०. प्रतिश्रवणे च ॥ ९९ ॥

प्रतिश्रवणमभ्युगमः प्रतिज्ञानम् श्रवणाभिमुख्यं च, तत्राविशेषात् सर्वस्य

ग्रहणम् प्रतिश्रवणे यद्वाक्यं वर्त्तते तस्य टेः प्लुतो भवति । गां देहि भोः, अहं ते ददामि ३ । नित्य शब्दो भवितुमर्हति, देवदत्त भोः किमात्य ३ ॥

## ३७९१. अनुदात्तं प्रश्नान्ताभिपूजितयोः ॥ १०० ॥

अनुदात्तः प्लुतो भवति प्रश्नान्ते अभिपूजिते (२) च । अगम ३ः पूर्वा३न् ग्रामा३न् । अग्निभूता ३ इ । पटा ३ उ । अग्निभूते पटो इत्येअयोः प्रश्नान्ते वर्त्तमानयोरनुदात्तः प्लुतो भवति । अगम इत्येवमादीनां तु अनन्त्यस्यापि प्रश्नाख्यानयोरिति प्लुतो भवति । अभिपूजिते–शोभनः खल्वसि माणवक ३ ॥

## ३७९२. चिदिति चोपमार्थे प्रयुज्यमाने ॥ १०१ ॥

अनुदात्तमिति वर्त्तते । चिदितेतस्मिन्निपाते उपमार्थे प्रयुज्यमाने वाक्यस्य टेरनुदात्तः प्लुतो भवति । प्लुतोऽप्यत्र विधीयते, न गुणमात्रम् । अग्निचिद्भाया३त् । राजचिद्भायात् ३ । अग्निरिव भायात् । राजेव भायादित्यर्थः । उपमार्थ इति किम्? कथंचिदाहकः । प्रयुज्यमान इति किम्? अग्निर्माणवको भायात् ॥

## ३७९३. उपरिस्विदासीदिति च ॥ १०२ ॥

अनुदात्तमिति वर्त्तते । उपरिस्विदासीदित्येतस्य टेरनुदात्तः प्लुतो भवति । अधः स्विदासी३त् । उपरिस्विदासी३त् । अधः स्विदासीदित्यत्र विचार्यमाणानामित्युदात्तः प्लुतः । उपरिस्विदासीदित्यत्र तु अनेनानुदात्तः ॥

## ३७९४. स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु ॥ १०३ ॥

स्वरितः प्लुतो भवति आम्रेडिते परतः असूयायां संमतौ कोपे कुत्सने च गम्यमाने । वाक्यादेरामन्त्रितस्यासूयासंभतिकोपकुत्सनभर्त्सनेष्विति द्विर्वचनमुक्तं, तत्रायं प्लुतविधिः । असूयायां तावत् – माणवक ३ माणवक अभिरूपक ३ अभिरूपक रिक्तं त आभिरूप्यम् । संमतौ–माणवक ३ माणवक अभिरूपक ३ अभिरूपक शोभनः खल्वसि । कोपेमाणवक ३ माणवक अविनीतक ३ अविनीतक इदानीं ज्ञास्यसि जाल्म । कुत्सने शाक्तीक ३ शाक्तीक याष्टीक ३ याष्टीक रिक्ता ते शक्तिः । असूयादिषु वावचनं कर्त्तव्यम् । माणवक माणवकेत्येवमाद्यपि यथा स्यात् ॥

### ३७९५. क्षियाशीःप्रैषेषु तिङाकाङ्क्षम् ॥ १०४ ॥

स्वरित इति वर्त्तते । (१) क्षिया आचारभेदः । आशिः प्रार्थनाविशेषः । शब्देन व्यापारणं प्रैषः । एतेषु गम्यमानेषु तिङन्तमाकङ्क्षं यत्तस्य स्वरितः प्लुतो भवति । आकाङ्क्षतीत्याकाङ्क्षं तिङन्तमुत्तरपदमाकाङ्क्षतीत्यर्थः । क्षियायां तावत्– स्वयं रथेन याति ३ उपाध्यायं पदार्ति गमयतीति । स्वयम् ओदनं ह भुङ्क्ते ३ उपाध्यायं सक्तून् पाययति । पूर्वमत्र तिङन्तमुत्तरमाकाङ्क्षतीति साकाङ्क्षं भवति। आशिषि – सुतांश्च लप्सीष्ट ३ धनं च तात । छन्दोऽध्येष्ट ३ व्याकरणं क्ष भद्र । प्रैषे–कटं कुरु ३ ग्रामं च गच्छ । यवान् लुनीहि ३ सक्तूंश्च पिब । आकाङ्क्षमिति किम्? दीर्घ ते आयुरस्तु । अग्नीन् विहर ॥

### ३७९६. अनन्त्यस्यापि प्रश्नाख्यानयोः ॥ १०५ ॥

पदस्येति वर्त्तते स्वरितमिति च । अनन्त्यस्यापि पदस्य टेः प्लुतो भवति प्रश्ने आख्याने च । अगम३ः पूर्वा ३ न् ग्रामा ३ न् । अग्निभूत ३ इ । पटः ३ उ । सर्वेषामेव पदानामेष स्वरितः प्लुतः । अन्त्यस्य अनुदात्तं प्रश्नान्ताभिपूजितयोरिति अनुदात्तोऽपि पक्षे भवति । आख्याने–अगम ३ः पूर्वा३न् ग्रामा ३न् भो ३ ॥

### ३७९७. प्लुतवैच इदुतौ ॥ १०६ ॥

दूराद् धूतादिषु प्लुतो विहितः । तत्र ऐचः प्लुतप्रसङ्गे तदवयवभूताविदुतौ प्लुतौ । ऐ३तिकायन । औ३पगव । अत्र यदेवर्णोवर्णयोरवर्णस्य च समविभागस्तद इदुतौ द्विमात्रावनेन प्लुतौ क्रियेते । प्लुताविति हि क्रियानिमित्तोऽयं व्यपदेशः । इदुतौ प्लवेतेवृद्धिं गच्छत इत्यर्थः । तावती च सा प्लुतिर्भवति यया तावेचौ त्रिमात्रौ संपद्येते । रुदा त्वर्द्धमात्रावर्णस्याध्यर्द्धमात्रा इवर्नोवर्णयोस्तदा तावर्द्धतृतीयमात्रौ क्रियेते इति । भाष्ये तूक्तम्–इष्यते चतुर्मात्रः प्लुत इति । तत्कथम्? समप्रविभागपक्षे
क्रियेते इति । भाष्ये तूक्तम्–इष्यते चतुर्मात्रः प्लुत इति । तत्कथम्? समप्रविभागपक्षे
इदुरतोरनेन त्रिमात्रः प्लुतो विधीयते ॥

### ३७९८. एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुत्तौ ॥ १०७ ॥

एचोऽप्रगृह्यस्यादूराद्धूते प्लुनविषयस्यार्द्धस्याकार आदेशो भवति च स प्लुतः उत्तर स्येकारोकारावादेशौ भवतः । विषयपरिगणनं कर्त्तव्यम् – प्रश्नान्तामिपूजितविचार्यमाण प्रत्यभिवादयाज्यान्तेष्विति वक्तव्यम् । प्रश्नान्ते–अगम३ः पूर्वा३न् ग्रामा३न् अग्निभूत ३इ । पटा२उ । अभिपूजिते–भद्रं करोषि माणवक३ अग्निभूता ३इ । पटा३उ । विचार्यमाणे – होतव्यं दी क्षितस्य गृहा३इ । प्रत्यभिवादे – आयुष्मानेधि अग्निभूता३इ । पटा३उ याज्यान्ते–उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे । स्तोमैर्विधेमन्नया३इ । सोऽयनाकार प्लुतो यथाविषयमुदात्तोऽनुदात्तः स्वरितो वेदितव्यः । इदुतौ पुनरुदात्तावेव भवतः परिगणनं किम्? विष्णुभूते विष्णुभूते३ घातयिष्यामि त्वा । आगच्छ भो माणवक विष्णु भूते । परिगणने च सत्यदूराद्धूत इति न वक्तव्यम् । पदान्तग्रहणं तु कर्त्तव्यम् । इह म भूत्–भद्रं करोषि गौरिति । अप्रगृह्यस्येति किम्? शोभने खलुस्तः खट्वे३ । आमन्त्रितं छन्दसि प्लुतविकारोऽयं वक्तव्यः । अग्ना३इ पत्नी व३ः ॥

**३७९९. तयोर्य्वायचि संहितायाम् ॥ १०८ ॥**

तयोरिदुतोर्यकारवकारादेशौ भवतोऽचि संहितायां विषये । संहितायामित्येतच्चा धिकृतमित उत्तरमध्यायपरिसमाप्तेर्यद्वचयामः संहितायामित्येवं तद्वेदितव्यम् । अग्ना३ याशा । पटा३वाशा । अग्ना३यिन्द्रम् । पटा३वुदकम् । अचीति किम्? अग्ना३इ। पटा३उ । संहितायामिति किम्? अग्ना३इ इन्द्रम् । पटा३उ उदकम् । इदुत्तोरसिद्धत्वादिकयणचीति न प्राप्नोतीत्ययमारम्भः । अथापि कथं चित्तयोः सिद्धत्वं स्यादेवमपि सवर्णदीर्घत्वनिवृत्त्यर्थ शाकलनिवृत्यर्थ च वक्तव्यमेतत् । अथापि तन्निवृत्त्यर्थ यत्नान्तरमस्ति तथापि यण्स्वरनिवृत्त्यर्थमिदमरभ्यते । यणादेशस्यासिद्धत्वाद् उदात्तस्वरियोर्यणः स्वरितोऽनुदात्तस्येत्येष स्वरो न भवति ॥

किं तु यणा भवतीह न सिद्धं वाविदुतोर्यदयं विदधाति ।
तौ च मम स्वरसन्धिषु सिद्धौ शाकलदीर्घविधी तु निवर्त्यौ ॥
इक्तु यदा भवति प्लुतपूर्वस्तस्य यणं विदधात्यपवादम् ।
तेन तयोश्च न शाकलदीर्घौ यण्स्वरबाधनमेव तु हेतुः ॥

**इति श्रीवामनविरचितायां काशिकायाम् वृत्तौ**
**अष्टमाध्ययस्य द्वितीयः पादः ॥**

# अथ अष्टमाध्यायस्य
# तृतीयः पादः ॥

### ३८००. मतुवसो रु संबुद्धौ छन्दसि ॥ १ ॥

संहितायामिति वर्त्तते । मत्वन्तस्य वस्वन्तस्य च पदस्य रुरित्यमादेशो भवति सम्बुद्धौ परतः छन्दसि विषये । मत्वन्तस्य तावत्–इद्र मरुत्व इह पाहि सोमम् । हरिवो मेदिनं त्वा । मरुतोऽस्य सन्ति, हरयोऽस्य सन्ति इति मतुप् । सुप्तकारयोर्हल्ङ्यदिलोपे संयोगान्तस्य लोपे च कृते नकारस्य रुर्भवति । वस्वन्तस्य खल्वपि–मीढवस्तोकाय तनयाय इन्द्र साह्वः । क्वसोर्निपातनं दाश्वानिति । मतुवसोरिति किम्? ब्रह्मन्स्तोष्यामः । संबुद्धाविति किम्? य एवं विद्वानग्निमाधते । छन्दसीति किम्? हे गोमन् । हे पपिवन् । वन उपसंख्यानं कर्त्तव्यम् । यस्त्वायन्तं वसुना प्रातरित्वः । इणः प्रातःपूर्वस्य छन्दसि क्वनिप् । विभाषा भवद्भगवदघवतामोच्चावस्य। छन्दसि भाषायां च भवद् भगवद् अघवद् इत्येतेषां विभाषा रुर्वक्तव्योऽवशब्दस्य च ओकारादेशः । सामान्येन छन्दसि भाषायां चेदं वचनम् । भवत्–हे भोः । हे भवन् । भगवद्–हे भगोः । हे भगवन् । अघवत्–हे अघोः । हे अघवन् । निपातनविज्ञानाद्वा । सिद्धम् । अथवा भो इत्येवमादयो निपाता द्रष्टव्याः । असंबुद्धावपि द्विवचनबहुवचनयोरपि दृश्यन्ते–भो देवदत्तयज्ञदत्तौ । भो देवदत्तयज्ञदत्तविष्णुमित्राः। तथा स्त्रियामपि च दृश्यन्ते–भो ब्राह्मणि इत्यादि । संहिताधिकार उत्तरत्रोपयुज्यते यत्र भिन्नपदस्थौ निमित्तनिमित्तिनौ–नश्छव्यप्रशानिति (१) ॥

### ३८०१. अत्रानुनासिकः पूर्वस्य तु वा ॥ २ ॥

अधिकारोऽयम् । इत उत्तरं यस्य स्थाने रुर्विधीयते ततः पूर्वस्य तु वर्णस्य वाऽनुनासिको भवतीत्येतदधिकृतं वेदितव्यम्, यदित ऊर्द्ध्वमनुक्रमिष्यामस्तत्र । वक्ष्यतिसमः सुटि । सँस्स्कर्त्ता । सँस्स्कर्त्तम् । सँस्स्कर्त्तव्यम् । अत्रग्रहणं रुणा सह संनियोगप्रतिपत्त्यर्थम् । अधिकारपरिमाणापरिग्रहे हि सति ढो ढे लोप इत्यत्रापि पूर्वस्याऽनुनासिक अशङ्क्येत ॥

## ३८०२. आतोऽटि नित्यम् ॥ ३ ॥

अटि परतो रोः पूर्वस्याकारस्य स्थाने नित्यमनुनासिकादेशो भवति। दीर्घादटि समापूर्ववर्त्ती आकार के स्थान में नित्य अनुनासिक आदेश हो जाता है ।

नपाद इति रुत्वं वक्ष्यति । ततः पूर्वस्यातोऽनुनासिकविकल्पे प्राप्ते नित्यार्थं वचनम् । महाँ असि । महाँ इन्द्रो य ओकसा । देवाँ अच्छादीव्यत् । केचिदनुस्वारमधीयते । स च्छान्दसो व्यत्ययो द्रष्टव्यः । अत इति किम्? ये वा वनस्पतीरनु । अटीति किम्? भवांश्चरति । भवांश्लाघयति (१) नित्यग्रहणं विस्पष्टार्थम् (२) ॥

## ३८०३. अनुनासिकात्परोऽनुस्वारः ॥ ४ ॥

अन्यशब्दोऽत्राध्याहर्त्तव्यः । तदपेक्षया चेयमनुनासिकादिति पञ्चमी । अनुनासिकादन्यो यो वर्णः रोः पूर्वः यस्यानुनासिको न विहितस्ततः परोऽनुस्वार आगमो भवति। वक्ष्यति–समः सुटि–संस्स्कर्त्ता। संस्स्कर्त्तव्यम्। पुमः खय्यम्परे – पुस्कांमा । नश्छव्यप्रशान्–भवांश्चरति । केचित्त परशब्दमेवान्यार्थ वर्णयन्ति । अनुनासिकात् परोऽनुनासिकादन्योनुऽस्वारो भवति। यस्मिन् पक्षेऽनुनासिको नास्ति तत्रनुस्वारागमो भवति । स तु कस्यागमो भवति? रोः पूर्वस्यैवेति वर्त्तते, व्याख्यानादादेशो न भवति ॥

## ३८०४. समः सुटि ॥ ५ ॥

रुर्वत्तंते। सम इत्येतस्य रुर्भवति सुटि परतः संहितायां विषये। संस्कार्त्ता.। संस्कर्त्तम् । संस्कर्त्तव्यम् । संसस्कर्त्ता । संसस्कर्त्तुम् । ससस्कर्त्तव्यम् । अत्र रोविसर्जनीये कृते वा शरीति पक्षे विसर्जनीय एव प्राप्नोति । व्यवस्थितविभाषा द्रष्टव्या । तेनात्र नित्यं सकार एव भवति । अस्मिन्नेव सूत्रे सकारादेशो वा निर्द्दिश्यते – समः सुटीति द्विसकारको निद्र्देशः । सम इति किम्? उपस्कर्त्ता । सुटीति किम्? संकृतिः। कश्चिदाह–संपुंकानां सो वक्तव्यः। रुविधौ ह्यनिष्टप्रसङ्गः। संसस्कर्त्ता । पुंस्कामा । कांस्कानिति ॥

## ३८०५. पुमः खय्यम्परे ॥ ६ ॥

पुमित्येतस्य रुर्भवति अम्परे खयि परतः। पुँस्कामा। पुंस्कामा। पुँस्पुत्रः।

पुंस्पुत्रः। पुँस्फलम्। पुंस्फलम्। पुँश्चली। पुंश्चली। पुंस्कामेत्यत्र विसर्जनीयस्य कुप्वो क पौ चेति प्राप्नोति । तस्मादत्र सकार एवादेशो वक्तव्यः । द्विसकारकनिर्देशपक्षे तु पूर्वस्मादेव सूत्राम् स इत्यनुवर्त्तते। रुत्वं त्वनुवर्तमानमपि नात्राभिसंबध्यते । संबन्धानुवृत्तिस्तस्येति । खयीति किम्? पुंदासः । पुंगवः । पुंगवः । अम्पर इति किम्? पुंक्षीरः । पुंक्षीरः । पुंक्षुरः । परग्रहणं किम्? पुमाख्यः। पुमाचारः ॥

### ३८०६. नश्छव्यप्रशान् ॥ ७ ॥

अम्पर इति वर्त्तते। नकारान्तस्य पदस्य प्रशान्वर्जितस्य रुर्भवत्यम्परे छवि परतः । भवांश्छादयति २ । भवांश्चिनोति २ । भवांष्टीकते २ । भवांस्तरति २ । छवीति किम्? भवान् करोति। अप्रशानिति किम्? प्रशाञ्छादयति। प्रशाञ्चिनोति। अम्पर इत्येव–भवान् त्सरुकः ॥

### ३८०७. उभयथर्क्षु ॥ ८ ॥

पूर्वेण नित्ये प्राप्ते विकल्पः क्रियते । नकारान्तस्य पदस्य छवि परतः अम्पते उभयथा ऋक्षु भवति – रुर्वा नकारो वा। तस्मिंस्त्वा दधाति। तस्मिन्त्वा दधाति। ऋक्ष्विति किम्? तांस्त्वं खाद सुखादितान् ॥

### ३८०८. दीर्घादटि समानपादे ॥ ९ ॥

न इत्यनुवर्त्तते । दीर्घादुत्तरस्य पदान्तस्य नकारस्य रुर्भवत्यटि परतस्तौ चेन्निमित्तनिमित्तिनौ समानपादे भवतः। टुक्ष्विति प्रकृतत्वाद्ऋक्पाद इह गृह्यते । परिधी रति । देवां अच्छादीव्यत् । महां इन्द्रो य ओजसा । दीर्घादिति किम्? अहन्नहिम् । अटीति किम्? इभ्यान्क्षत्रियान् । समानपाद इति किम्? यातुधानानुपस्पृशः। उमयथेत्येव–आदित्यान् हवामहे ।

### ३८०९. नॄन्पे ॥ १० ॥

नॄनित्येतस्य नकारस्य रुर्भवति पशब्दे परतः। अकार उच्चारणार्थः। नॄँपाहि। नॄःपाहि । नँॄप्रीणीहि । प्रीणीहि । नॄप्रीणिहि । प इति किम्? नॄन्भोजयति । उभयथेत्यपि केचिदनुवर्त्तयन्ति। नॄन्पाहीत्यपि यथा स्यात् ॥

## ३८१०. स्वतवान्पयौ ॥ ११ ॥

स्वतवानित्येतस्य रुर्भवति पायुशब्दे परतः । स्वतर्वोः पायुरग्ने ॥

## ३८११. कानाम्रेडिते ॥ १२ ॥

कानित्येतस्य नकारस्य रुर्भवति आम्रेडिते परतः । कांस्कानामन्त्रयते । कांस्कान्भोजयति । अस्य कस्कादिषु पाठो द्रष्टव्यः । तेन कुप्वोः क पौ चेति न भवति । समः सुटीत्यतो वा सकारोऽनुवर्त्तते, स एवात्र विधीयते । पूर्वेषु योगेषु संबन्धानुवृत्त्या गतस्य रोरत्रानभिसंबन्धः । आम्रेडित इति किम्? कान् कान् पश्यति । एकोऽत्र कुत्सायाम् ॥

## ३८१२. ढो ढे लोपः ॥ १३ ॥

ढकारस्य ढकारो लोपो भवति । सत्यपि पदाधिकारे तस्यासंभवादपदान्तस्य ढकारस्यायं लोपो विज्ञायते । लीढम् । उपगूढम् । ष्टुत्वस्यात्र सिद्धत्वमाश्रयाद् द्रष्टव्यम् । श्वलिड्ढौकत इत्यत्र तु जश्त्वे कृते कार्य नास्तीति लोपाभावः । न च डलोपो जश्त्वापवादो विज्ञातुं शक्यते? तस्य हि लीढादिर्विषयः संभवति । तत्र हि श्रुतिकृतमानन्तर्यमस्ति, शास्त्रकृतम् तु यदा नानन्तर्य ष्टुत्वस्यासिद्धत्वेन प्राप्तं तत्तु सूत्रकरणसामर्ध्याद् बाध्यते । श्वलिड्ढौकत इत्यत्र तु न श्रतिकृतमानन्तर्य न शास्त्रकुतमिति अविषयोऽयं ढलोपस्य ॥

## ३८१३. रो रि ॥ १४ ॥

रेफस्य रेफे परतो लोपो भवति । नीरक्तम् । अग्नी रथः । इन्दू रथः । पुना रक्तं वासः । प्राता राजक्रयः । पदस्येत्यत्र विशेषणे षष्ठी । तेनापदान्तस्यापि रेफस्य लोपो भवति । जगृधेरजर्घाः । पास्पर्द्धेरपास्पा इति ॥

## ३८१४. खरवसानयोर्विसर्जनीयः ॥ १५ ॥

र इति वर्त्तते । रेफान्तस्य पदस्य खरि परतोऽवसाने च विसर्जनीयादेशो भवति । वृक्षश्छादयति । प्लक्षश्छादयति । वृक्षस्तरति । प्लक्षस्तरति (१) । अवसाने–वृक्षः । प्लक्षः । खरवसानयोरिति किम्? अग्निर्नयति । वायुर्नयति । इह

नृकुव्यां भवः नार्कुटः, नृपतेरपर्यं नार्पत्य इति वृद्धेर्वहिरङ्गलक्षणत्वात्तदाश्रयस्य रेफस्यासिद्धं बहिरङ्गमित्यसिद्धत्वाद्वि सर्जनीयो न भवति ॥

## ३८१५. रोः सुपि ॥ १६ ॥

रु इत्येतस्य रेफस्य सुपि परतो विसर्जनीयादेशो भवति । पयःसु । सर्पिःषु, यशःसु । सुपीति सप्तमीबहुवचनं गृह्यते । सिद्धे सत्यरम्भो नियमार्थः – रोरेव सुपि विसर्जनीयादेशो नान्यस्य । गोर्षु । धूर्षु ॥

## ३८१६. भोभगोअघोअपूर्वस्य योऽशि ॥ १७ ॥

भो भगो अघो इत्येवंपूर्वस्य अवर्णपूर्वस्य च रो रेफस्य यकारादेशो भवति अशि परतः । भो अत्र । भगो अत्र । अघो अत्र । भो ददाति । भगो ददाति । अघो ददाति । अवर्णपूर्वस्य – क आस्ते । कय आस्ते । ब्राह्मणा ददति । पुरुषा ददति । भोभगोअघोअपूर्वस्येति किम्? अग्निरत्र । वायुरत्र । अश्ग्रहणं किम्? वृक्षः । प्लक्षः । नैतदस्ति, संहितायामित्यनुवर्त्तते? तर्हि अश्ग्रहणमुत्तरार्थम् । हलि सवषामित्ययं लोपोऽशि हलि यथास्यात् । इह मा भूत्–वृक्षं वृश्चतीति वृक्षवृट्, तमाचष्टे यः स वृक्षवयति । वृक्षवयतेरप्रत्ययः, वृक्षव् करोति । अथ तत्रैव अश्ग्रहणं कस्मान्न कृतम्? उत्तरार्थम् । मोनुस्वार इति हल्मात्रे यथा स्यात् । व्योर्लघुप्रयत्त्वतरः शाकटाथनस्थ, लोपः शाकल्यस्येत्येतच्च वृक्षव् करोतीत्यत्र मा भूदित्यश्ग्रहणम् । रोरित्येव–प्रातरत्र । पुनरत्र ॥

## ३८१७. व्योर्लघुप्रयत्नतरः शाकटायनस्य ॥ १८ ॥

वकारयकारयोर्भोभगोअघोअवर्णपूर्वयोः पदान्तयोर्लघुप्रयत्नतर आदेशो भवति अशि परतः शाकटायनस्याचार्यस्थ मतेन । भगोयत्र । भगो अत्र । अधोयत्र । अघो अत्र । क आस्ते । कयास्ते । अस्मायुद्धर । अस्मा उद्धर । असावादित्यः । असा आदित्यः । द्वावत्र । द्वा अत्र । द्वावानय । द्वा आनय । लघप्रयत्नतरत्वमुच्चारणे स्थानकरणशैथिल्यम् । स्थानं ताल्वादि । करणम् जिह्वामूलादि । यतोरुच्चारणे शेथिल्यं मन्दप्रयत्नता ॥

## ३८१८. लोपः शाकल्यस्य ॥ १९ ॥

वकारयकारयोः पदान्तयोरवर्णपूर्वर्लोपो भवति शाकल्यस्याचार्यस्य मतेन अशि परतः । क आस्ते । कयास्ते । काक आस्ते । काकयास्ते । अस्मा उद्धर । अस्मायुद्धर । द्वावत्र । द्वा अत्र । असावादित्यः । असा आदित्यः । आकल्यग्रहणं विभाषार्थम् । तेन यदापि लघुप्रयत्नतरो न भवत्यादेशस्तदापि व्योः पक्षे श्रवणं भवति ॥

## ३८१९. ओतो गार्ग्यस्य ॥ २० ॥

ओकारादुत्तरस्य यकारस्य लोपो भवति गार्ग्यस्याचार्य्यस्य मतेन अशि परतः । भो अत्र । भो इदम् । भगो इदम् । नित्यार्थोऽयमारम्भः । गार्ग्यग्रहणं पूजार्थम् । योऽयमलघुप्रयत्नस्य विकल्पेन लोपः क्रियते सोऽनेन निवर्त्त्यते । लघुप्रयत्नतरस्तु भवत्येव यकारः । भो अत्र । भोयत्र । भागो अत्र । अगोयत्र । अघो अत्र । अघोयत्र । केचित्तु सर्वमेव यकारमत्र नेच्छन्ति ॥

## ३८२०. उञि च पदे ॥ २१ ॥

अवर्णपूर्वयोः व्योः पदान्तयोर्लोपो भवति उञि च पदे परतः । स उ एकविंशतिः । स उ एकाग्निः । पद इति इति किम्? तन्त्र उतं, तन्त्रयुतम् । वेञः संप्रसारणे कृते उञिति भूतपूर्वेण ञकारेण शक्यते प्रतिपत्तुमिति । अथ उञित्येवंरूपो निपातः प्रतिपदोक्तोऽस्ति, तदा लाक्षणिकत्वाद्वेञादेशस्य ग्रहणमिह नास्ति, उत्तरार्थ पदग्रहणं क्रियते ॥

## ३८२१. हलि सर्वेषाम् ॥ २२ ॥

हलि परतो भोभगोअघोअपूर्वस्य यकारस्य (१) लोपो भवति सर्वेषामाचार्याणां मतेन । भो हसति । भगो हसति । अघो हसति । भो यति । भगो याति । अघो याति । वृक्षा हसन्ति । सर्वेषां ग्रहणं शाकटायनस्यापि लोपो यथ स्यात्, लघुप्रयत्नतरो मा भूदिति ॥

## ३८२२. मोऽनुस्वारः ॥ २३ ॥

मकारस्य पदान्तस्यानुस्वार आदेशो भवति हलि परतः । कुण्डं हसति । वनं हसति । वनं याति । कुण्डं याति । हलीत्येव– त्वमत्र । किमत्र । पदान्तस्येत्येव–

गम्यते । रम्यते ॥

## ३८२३. नश्चापदान्तस्य झलि ॥ २४ ॥

नकारस्य मकारस्य चापदान्तस्यानुस्वारादेशो भवति झलि परतः । पयांसि । यशांशि । सर्पौंषि । धनूंषि । मकारस्य–आक्रंस्यते । आचिक्रंस्यते । अधिजिगांसते । अपदान्तस्येति किम्? राजन् भुङ्चव । झलीति किम्? रम्यते । गम्यते ॥

## ३८२४. मो राजि समः क्वौ ॥ २५ ॥

समो मकारस्य मकार आदेशो भवति राजतौ क्विप्रत्ययान्ते परतः । सभ्राट् । साम्राज्यम् । मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थम् । राजीति किम्? संयत् । सम इति किम्? किं राट् । क्वाविति किम्? संराजिता । संराजितम् । संराजितव्यम् ॥

## ३८२५. हे मपरे वा ॥ २६ ॥

हकारे मकारपरे परतो मकारस्य वा मकार आदेशो भवति । किं ह्मलयति । किम् ह्मल्यति । कथं ह्मलयति । कथम् झलयति । यवलपरे यवला वा । यवलपरे हकारे मकारस्य यवला यथासंख्यं वा भवन्तीति वक्तव्यम् । कियँह्यः । किं ह्यः । किवँ ह्वलयति । किं ह्वलयति । किलँहलादयति । किंहलादयति ॥

## ३८२६. नपरे नः ॥ २७ ॥

नकारपरे हे परतः मकारस्य वा नकारादेशो भवति । किन् ह्नु ते । किं ह्नते । कथन् ह्नुते । कथं ह्नुते ।

## ३८२७. ङ्णोः कुक्टुक् शरि ॥ २८ ॥

ङकारणकारयोः पदान्तयोः कुक् टुग् इत्येतावागमौ वा भवतः शरि परतः । प्राङ्क्शेते । प्राङ्शेते । प्राङ्क्षष्ठः । प्राङ् षष्ठः । प्राङ्क्साये । प्राङ् साये । णकारस्य – वण्ट्शेते । वण् शेते । पूर्वान्तकरणं प्राङ्क छेते इत्यत्र छत्वार्थम् । शश्छोटीति हि पदान्ता–उझय इति तद्विज्ञायते । इह मा भूत्–पुरा क्रूरस्य विसृपो विरप्शिन् । प्राङ्क् साय इत्यत्रापि सात्पदाद्योरिति षत्वप्रतिषेधार्थञ्च । वण्ट् साय इत्यत्र च न पदान्ताट्टोरनामिति ष्टुत्वप्रतिपेधार्थम् ॥

## ३८२८. डः सि धुट् ॥ २९ ॥

डकारान्तात्पदादुत्तरस्य सकारादेः पदस्य वा धुडागमो भवति। श्वलिट्त्साये। मधुलिटत्साये। श्वलिट् साये। मधुलिट् साये। परादिकरणं न पदान्ताठ्टोरनामिइ ष्टुत्वप्रतिषेधार्थम् ॥

## ३८२९. नश्च ॥ ३० ॥

नकारान्तात्पदादुत्तरस्य सकारस्य वा धुडागमो भवति। भवान्त्साये। महान्त्साये। भवान्साये। महान्साये। धुटश्चर्त्वस्य चासिद्धत्वान्नश्छव्यप्रशानिति रुत्वं न भवति॥

## ३८३०. शि तुक् ॥ ३१ ॥

नकारस्य पदान्तस्य शकारे परतो वा तुगागमो भवति । भवाञ्च्छेते । पूर्वान्तकरणं छत्वार्थम् । यद्येवं कुर्वञ च्छेते इत्यत्र नकारस्यापदान्तत्वाण्णत्वं प्राप्नोति? तत्र समाधिमाहुः – स्तोः श्रुनाश्चुरित्यत्र योगविभागः क्रियते णत्वप्रतिषेधर्थ स्तोः श्चुना णकरो न भवतीति । ततः श्चुरिति ॥

## ३८३१. ङमो ह्रस्वादचि ङमुण्नित्यम् ॥ ३२ ॥

ह्रस्वात्परो यो ङम् तदन्तात्पदादुत्तरस्याचो ङमुडागमो भवति नित्यम् । ङणनेभ्यो यथासंख्यं ङणना भवन्ति । ङकारान्ताद् ङट्–प्रत्यङ्ङास्ते । णकारान्ताण्णुट्–वण्णास्ते। वण्णावोचत्। नकारान्तान्नुट्–कुर्वन्नान्ते। कुर्वन्नवोचत् । कृषन्नास्ते । कृषन्नवोचत् । ङम इति किम्? त्वमास्से । ह्रस्वादिति किम्? प्राङास्ते। मवानास्ते। अचीति किम्? प्रत्यङ् करोति। इह परमदण्डिनौ प्रमदण्डिनेति उत्तरपदत्वे चापदादिविधाविति प्रत्ययलक्षणप्रतिषेधादुत्तरपदस्य पदत्वं नास्तीति ङमुण्न भवति। अथवा, उञि च पद इत्यतः सप्तम्यन्तं पद इत्यनुवर्त्तते । तेन अजादौ पदे ङमुड भवति ॥

## ३८३२. मय उञो वो वा ॥ ३३ ॥

मय उत्तरस्य उञो वा वकारादेशो भवति अचि परतः। शमु अस्तु वेदिः । शम्वस्तु वेदिः। तदु अस्य परेतः। तद्वस्य परेतः। किमु आवपनम्। किम्वावपनम्।

प्रगृह्यत्वादुञः प्रकृतिभावे प्राप्ते वकारो विधीयते। तस्यासिद्धत्वाद्धलीति मोऽनुस्वारो न भवति ॥

## ३८३३. विसर्जनीयस्य सः ॥ ३४ ॥

खरीत्यनुवर्त्तते । विसर्जनीयस्य सकार आदेशो भवति खरि परतः । वृक्षश्छादयति । प्लक्षश्छादयति । वृक्षष्ठकारः । प्लक्षष्ठकारः । वृक्षस्थकारः । प्लक्षस्थकारः। वृक्षश्चिनोति। प्लक्षश्चिनोति। वृक्षष्टीकते। प्लक्षष्टीकते। व्रुक्षस्तरति। प्लक्षस्तरति ॥

## ३८३४. शर्प्परे विसर्जनीयः ॥ ३५ ॥

शर्परे खरि परतो विसर्जनीयस्य विसर्जनीयादेशो भवति। शशः क्षुरम्। पुरुषः क्षुरम् । अद्भिःप्सातम् । वासःक्षौमम् । पुरुषः त्सरुः । घनाघनः क्षोभणश्चर्षणीनम्। नेति वक्तव्ये विसर्जनीयस्थ विसर्जनीयादेशविधानं विकारनिवृत्त्यर्थम्। तेन जिह्वामूलीयोपध्मानीयौ न भवतः ॥

## ३८३५. वा शरि ॥ ३६ ॥

विसर्जनीयस्य विसर्जनीयादेशो वा भवति शरि परे। वृक्षः शेते। प्लक्षः शेते । वृक्षश्शेते । प्लक्षश्शेते । वृक्षः षण्डे । वृक्षष्षण्डे । वृक्षः साये । वृक्षस्साये। खर्परे शरि वा लोपो वक्तव्यः। वृक्षा स्थातारः। वृक्षाः स्थातारः। वृक्षास्स्थातारः ॥

## ३८३६. कुप्वोः क पौ च ॥ ३७ ॥

कवर्गपवर्जयोः परतोः विसर्जनीयस्य यथासंख्यं क प इत्येतावादेशौ भवतः, चकाराद्विसर्जनीयश्च। वृक्ष करोति। वृक्षः करोति। वृक्ष खनति। वृक्षः खनति। वृक्ष पचति। वृक्षः पचति। वृक्ष फलति। व्रुक्षः फलति। कपावुच्चारणार्थौ। जिह्वामूलीयोपध्मानीयावेतावादेशौ विसर्जनीयस्य स इत्येतस्मिन्नाप्राप्ते इदमारभ्यते इत्येतस्य बाधकं, शर्परे विसर्जनीय इत्येतत्तु न बाध्यते–वासः क्षौमम्। अद्भिः प्सातम्। पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्येति शर्पते विसर्जनीय इत्येतदेव

भवति । केचित्त एतदर्थं योगविभागं कुर्वन्ति । कुप्वोः । शरपरयोः विसर्जनीयस्य विसर्जनीय आदेशो भवति । किमर्थमिदम्? क पौ चेति वक्ष्यति, तद्बाधनार्थमिति ॥

### ३८३७. सोऽपपादौ ॥ ३८ ॥

सकार आदेशो भवति विसर्जनीयस्य कुप्वोरपदाद्योः परतः पाशकल्पककाम्येषु । याप्ये पाशप्–पयस्पाशम् (१) । ईषदपरिसमाप्तौ कल्पप्–पयस्कल्पम् । यशस्कल्पम् । प्रागिवात्कः – पयस्कम् । यशस्कम् । काम्यच्च – पयस्काम्यति । यशस्काम्यति । अपदादाविइ किम्? पय कामयते । पय पिबति । सोऽपदादावित्यनव्ययस्येति वक्तव्यम् । इह मा भूत्–प्रातः कल्पम् । पुनः कल्पमिति । रोः काम्ये नियमार्थम् । रोदेव काम्ये नान्यस्येति नियमार्थ वक्तव्यम् । पयस्काम्यति । यशस्काम्यति । इह मा भूत्–गीः काम्यति । धूः काम्यति । उपध्मानीयस्य कवर्गे परतः सकार आदेशो भवतीति वक्तव्यम् । किं प्रयोजनम् ? उब्जिरुपध्मानीयापधः पठ्यत इति दर्शने अभ्युद्रः इति यथा स्यात् ॥

### ३८३८. इणः षः ॥ ३९ ॥

अपदादाविति वर्त्तते । इण उत्तरस्य विसर्जनीयस्य षकारादेशो भवति कुप्वोरपदाद्योः परतः पाशकल्पककभेषु । पाश–सर्पिष्पाशम् । यजुष्पाशम् । कल्प–सपिष्कल्पम् । यजु–ष्कल्पम् । क–सर्पिष्कम् । यजुष्कम् । काम्य–सपिष्काम्यति । यजुष्काम्यति । अपदादावित्येव । अग्निः करोति । वायुः करोति । अग्निः पचति । वायुः पचति । कुप्वोरित्येव । सर्पिस्ते । यजुस्ते । इत उत्तरं स इति इणः ष इति च वर्त्तते, तत्र इणः परो यो विसर्जनीयस्तस्य षकारो भवत्यन्यस्य सकारो भवति ॥

### ३८३९. नमस्पुरमोर्गत्योः ॥ ४० ॥

नमस्पुरस् इत्येतयोर्गतिसंज्ञाकयोर्विसर्जनीषस्य सकारादेशो भवति कुप्वोः परतः । नमस्कर्ता । नमस्कर्त्तम् । नमस्कर्त्तव्यम् । गत्योरिति किम्? पूःपुरौ पुरः करोति ॥

### ३८४०. इदुदुपधस्य चाप्रत्ययस्य ॥ ४१ ॥

इकारोपधस्य उकारोपधस्य चाप्रत्ययस्य विसर्जनीयस्य षकार आदेशो

भवति कुष्वोः परतः । निर्दुर्बहिराविश्चतुरप्रादुस् । निस् – निष्कृतम् । निष्पीतम् । दुस्–दुष्कृतम् । दुष्पीतम् । बहिस–बहिष्कृतम् । बहिष्पीतम् । आवीस्–श्राविष्कृतम् । आविष्पीतम् । चतुरचतुष्कृतम् । चतुष्कपालम् । चतुष्कन्दलम् । चतुष्कलम् । प्रदुस्–प्रादुष्कृतम् । प्रादुष्पीतम् । अप्रत्यस्येति किम्? अग्निः करोति । वायुः करोति । मातुः करोति । पितुः करोति । अत्र रात्मस्येति सकारलोपे कृते रेफस्य यो विसर्जनीयस्तस्याप्रत्ययविसर्जनीयत्वात् षत्वं प्राप्नोति । कस्कादिषु तु भ्रातुष्पुत्रग्रहणं ज्ञापकमेकादेशनिमित्तत्वात् षत्वप्रतिषेधस्य । पुम्मुहुसोः प्रतिषेधो वक्तव्यः । पुंस्कामा। मुहुः कामा (१) । नैष्कुल्यम् । दौष्कुल्यम् । नि३ष्कुलम् । दु३ष्कुलम् । दु३ष्पुरुषः। बहिरङ्गलक्षणयोर्वृद्धिप्लुतयोरसिद्धत्वात् षत्वं प्रवर्त्तते ॥

## ३८४१. तिरसोऽन्यतरस्याम् ॥ ४२ ॥

तिरसो विसर्जनीयस्यान्यतरस्यां सकारादेशो भवति कुप्वोः परतः । तिरस्कर्ता। तिरस्कर्त्तम् । तिरस्कर्त्तव्यम् । तिरःकर्त्ता । तिरःकर्त्तुम् । तिरः कर्त्तव्यम् । गतेरित्येवतिरः कृत्वा काण्डं गतः ॥

## ३८४२. द्विस्त्रिश्चतुरिति कृत्वोऽर्थे ॥ ४३ ॥

ष इति संबद्ध्यते । द्विस् त्रिस् चतुर् इत्येतेषां कृत्वोऽर्थे वर्त्तमानानां विसर्जनीयस्य षकार आदेशो भवति अन्यतरस्यं कुप्वोः परतः । द्विष्करोति । द्विः करोति । त्रिष्करोति । त्रिः करोति । चतुष्करोति । चतुः करोति । द्विप्पचति । द्विः पचतो । त्रिष्पचति । त्रिः पचति । चतुष्पचति । चतुः पचति । कृत्वोर्थ इति किम्? चतुष्कपालम् । चतुष्कण्टकम् । पूर्वेण नित्यं षत्वं भवति । इदुदुपधस्येत्यस्यानुवृत्तौ सत्यां कृत्वोर्थविषयेण च पदेन विसर्जनेये विशेष्यमाणे द्विस्रिचतुरिति शक्यमकर्त्तम् ॥

कृत्वसुजर्थे षत्वं ब्रवीति कस्माच्चतुष्कपाले मा ।<br>
षत्वं विभाषयाभून्ननु सिद्धं तत्र पूर्वेण ॥<br>
सिद्धे ह्ययं विधत्ते चतुरः षत्वं यदापि कृत्वोऽर्थे ।<br>
लुप्ते कृत्वोऽर्थीये रेफस्य विसर्जनीयो हि ॥<br>
एवं सति त्विदानीं द्विस्रिश्चतुरित्यनेन किं कार्यम् ।<br>
अन्यो हि नेदुदुपधः कृत्वोर्थः कश्चिदप्यस्ति ॥<br>
अक्रियमाणे ग्रहणे विसर्जनीयस्तदा विशेष्येत ।

चतुरो न सिद्ध्यति तथा रेफस्य विसर्जनीयो हि ॥

तस्मिंस्तु क्रियमाणे युक्तम् चतुरो विशेषणं भवति ।

प्रकृतं पदं तदन्तं तस्यापि विशेषणं न्याय्यम् ॥

एवं तु क्रियमाणे द्विस्त्रिश्चतुर्ग्रहणे चतुःशब्दस्य कृत्वोऽर्थेऽपि वर्त्तमानस्य पूर्वेणैव नित्यं षत्वं स्यात् । पूर्वत्रासिद्धे नास्ति प्रतिषेधोऽभावादुत्तरस्य ॥

## ३८४३. इसुसोः सामर्थ्ये ॥ ४४ ॥

षः इति संबद्ध्यते । इस् उस् इत्येतयोर्विसर्जनीयस्यान्यतरस्यां षकारादेशो भवति सामर्थ्ये कुप्वोः परतः । सर्पिष्करोति । सर्पिः करोति । यजुष्करोति । यजुः करोति । सामर्थ्य इति किम्? तिष्ठतु सर्पिः, पिब त्वमुदकम् । सामर्थ्यमिह व्यपेक्षा, न पुनरेकार्थीभावः, उभयं वा ॥

## ३८४४. नित्यं समासेऽनुत्तरपदस्थस्य ॥ ४५ ॥

इसुसोरिति वर्त्तते । समासविषये इसुसोर्विसर्जनीयस्यानुत्तरपदस्थस्य नित्यम् षत्वं भवति कुप्वोः परतः । सर्पिष्कुण्डिका । धनुष्कपालम् । सपिष्पानम् । धनुष्फलम् ।अनुत्तरपदस्थस्येति किम्? परमसर्पिः कुण्डिका । परमधनुः कपालम् । पूर्वसूत्रेण विकल्पोऽप्यत्र न भवति । एतदेवानुत्तरपदस्थस्येति वचनं ज्ञापकमिसुसोः प्रत्ययग्रहणे यस्मात् स विहितस्तदादेरित्ययं नियमो न भवति । तेन वाक्येऽपि परमसर्पिष्करोति, परमसपिः करोति, इसुसोः सामर्थ्य इत्येतद्भवति । व्यपेक्षा च तत्र सामर्थ्यमाश्रितमिति समासे न भवति ॥

## ३८४५. अतः कृकमिकसंकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ॥ ४६ ॥

अकारादुत्तरस्य अनव्ययविसर्जनीयस्य समासेऽनुत्तरपदस्थस्य, नित्यं सकारादेशो भवति कृ कंमि कंस कुम्भ पात्र कुशा कर्णी इत्येतेषु परतः । कृ– अयस्कारः । पयस्कारः । कमि – अयस्कामः । पयस्कामः । कंस–अयस्कंसः । पयस्कंसः । कुम्भ–अयस्कुम्भः । पयस्कुम्भः । अयस्कुम्भी, पयस्कुम्भीत्यत्रापि भवति प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति । पात्र – अयस्पात्रम् ।

पयस्पात्रम् । अयस्पात्री । पयस्पात्री । कुशा–अयस्कुशा । पयस्कुशा । कर्णी–अयस्कर्णी । पयस्कर्णी शुनस्कर्ण इत्ययं तु कस्कादिषु द्रष्टव्यः । अत इति किम्? गीःकारः । धूकारः । तपरकरणं किम्? भाःकरणम् । भास्कर इत्ययं तु कस्कादिषु द्रष्टव्यः । अनव्ययस्येति किम्? श्वःकारः । पुनःकारः । समास इत्येव। यशः करोति । यशः कामयते । अनुत्तरपदस्थस्येत्येव । परमपयः कारः । परमपयः कामः ॥

## ३८४६. अधःशिरसी पदे ॥ ४७ ॥

अधस् शिरस् इत्येतयोर्विसर्जनीयस्य समासेऽनुत्तरदस्थस्य सकार आदेशो भवति पदशब्दे परतः । अधस्पदम् । शिरस्पदम् । अधस्पदी । शिरस्पदी । समासे इत्येव । अधः पदम् । अनुत्तपदस्थस्येत्येव । परमशिरःपदम् । अधस्पदमिति मयूरव्यसकादित्वात् समासः ॥

## ३८४७. कस्कादिषु च ॥ ४८ ॥

कस्क इत्येवमादिषु च विसर्जनीयस्य सकारः षकारो वा यथायोगमादेशो भवति कुप्वोः परतः । कस्कः । कौतस्कुतः । कुअ आगत इत्यण । भ्रतुष्पुत्रः । शुनस्कर्णः । सद्यस्कालः । सद्यस्क्रीः । क्रीणातेरयं संपदादित्वात् क्विप् प्रत्ययः । तत्र भवः क्रतुः – साद्यस्क्रः । कांस्कान् । कानाम्रेडित इति रुत्वमत्र । सर्पिष्कुण्डिका। धनुष्कपालम् । बहिष्पूलम् । यजुष्पात्रमित्येषां पाठ उत्तरपदस्थस्यापि षत्वं यथा स्यादिति, परमसर्पिः फलमित्येवमादिप्रत्युदाहरणादिति पारायणिका आहुः । भाष्ये वृत्तौ च नित्यं समासेऽनुत्तरपद्रस्थस्येत्यत्र परमसपिः कुण्दिकेत्येतदेव प्रत्युदाहरणम्। अयस्काण्डः । मेदस्पिण्डः । अविहितलक्षण उपचारः कस्कादिषु द्रष्टव्यः ॥

## ३८४८. छन्दसि वाऽप्राम्रेडितयोः ॥ ४९ ॥

छन्दसि विषये विसर्जनीयस्य वा सकारादेशो भवति कुप्वोः परतः प्रशब्दम् आम्रेडितं च वर्जयित्वा । अयः पात्रम् । अयस्पात्रम् । विश्वतः पात्रम् । विश्वतस्पात्रम्। उरुणः कारः । उरुणस्कारः । अप्राम्रेडितयोरिति किम्? अग्निः प्रविद्वान् । परुषः परुषः परि सूर्यरश्मिहरिकेशः पुरस्तात् । स नः पावक इत्येवमादिषु सर्वे विधयश्छन्दसि विकल्प्यन्त इति सत्वं न भवति ॥

## ३८४९. कः करत्करतिकृधिकृतेष्वनदितेः ॥ ५० ॥

कः करत करति कृधि कृत इत्येतेषु परतः अनदितेर्विसर्जनीयस्य सकारादेशो भवति छन्दसि विषये । कः – विश्वतस्कः । करत्–विश्वतस्करत् । करति–पयस्करति । कृधि–उरुणस्कृधि । कृत–सदस्कृतम् । अनदितेरिति किम्? यथा नो अदितिः करत् ।

## ३८५०. पञ्चम्याः परावध्यर्थे ॥ ५१ ॥

छन्दसीत्येव । पञ्चमीविसर्जनीयस्य सकारादेशो भवति परौ परतः अध्यर्थे । दिवस्परि प्रथमम् जज्ञे । अग्निहिमवतस्परि । दिवस्परि । महस्परि । पञ्चम्या इति किम्? अहिरिव भोगैः पर्येति बाहुम् । परावित किम्? एभ्यो वा एतल्लोकेभ्यः प्रजापतिः समैरयत् । अद्ध्यर्थ इति किम्? दिवः पृथिव्याः पर्योज उद्भृतम् । अत्र परिः सर्वतोभावे, अध्यर्थः उपरिभावः ॥

## ३८५१. पातौ च बहुलम् ॥ ५२ ॥

पातौ च धातौ परतः पञ्चमीविसर्जनीयस्य बहुलम् सकार आदेशो भवति छन्दसि विषये । दिवस्पातु । राज्ञस्पातु । न च भवति–परिषदः पातु ॥

## ३८५२. षष्ठ्याः परिपुत्रपृष्ठपारपदपयस्पोषेषु ॥ ५३ ॥

षष्ठीविसर्जनीयस्य सकारादेशो भवति पति पुत्र पृष्ठ पार पद पयस् पोष इत्येतेषु परतः छन्दसि विषये । वाचस्पर्ति विश्वकर्माणमूतये । पुत्र – दिवस्पुत्राय सूर्याय । पूष्ठदेवस्पृष्ठे धावमानं सुपर्णम् । पार–अगन्म तमसस्पारम् । पद–इडस्पदे समिध्यसे । पयससूर्य चक्षुदिवस्पयः । पोष–रायस्पोषं यजमानेषु धत्तम् । षष्ठ्या इति किम्? मनुः पुत्रेभ्यो दाथं व्यभजत् ॥

## ३८५३. इडाया वा ॥ ५४ ॥

इडायाः षष्ठीविसर्जनीयस्य वा सकार आदेशो भवति पत्यादिषु परतश्छन्दसि विषये । इडायास्पतिः । इडायाः पतिः । इडायास्पुत्रः । इडायाः पुत्रः । इडायास्पृष्ठम् । इडायाः पृष्ठम् । इडायास्पारम् । इडायाः पारम् । इडायास्पदम् । इडायाः पदम् । इडायास्पयः । इडायाः पयः । इडायास्पोषम् । इडायाः पोषम् ॥

## ३८५४. अपदान्तस्य मूर्द्धन्यः ॥ ५५ ॥

पदाधिकारो निवृत्तः । अपदान्तस्येति मूर्द्धन्य इति चैतदधिकृतम् वेदितव्यम् आपादपरिसमाप्तेः । वक्ष्यति – आदेशप्रत्यययोः । सिषेव । सुष्वाप । अग्निषु । वायुषु । अपदान्तस्येति किम्? अग्निस्तत्र । वायुस्तत्र । ष इत्येवं सिद्धे मूर्द्धन्यग्रहणं ढकारार्थम् । अकृढवम् । चकृढवे ॥

## ३८५५. सहेः साडः सः ॥ ५६ ॥

सहेर्धातोः साड्रूपस्य यः सकारस्तस्थ मूर्द्धन्य आदेशो भवति । जलाषाट् । तुराषाट् । पृतनाषाट् । सहेरिति किम्? सह डेन वर्त्तते सडस्तस्यापत्यं साडिः । साड्ग्रहणं किम्? यत्रास्त्येतद्रूपं तत्र यथा स्यात् । इह मा भूत्–जलासाहम् । स इति किम्? आकारस्य मा भूत् ॥

## ३८५६. इण्कोः ॥ ५७ ॥

इण्कोरित्येतदधिकृतं वेदितव्यम् । इत उत्तरं यद्वक्ष्यामः इणः कवर्गाच्चेत्येव तद्वेदितव्यम् । वक्ष्यति – आदेशप्रत्यययोः । सिषेव । सुष्वाप । अग्निषु । वायुषु । कर्तृषु । हर्तृषु । गीर्षु । धूर्षु । वाक्षु । त्वक्षु । इण्कोरिति क्रिम्? दास्यति । ससौ ॥

## ३८५७. नुम्विसर्जनीयशर्व्यवायेऽपि ॥ ५८ ॥

नुम्व्यवायेऽपि विसर्जयीयव्यवायेऽपि शर्व्यवायेऽपि इण्कोरुत्तरस्य सकारस्य मूर्द्धन्यादेशो भवति । व्यवायशब्दः प्रत्येकमभिसांवद्धयते । नुम्व्यवाये तावत्–सर्पींषि । यजूंषि । हवींषि । विसर्जनीयव्यवाये–सर्पिःषु । यजुःषु । हविःषु । शर्व्यवाये – सपिष्षु । यजुष्षु । हविष्षु । नुमादिभिः प्रत्येकं व्यवाये षत्वमिष्यते, न समस्तैः । तेनेह न भवति–निस्से । निस्स्व इति । णिसि चुम्बन इत्येतस्यैतद्रूपम् । अत्र हि नुमा सकारेण च शरा व्यवधानम् ॥

## ३८५८. आदेशप्रत्यययोः ॥ ५९ ॥

मूर्द्धन्य इति वर्त्तते स इति च । आदेशप्रत्यययोरिति षष्ठी भेदेन संबद्ध्यते । आदेशो यः सकार प्रत्ययस्य च यः सकारः इण्कोरुत्तरस्तस्य मूर्द्धन्यो भवति ।

आदेशस्य तावत्–सिषेव । सुष्वाप । प्रत्ययस्य–अग्निषु । वायुषु । कर्तृषु । हर्तृषु । इन्द्रो मा वक्षत् । स देवान् यक्षदिति व्यपदेशिवद्भावात् प्रत्ययस्येति षत्वं भवति । यजतेर्वहतेश्च पञ्चमलकारे परस्मैपदप्रथमैकवचन इकारलोपः, लेटोऽडाटावित्यट्, सिब्बहुलं लेटीति सिप्, ततः सिद्धम्–यक्षत्, वक्षत् इति ॥

### ३८५९. शासिवसिघसीनां च ॥ ६० ॥

शासि वसि घसि इत्येतेषां च इण्कोरुत्तरस्य सकारस्य मूर्द्धन्यो भवति । अन्वशिषत् । अन्वशिषताम् । अन्वशिषन् । शिष्टः । शिष्टवान् । वसि–उषितः । नषितवान् । उषित्वा । घसि–जक्षतुः । जक्षुः । घसिभसोरित्युपधालोपः – अक्षन्नवीमदन्त पितरः । अनादेशार्थ वचनम् । घसिर्यद्यप्यादेशः, सकारस्त्वादेशो न भवति । इण्कोरित्येव । शास्ति । वसति । जघास ॥

### ३८६०. स्तौतिण्योरेव षण्यभ्यासात् ॥ ६१ ॥

स्तौतेर्ण्यन्तानां च षत्वभूते सनि परतः अभ्यासादिण उत्तरस्य आदेशसकारस्य मूर्द्धन्यादेशो भवति । तुष्टूषति । ण्यन्तानाम्–सिषेवयिषति । सिवज्जयिषति । सुष्वापयिषति। सिद्धे सत्यारम्भो नियमार्थः – स्तौतिण्योरेव षण्यभ्यासाद्यथा स्यादन्यस्य मा भूत् । सिसिक्षति । सुसूषति । एवकारकरणमिष्टतोऽवधारणार्थम् । सौतिण्योः षण्येवेति हि विज्ञायमाने तुष्टावेत्यत्र न स्यात् । इह च स्यादेस्व सिसिक्षतीति । षणीति किम्? अन्यत्र नियमो माभूत्–सिषेव । को (१) विनतेऽनुरोधः? अविनते नियमो मा भूत्–सुषुप्सति । तिष्ठासति । कः सानुबन्धेऽनुरोधः? षशब्दमात्र नियमो मा भूत्–सुषुपिष इन्द्रम् (२) । अभ्यासादिति किम्? अभ्यासात् या प्राप्तिसस्या नियमो यथा स्याद्धातोर्या (३) प्राप्तिस्तस्यानियमो मा भूत् । प्रतीषिषति। अधीषिषति ॥

### ३८६१. सः स्विदिस्वदिसहीनां च ॥ ६२ ॥

स्विदि स्वदि साहे इत्येतेषां ण्यन्तानां सनि षभूते परतोऽभ्यासादुत्तरस्य सकारस्य सकारादेशो भवति । स्विदि–सिस्वेदयिषति । स्वदि–सिस्वादयिषति । सहि – सिसाहयि षति । सकारस्य सकारवचनं मूर्द्धन्यनिवृत्त्यर्थम् ॥

### ३८६२. प्राक्सितादड्व्यवायेऽपि ॥ ६३ ॥

सेवसितेति वक्ष्यति, प्राक्सितसंशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामस्तत्राड्-व्यवायेऽपि मूर्द्धन्यो भवतीत्येवं तद्वेदितव्यमपिशब्दादनड्व्यवायेऽपि वक्ष्यति । उपसर्गात्सुनोतित्सुवतीति षत्वम् । अभिषुणोति । परिषुणोति । विषुणोति । निषुणोति । अभ्यषुणोत् । पर्यषुणोत् । व्यषुणोत् । न्यषुणोत् ॥

### ३८६३. स्थादिष्वभ्यासेन चाभ्यासस्य ॥ ६४ ॥

प्राक सितादिति वर्त्तते । उपसर्गात् सुनोतीत्यत्र स्थासेनयसेधेति स्थादयस्तेषु स्थादिषप्राक् सितसंशब्दानाद् अभ्पासेन व्यवाये मूर्द्धन्यो भवत्यभ्याससकारस्य च भवतीत्येवं वेदितव्यम् । अभ्यासेन व्यवाये-परितष्ठौ । अषोपदेशार्थं च - अभिषिषेणयिषति । परिषिषेणयिषति । अवर्णान्ताभ्यासार्थं च - अभितष्ठौ । परितष्ठौ । षणि प्रतिषेधार्थं च - अभिषिषिक्षति । परिषिविक्षति । अभ्यासस्येति वचनं नियमार्थ स्थादिष्वेवाभ्याससकारस्य मूर्द्धन्यो भवति नान्यत्र-अभिसुसूषति । अभिसिषासति ॥

### ३८६४. उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्था-सेनयसेधसिचसञ्जस्वञ्जाम् ॥ ६५ ॥

मूर्द्धन्य इति वर्त्तते स इति च । उपसर्गस्थान्निमित्तादुत्तरस्य सुनोति सुवति स्यति स्तौति स्तोभति स्था सेनय सेध सिच सञ्ज स्वञ्ज इत्येतेषां सकारस्य मूर्द्धन्यादेशो भवति । सुनोति - अभिषुणोति । परिषुणोति । अभ्यषुणोत् । पर्यषुणोत् । सुवति-अभिषुवति । परिषुवति । अभ्यषुवत् । पर्यषुवत् । स्यति-अभिष्यति । परिष्यति । अभ्यष्यत् । पर्यष्यत् । स्तौति - अभिष्टौति । परिष्टौति । अभ्यष्टौत् । पर्यष्टौत् । स्तोभति-अभिष्टोभते । परिष्टोभते । अभ्यष्टोभत । पर्यष्टोभत । स्था-अभिष्थास्यति । परिष्ठास्यति । अभ्यष्ठात् । पर्यष्ठात् । अभितष्ठौ । परितष्ठौ । सेनय-अभिषेणयति । परिषेणयति । अभ्यषेणयत् । पर्यषेणव । अभिषिषेणविषति । परिषिषेणयिषति । सेध-अभिषेधति । परिषेधति । अभ्यषेधत् । पर्यषेधत् । सिच-अभिषिञ्चति । परिषिञ्चति । अभ्यषिञ्चत् । पर्यषिञ्चत् । अभिषिषिक्षति । परिषिषिक्षति । सञ्ज-अभिषजति । परिषजति । अभ्यषजत् । पर्यषजत् । अभिषिवङ्क्षति । परिषिषङ्क्षति । प्वञ्ज-अभिष्वजते । परिष्वजते । अभ्यष्वजत । पर्यष्वजत । अभिषिष्वङ्क्षते । परिषिष्वङ्क्षते । सेध इति शब्विकरणनिर्देशः

सिध्यतिनिवृत्त्यर्थः । उपसर्गादिति किम्? दधि सिञ्चति । मधु सिञ्चति । निर्गताः सेचका अस्माद्देशान्निःसेचको देश इइ । नायं सिचेरुपसर्गः । अभिसावकीयतीत्यत्रापि न सुनोतिं प्रति क्रियायोगः, किम् तर्हि? सावकीयं प्रति । अभिषावयतीत्यत्र तु सुनोतिमेव प्रति क्रियायोगो न सावयतिम्प्रतीति षत्वं भवति ॥

### ३८६५. सदिरप्रतेः ॥ ६६ ॥

सदेः सकारस्य उपसर्गस्थान्निमित्तादप्रतेरुत्तरस्य मूर्द्धन्य आदेशो भवति । निषीदति । विषीदति । न्यषीदत् । व्यषीदत् । निषसाद । विषसाद । अप्रतेरिति किम्? प्रतिसीदति ॥

### ३८६६. स्तम्भेः ॥ ६७ ॥

उपसर्गादिति वर्तते । स्तम्भेः सकारस्य उपसर्गस्थान्निमित्तादुत्तरस्य मूर्द्धन्य आदेशो भवति । अभिष्ठभ्नाति । परिष्टभ्नाति । अभ्यष्टभ्नात् । पर्यष्टभ्नात् । अभितष्टम्भ । परितष्टम्भ । अप्रतेरियेतदिह नानुवर्त्तते, तेनैतदपि भवति – प्रैष्ठभ्नाति । प्रत्यष्टभ्नात् । प्रतितष्टम्भ ॥

### ३८६७. अवाच्चालम्बनाविदूर्ययोः ॥ ६८ ॥

अवशब्दादुपसर्गादुत्तरस्थ स्तम्भेः सकारस्य मृर्द्धन्यादेशो भवति आलम्बनेऽर्थे आविदूर्थे च । आलम्बनमाश्रयणम् । अविदूरस्य भाव आविदूर्यम् । आलम्बने तावत्–अवष्टभ्यास्ते । अवष्टभ्य तिष्ठति । आविदूर्ये–अवष्टब्धा सेना । अवष्टब्धा शरत् । आलम्बनाविदूर्ययोरिति किम्? अवस्तब्धो वृषलः शीतेन । अनिगर्थ आरम्भः ॥

### ३८६८. वेश्च स्वनो भोजने ॥ ६९ ॥

वेरुपसर्गादवाच्चोत्तरस्थ भोजनार्थे स्वनतेः सकारस्य मूर्द्धन्यादेशो भवति । विष्वणति । व्यष्वणत् । विषष्वाण । अवष्वणति । अवाष्वणत् । अवषष्वाण । अभ्यवहारक्रियाविशेषोऽभिधीयते, यत्र स्वननमस्ति । भोजन इति किम्? विस्वनति मृदङ्गः (१) ॥

### ३८६९. परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् ॥ ७० ॥

परि नि वि इत्येतेभ्य उपसर्गेभ्य उत्तरेषां सेव सित सय सिवु सह सुट स्तु स्वञ्ज इत्येतेषां सकारस्य मूर्द्धन्य आदेशो भवति। परिषेवते। निषेवते। विषेवते। पर्यषेवत। न्यषेवत। व्यषेवत। परिषिषेविषते। निषिषेविषते। विषिषेविषते। सित–परिषितः । निषितः । विषितः । सय–परिषयः । निषयः । विषयः । सिव्–परिषीव्यति। निषीव्यति । विषीव्यति । पर्यषीव्यत् । न्यषीव्यत् । व्यषीव्यत् । पर्यसीव्यत् । न्यसीव्यत् । व्यमीव्यत् । सह–परिषहते । निषहते । विषहते । पर्यषहत। न्यषहत। व्यषहत। पर्यसहत। न्यसहत। व्यसहत। सुट्–परिष्करोति। पर्यष्करोत्। पर्यस्करोत्। स्तु–परिष्टौति। निष्टौति। विष्टौति। पर्यष्टौत्। न्यष्टौत्। व्याष्टौत्। पर्यस्तौत्। न्यस्तौत्। व्यस्तौत्। ष्वञ्जदंशसञ्जस्वञ्जामिति नलोपः। परिष्वजते । विष्वजते । पर्यष्वजत । पर्यस्वजत । पूर्वेणैव सिद्धे स्तुस्वञ्जिग्रहणमुत्तरार्थम्, अडव्यवाये विभाषा यथा स्यात् ॥

### ३८७०. सिवादीनां वाड्व्यवायेऽपि ॥ ७१ ॥

अनन्तरसूत्रे सिवुसहसुट्स्तुस्वञ्जामिति सिवादयः। सिवादीनामडव्यवायेपि परिनिविभ्य उत्तरस्य सकारस्य वा मूर्द्धन्यो भवति । तथा चैवोदाहृतम् (२) ॥

### ३८७१. अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु ॥ ७२ ॥

अनु वि परि अभि नि इत्येतेभ्य उत्तरस्य स्यन्दतेरप्राणिषु सकारस्य वा मूर्द्धन्यादेशो भवति। अनुष्यन्दते। विष्यन्दते। परिष्यन्दते। अभिष्यन्दते तैलम्। निष्यन्दते। अनुस्यन्दते। विस्यन्दते। परिम्यन्दते। अभिष्यन्दते तैलम्। निष्यन्दते। अनुस्यन्दते । विस्यन्दते । परिस्यन्दते । अभिस्यन्दते । निस्यन्दते । अप्राणिष्वति किम्? अनुस्यन्दते मत्स्य उदके । प्राण्यप्राणिविषयस्यापि स्यान्दतेरथं विकल्पो भवति । अनुष्यन्देते मत्स्योदके । अनुस्यन्देते । अप्रानिष्विति पर्युदासोऽयं न प्रसज्यप्रतिषेधः ॥

### ३८७२. वेः स्कन्देरनिष्ठायाम् ॥ ७३ ॥

वेरुपसर्गादुत्तरस्य स्कन्देः सकारस्य मूर्द्धन्यो वा भवति अनिष्ठायाम् ।

विष्कन्ता । विस्कन्ता । विष्कन्तुम् । विस्कन्तुम् । विष्कन्तव्यम् । विस्कन्तव्यम् । अनिष्ठायामिति किम्? विम्कन्नः ॥

### ३८७३. परेश्च ॥ ७४ ॥

परिशब्दाच्चोत्तरस्य स्कन्देः सकारस्य वा मूर्द्धन्यो भवति । परिष्कन्ता । परिष्कन्तुम् । परिकन्तव्यम् । परिस्कन्ता । परिस्कन्तुम् । परिस्कन्तव्यम् । पृथग्योगकरणसामर्थ्यादनिष्ठायामित्येतन्नानुवर्त्तते । परिष्कण्णः । परिस्कन्नः ॥

### ३८७४. परिस्कन्दः प्राच्यभरतेषु ॥ ७५ ॥

परिस्कन्द इति मूर्द्धन्याभावो निपात्यते प्राच्यभरतेशु प्रयोगविषयेषु । पूर्वेण मूर्धन्ये प्राप्ते तदभावो निपात्यते । परिस्कन्दः । अन्यत्र परिष्कन्दः । अचि निपातनम् । अथवा निष्ठातकारस्य लोपः भरतग्रहणं प्राच्यविशेषणम् ।

### ३८७५. स्फुरतिस्पुलत्योर्निर्निविभ्यः ॥ ७६ ॥

स्फुरतिस्फुलत्योः सकारस्य निस् नि वि इत्येतेभ्य उत्तरस्य वा मूर्द्धन्यादेशो भवति । स्फुरति – निवष्फुरति । निस्स्फुरति । निष्फुरति । निस्फुरति । विष्फुरति । विस्फुरति । स्फुलति–निष्ष्फुलति । निस्स्फुलति । निष्फुलति । निस्फुलति । विष्फुलति । विस्फुलति ॥

### ३८७६. वेः स्कभ्नातेर्नित्यम् ॥ ७७ ॥

वेरुत्तरस्य स्कभ्नातेः सकारस्य नित्यं मूर्द्धन्यादेशो भवति । विष्कभ्नाति । विष्कम्भिता । विष्कम्भितुम् । विष्कम्भितव्यम् ॥

### ३८७७. इणः षीध्वंलुङ्लिटां धोऽङ्गात् ॥ ७८ ॥

मूर्धन्य इति वर्त्तते । इणन्तादङ्गात्परेषां षीध्वंलुङलिटां यो धकारस्तस्य मूर्धन्यादेशो भवति । च्योषीढवम् । प्लोषीढवम् । लुङ–अच्योढवम् । अप्लोढवम् । लिट चकृढवे । ववृढवे । इण्कोरिति वर्त्तमाने पुनरिण्ग्रहणं कवर्गनिवृत्त्यर्थम् । पक्षिध्वम् । यक्षीध्वम् । षीध्वंलुङलिटोमिति किम्? स्तुध्वे । अस्तुध्वम् । अङ्गादिति किम् ? परिवेविषीध्वम् । अर्थवद्ग्रहणादपि सिद्धम्? तत्त नाश्रितम् ॥

**३८७८. विभाषेटः ॥ ७९ ॥**

इणः परस्मादिट उत्तरेषां षीध्वंलुङलिटां यो धकारस्तस्य मूर्द्धन्यादेशो भवति विभाषा । लविषीढवम् । लविषीध्वम् । पविषीढवम् । पविषीध्वम् । लुङ्–अलविढवम् । अलविध्वम् । लिट्–लुलुविढवे । लुलुविध्वे । इण इत्येव, आसिषीध्वम् । अथेह कथं भवितव्यम् – उपदिदीयिध्वे? केचिदाहुः – इणन्ताङ्गादुत्तरस्य इट आनन्तर्य युटा व्यवहितमिति न भवितव्यं ढत्वेनेति । अपरेषां दर्शनमङ्गादिति निवृत्तमिण इत्यनुवर्त्तते । ततश्च यकारादेव इणः परिऽनन्तरमिडिति पक्षे भवितव्यं मूर्द्धन्येनेति ॥

**३८७९. समासेऽङ्गुलेः सङ्गः ॥ ८० ॥**

सङ्गसकारस्याङ्गुलेरुत्तरस्य मूर्द्धन्य आदेशो भवति समासे । अङ्गुलेः सङ्गः अङ्गुलिषङ्गः । अङ्गुलिषङ्गा यवागूः । अङ्गुलिषङ्गो गाः सादयति । समास इति किम्? अङ्गुलेः सङ्गं पश्य ॥

**३८८०. भीरोः स्थानम् ॥ ८१ ॥**

स्थानसकारस्य भीरोरुत्तरस्य मूर्द्धन्यादेशो भवति । भीरुष्ठानम् । समास इत्येव । भीरोः स्थानं पश्य ॥

**३८८१. अग्नेः स्तुत्स्तोमसोमाः ॥ ८२ ॥**

अग्नेरुत्तरस्य स्तुत् स्तोम सोम इत्येतेषां सकारस्य मूर्द्धन्यादेशो भवति समासे । अग्निष्टुत् । अग्निष्टोमः । अग्नीषोमः । अग्नेर्दीर्घात् सोमस्येष्यते । तेनेह न भवति – अग्निसोमौ माणवकौ । अहापि ज्योतिरग्निः सोमो लताविशेषः – अग्निसोमौ तिष्ठतः । समास इत्येव अग्नेः सोमः ॥

**३८८२. ज्योतिरायुषः स्तोमः ॥ ८३ ॥**

ज्योतिस् आयुस इत्येताभ्यामुत्तरस्य स्तोमसकारस्य मूर्द्धन्यादेशो भवति समासे । ज्योतिष्टोमः । आयुष्टोमः । समास इत्येव । ज्योतिः स्तोमं दर्शयति ॥

**३८८३. मातृपितृभ्यां स्वसा ॥ ८४ ॥**

मातृ पितृ इत्येताभ्यामुत्तरस्य स्वसृसकारस्य समासे मूर्द्धन्यादेशो भवति । मातृष्वसा । पितृष्वसा ॥

## ३८८४. मातुः पितुर्भ्यामन्यतरस्याम् ॥ ८५ ॥

मातुर् पितुर् इत्येताभ्यामुत्तरस्य स्वसृशब्दस्यान्यतरस्यां मूर्द्धन्यादेशो भवति समासे । मातुःष्वस्वा । मातुः स्वसा । पितुःष्वसा । पितुःस्वमा । मातुःपितुरिति रेफान्तयोरेतद्ग्रहणम् । एकदेशविकृतस्यानन्यत्वाद्विसर्जनीयान्तात् सकारान्ताच षत्वं भवति । समास इत्येव । वाक्ये मा भूत्–मातुः स्वसेत्येव नित्यं भवति ॥

## ३८८५. अभिनिसस्तनः शब्दसंज्ञायाम् ॥ ८६ ॥

अभि निम् इत्येतस्मादुत्तरस्य स्तनतिसकारस्य मूर्द्धन्यादेशो भवति अन्यतरस्यां शब्दसंज्ञायां गम्यमानायाम् । अभिनिष्टानो वर्णः । अभिनिष्टानो विसर्जनीयः । अभिनिस्तानो वर्णः । अभिनिस्तानो विसर्जनीयः (१) । शब्दसंज्ञायामिति किम्? अभिनिस्तनति मृदङ्गः (२) । समास इत्यतः प्रभृति निवृत्तम् ॥

## ३८८६. उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ॥ ८७ ॥

उपसर्गस्थान्निमित्तात्प्रादुसशब्दाच्चोत्तरस्य यकारपरस्याचपरस्य चास्तिसकारस्य मूर्द्धन्यो भवति । अभिषन्ति । निषन्ति । विषिन्ति । प्रादुःषन्ति । अभिष्यात् । निष्यात्। विष्यात् । प्रादुःष्यात् । उपसर्गादिति किम्? दधि स्यात् । मधु स्यात् । अस्तीति किम्? अनुसृतम् । विसृतम् । अहासत्यपि अस्तिग्रहणे सकारमेव प्रति उपसर्ग आश्रीयते । प्रादुः शब्दस्य च कृभ्वस्तिष्वेव प्रयोग इत्यन्यत्राप्रसङ्ग? तथाप्येतत्प्रत्युदाहर्त्तव्यम् – अनुसूते अनुसूः । अनुस्वोऽपत्यम् आनुसेयः, शुभ्रादिताड्ढक् । ढेलोपोऽकद्रवा इत्युवर्णलोपः यच्पर इति किम्? निस्तः । विस्तः । प्रादुस्तः ॥

## ३८८७. सुविनिर्दुर्भ्यः सुपिसूतिसमाः ॥ ८८ ॥

सु वि निर् दुर् इत्येतेभ्य उत्तरस्य सुपि सूति सम इत्येतेषां मकारस्य मूर्द्धन्यादेशो भवति । सुपीति स्वपिः कृतसंप्रसारणो गृह्यते – सुषुप्तः । विषुप्तः । निःषुप्तः । दुःषुप्तः । सूतिरिति स्वरूपग्रहणम् – सुषूतिः । विषूतिः । निःषूतिः । दुःषूतिः । सम–सुषमम् । बिषमम् । निःषमम् । दुःषमम् ॥

सुपेः षत्वं स्वपेर्मा भूद्विसुष्वापेति केन न । हलादिशेषान्न सुपिरिष्टं पूर्व प्रसारणम् । स्थादीनां नियमो नात्र प्राक्सितादुत्तरः सुपिः । अनर्थको विषुषुपुः षुषिभूतो द्विरुच्यते ॥ पूर्वत्रासिद्धीयमद्विर्वचने इति कृते षत्वे ततो द्विर्वचनम् ॥

## ३८८८. निनदीभ्यां स्नातेः कौशले ॥ ८९ ॥

नि नदी इत्येताभ्यामुत्तरस्य स्नातिसकारस्य मूर्द्धन्यादेशो भवति कौशले गम्यमाने । निष्णातः कटकरणे । निष्णातो रज्जुवर्त्तने । नद्यां स्नातीति नदीष्णः । सुपि स्थ इत्यत्र सुपीति योगविभागात्कप्रत्ययः । कौशल इति किम्? निस्नातः । नद्यां स्नातो नदीस्नात इति ॥

## ३८८९. सूत्रं प्रतिष्णातम् ॥ ९० ॥

प्रतिष्णातमिति निपात्यते सूत्रं चेद्भवति । प्रतिष्णातं सूत्रम् । शुद्धमित्यर्थः । प्रत्रिस्नातमित्येवान्यत्र ॥

## ३८९०. कपिष्ठलो गोत्रे ॥ ९१ ॥

कपिष्ठल इति निपात्यते गोत्रविषये । कपिष्ठलो नाम यस्य स कापिष्ठलिः पुत्रः । गोत्र इति किम्? कपेः स्थलं कपिस्थलम् ॥

## ३८९१. प्रष्ठोग्रगामिनि ॥ ९२ ॥

प्रष्ठ इति निपात्यते अग्रगामिन्यभिधेये । प्रतिष्ठत इति प्रष्ठोऽश्वः । अग्रतो गच्छतीत्यर्थः । अग्रगामिनीति किम्? प्रास्थे हिमवतः पुण्ये । प्रस्थो व्रीहेणाम् ॥

## ३८९२. वृक्षासनयोर्विष्टरः ॥ ९३ ॥

विष्टर इति निपात्यते वृक्षे आसने च वाच्ये । विपूर्वस्य स्तृणातेः षत्वं निपात्यते । विष्टरो वृक्षः । विष्टरमसनम् । वृक्षासनयोरिति किम्? औलपिवाक्यस्य विस्तरः (१) ॥

## ३८९३. छन्दोनाम्नि च ॥ ९४ ॥

विष्टर इति निपात्यते विपूर्वात् स्तृ इत्येतस्माद्धातोः छन्दोनाम्नि चेत्येवं

विहितो घञ् इति विष्टर इत्यपि प्रकृतेविष्टार इति विज्ञायते । विष्टारपङक्तिः छन्दः। विष्टारो बृहती छन्दः । छन्दोनाम्नीति किम्? पटस्य विस्तारः ॥

**३८९४. गवियुधिभ्यां स्थिरः ॥ ९५ ॥**

गवियुविभ्यामुत्तरस्य स्थिरसकारस्य मूर्धन्यादेशो भवति। गविष्ठिरः। युधिष्ठिरः। गोशब्दादहलन्तादपि एतस्मादेव निपातनात् सप्तम्या अलुग्भवति ॥

**३८९५. विकुशमिपरिभः स्थलम् ॥ ९६ ॥**

वि कु शमि परि इत्येतेभ्य उत्तरस्य स्थलसकारस्य मूर्द्धन्यादेशो भवति । विष्ठलम् । कुष्ठलम् । शमिष्ठलम् । परिष्ठलम् ॥

**३८९६. अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गमञ्जिपुञ्जि-परमेबर्हिर्द्दिव्यग्निभ्यः स्थः ॥ ९७ ॥**

अम्ब आम्ब गो भूमि मव्य अप द्वि त्रि कु शेकु शङ्कु अङ्गु मञ्जि पुञ्जि परमे बर्हिस् दिवि अग्नि इत्यीभ्य उत्तरस्य स्थशब्दकारस्य मूर्धन्यादेशो भवति । अम्बष्ठः । आम्बष्ठः । गोष्ठः । भूमिष्ठः । सव्येष्ठः । अपष्ठः । द्विष्ठः । त्रिष्ठः । कुष्ठः। शेकुष्ठः । अङ्गुष्ठः । मञ्जिष्ठः । पुञ्जिष्ठः । परमेष्ठः । बर्हिष्ठः । दिविष्ठः । अग्निष्ठः। स्थास्थिन्स्थणामिति वक्तव्यम् । सव्येष्ठाः । परमेष्ठी । सव्येष्ठृसारथिः ॥

**३८९७. सुषामादिषु च ॥ ९८ ॥**

सुषामादिषु शब्देषु सकारस्य मूर्द्धन्यदेशो भवति। शोभनं साम यस्यासय् सुषामा ब्राह्मणः । दुष्षामा । निष्षामा । निष्षेधः । दुष्षेधः । सुशब्दस्य कर्म्मप्रवचनीयसंज्ञकत्वान्निर दुःशब्दयोश्च क्रियान्तरविषयत्वादनुपसर्गत्वे सति पाठोऽयम्। सेधतेर्गताविति वा प्रतिषेधबाधनार्थः। सुषन्धिः। दुःषन्धिः। निषन्धिः। सुष्ठु । दुष्ठु । तिष्ठतेरुणादिष्वेतौ व्युत्पाद्येते । गौरिवक्थः संज्ञायाम् । ङ्यापोः संज्ञाछन्दसोर्बहुलमिति पूर्वपदस्य ह्रस्वत्वम्। प्रतिष्णिका। प्रतिष्णाशब्दादयं कन् प्रत्ययः । जलाषाहम् । नौषेवनम् । दुन्दुभिषेवनम् ॥

**३८९८. (१) एति संज्ञायामगात् ॥ ९९ ॥**

एकारपरस्य सकारस्य मूर्द्धन्यादेशो भवति इण्कोरुत्तरस्यागकारात् परस्य संज्ञायां विषये। हरिषेणः। वारिषेणः। जानुषेणी। एतीति किम्? हरिसक्थम्। संज्ञायामिति किम्? पृथ्वी सेना यस्थ स पृथुसेनो राजा। अगादिति किम्? विष्वक्सेनः। इष्कोरित्येव। सर्वसेनः॥

### ३८९९. नक्षत्राद्वा॥ १००॥

नक्षत्रवाचिनः शब्दादुत्तरस्य सकारस्य वा एति संज्ञायामगकारात् मर्द्धन्यो भवति। रोहिणीषेणः। रोहिणीसेनः। भरणीषेणः। भरणीसेनः। अगकारादित्येव। शतभिषक्सेनः। अविहितलक्षणो मृर्द्धन्यः सुषामादिषु द्रष्ठव्यः॥

### ३९००. ह्रस्वात्तादौ तद्धिते॥ १०१॥

ह्रस्वादुत्तरस्य सकारस्य मूर्द्धन्यादेशो भवति तादौ तद्धिते परतः। तर तम तय तल तस् त्यप एतानि प्रयोजयन्ति। तर – सपिष्टरम्। यजुष्टरम्। तम–सर्पिष्टमम्। यजष्टमम्। तय–चतुष्टये ब्राह्मणानां निकेताः। त्व–सपिष्ट्वम। यजुष्ट्वम्। तल्–सपिष्टा। यजष्टा। त्स–सर्पिष्टः। यजुष्टः। त्यप् – आविष्टयो वर्द्धते। ह्रस्वादिति किम्? गीस्तरा। धूस्तरा। तादाविति किम्? सर्पिस्प्ताद्भवति। प्रत्ययसकारस्य सात्पदाद्योरिति सत्यपि प्रतिषेधे प्रकृतिसकारस्य स्यात्। तद्धित इति किम्? सर्पिस्तरति। तिङन्तस्य प्रतिषेधो वक्तव्यः। भिन्द्युस्तराम्। छिन्द्युस्तराम्॥

### ३९०१. निसस्तपतावनासेवने॥ १०२॥

निसः सकारस्य मूर्द्धन्यादेशो भवति तपतौ परतोऽनासेवनेऽर्थे। आसेवनं पुनः पुनः करणम्। निष्टपति सुवर्णम्। सकृदग्निं स्पर्शयतीत्यर्थः। अनासेवन इति किम्? निस्तपति सुवर्ण सुवर्णकारः। पुनः पुनरग्नि स्पर्शयतीत्यर्थः। निष्टप्तं रक्षो निष्टप्ता अरातय इत्यत्र सदप्यासेवनं न विवक्ष्यते छान्दसो वा वर्णविकारः॥

### ३९०२. युष्मत्तत्तक्षुःष्वन्तःपादम्॥ १०३॥

युष्मत् तत् ततक्षुस इत्येतेषु तकारादिषु परतः सकारस्य मूर्द्धन्यादेशो भवति स चेत्सकारोऽन्तःपादं भवति। युष्मदादेशास्त्वं त्वां ते तव। अग्निष्ट्वं नामासीत्। त्वा–अग्निष्ट्वा वर्द्धयामास। ते–अग्निष्टे विश्वमानाय। तव–अपस्वग्ने सधिष्टव।

तत्–अग्निष्टद्विश्वमापृणाति । तत्तक्षुस् – द्यावापृथिवी निष्टतक्षुः । अन्तः पादमिति किम्? नित्यमात्मनो मिन्दाभूदग्निस्तत्पुनराह जातवेदा विचार्षणिः ॥

## ३९०३. यजुष्येकेषाम् ॥ १०४ ॥

यजषि विषये युष्मत्तत्ततक्षुषु परत एकेषामाचार्याणां मतेन सकारस्य मूर्द्धल्यादेशो भवति । अर्चिर्भिष्ट्वम् । अर्चिर्भिस्त्वम् । अग्निष्टेऽग्रम् । अग्निस्तेग्रम् । अग्निष्टत् । अग्निस्तत् । अर्चिर्भिष्टतक्षुः । अर्चिर्भिस्ततक्षुः ॥

## ३९०४. स्तुतस्तोमयोश्छन्दसि ॥ १०५ ॥

एकेषामिति वर्त्तते । स्तुत स्तोम इत्येतयोः सकारस्य छन्दसि विषये मूर्द्धन्यादेशो भवति एकेषामाचार्याणां मतेन । त्रिभिष्टुतस्य । त्रिभिसुतस्य । गोष्टोमम् षोडशिनम् । गोस्तोमं षोडशिनम् । पूर्वपदादित्येव सिद्धे प्रपञ्चार्थमिदम् ॥

## ३९०५. पूर्वपदात् ॥ १०६ ॥

छन्दसीति वर्त्तते एकेषामिति च । पूर्वपदस्थान्निमित्तात्परस्य सकारस्य मूर्द्धन्यादेशो भवति छन्दसि विषये एकेचामाचार्याणां मतेन । द्विपन्धिः । त्रिषन्धिः । द्विसन्धिः । त्रिसन्धिः । मधुष्टानम् । मधुस्थानम् । द्विषाहस्रं चिन्वीत । द्विसाहस्रं चिन्वीत । असमासेऽपि यत्पूर्वपदं तदपीह गृह्यते । त्रिःषमृद्धत्वाय । त्रिःसमृद्धत्वाय ॥

## ३९०६. सुञः ॥ १०७ ॥

सुञिति निपात इह गृह्यते, तस्य पूर्वपदस्थान्निमित्तादुत्तरस्य मर्द्धन्यादेशो भवति छन्दसि विषये । अभिषुणः सखीनाम् । ऊर्द्ध ऊषुणः । इकः सुञीति दीर्घः । नश्च धातुस्थोरुषुभ्य इति णत्वम् (१) ॥

## ३९०७. सनोतेरनः ॥ १०८ ॥

सनोतेरनकारान्तस्य सकारस्य मूर्द्धन्यादेशो भवति । गोषाः नृषाः । अन इति किम्? गोसर्नि वचमुदीरयन् । पूर्वपदादित्येव सिद्धे नियमार्थमिदम् । तत्र केचित्सवनादिपाठाद्गोसनिर्नियमस्य फलं न भवतीति सिसानयिषतीति प्रत्युदाहरन्ति ।

सिसनिषतेरप्रतयः सिसनीरित्यपरे ॥

## ३९०८. सहेः पृतनर्त्ताभ्यां च ॥ १०९ ॥

पृतना ऋत इत्येताभ्यामुत्तरस्य सहिसकारस्य मूर्द्धन्यादेशो भवति। पृतनाषाहम्। ऋताषाहम् । केचिद्योगविभागं सहेरिति कुर्वन्ति । ऋतीषहमित्यत्रापि यथा स्यात् । ऋतिशब्दस्य पूर्वपदस्य संहितायामेतद्दीर्घत्वम्। अवग्रहे तु ऋतिसहमित्येव भवति। चकारोनुक्तसमुच्चयार्थः । तेन ऋतीषहमिति सिद्धम् ॥

## ३९०९. न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् ॥ ११० ॥

रेफपरस्य सकारस्य सृपि सृजि स्पृशि स्पृहि सवनादीनां च मूर्द्धन्यो न भवति । रपर–विस्रंसिकायाः काण्डं जुहोति । विस्रब्धः कथयति । सृपि – पुरा क्रूरस्य विसृपः । सृजिवाचो विसर्जनात् । स्पृशि–दिवस्पृशम् । शृहि–निस्पृह कथयति । सवनादीनाम्–सवने २ । सूते २ । सामे २ । सवनमुखे २ । किं स्यतीति किंसम् २ । अनुसवनम् २ । गोसनिम् २ । अश्वसनिम् २ । पूर्वपदादिति प्राप्तेः । प्रतिषेधः । अश्वसनिग्रहणमनिणोऽपि षत्वमस्तीति ज्ञापनार्थम् । तेन जलाषाहमश्वषाहमित्येतत् सिद्धं भवति । क्वचिदेवं गणपाठः – सवनेसवने । अनुसवने २ । संज्ञायां वृहस्पतिसवः । शकुनिसवनम् । सोमे २ । सूते २ । संवत्सरे २ । किंसम् २ । विसम् २ । मुसलम् २ । गोसनिमश्वसनिम् । सवनादिः ॥

## ३९१०. सात्पदाद्योः ॥ १११ ॥

सादिति एतस्य पदादेश्च मूर्द्धन्यादेशो न भवति। (१) विभाषा साति कात्स्न्र्ये। प्रत्ययसकारत्वात् प्राप्तिः। पदादेश्चादेशसकारत्वात्। सात्–अग्निसात्। दधिसात्। मधुसात् । पदादेः – दधि सिञ्चति । मधु सिञ्चति ॥

## ३९११. सिचो यङि ॥ ११२ ॥

सिचः सकारस्य यङि परतो मृर्द्धन्यादेशो न भवति । सेसिच्यते । अभिसेसिच्यते। उपसर्गादिति या प्राप्तिः सा पदादिलक्षणमेव प्रतिषेधं बाधते न सिचो यङीति । तस्मादर्य प्रतिषेधः सर्वत्र भवति । यङीति किम्? अभिषिषिक्षति।

### ३९१२. सेधतेर्गतौ ॥ ११३ ॥

गतौ वर्त्तमानस्य सेधतेः सकारस्य मूर्द्धन्यादेशो न भवति । अभिसेधयति गाः । परिसेधयति गाः । गताविति किम्? शिष्यमकार्यात् प्रतिषेधयति ॥

### ३९१३. प्रतिस्तव्धनिस्तब्धौ च ॥ ११४ ॥

प्रतिस्तब्ध निस्तब्ध इत्येतौ मूर्द्धन्यप्रतिषेधाय निपात्येते । स्तम्भेरिति प्राप्तं षत्वं प्रतिषिध्यते । प्रतिस्तब्धः । निस्तब्धः ॥

### ३३१४. सोढः ॥ ११५ ॥

सहिरयं सोढभूतो गृह्यते, तस्य सकारस्य मूर्द्धन्यादेशो न भवति । परिसोढः । परिसोढुम् । परिसोढव्यम् । सोढभूतग्रहणं किम्? परिषहते ॥

### ३९१५. स्तुम्भुसिवुसहां चङि ॥ ११६ ॥

स्तम्भु सिवु सह इत्येतेषां चङि परतः सकारस्य मूर्द्धन्यादेशो न भवति । स्तम्भेरिति प्राप्तः परिनिविभ्य इति च मूर्द्धन्यः प्रतिषिध्यते । स्तम्भु – पर्यस्तम्मत् । अभ्यस्तम्मत् । सिवु–पर्यसीषिवत् । व्यसीषिवत् । सह–पर्यसीषहत् । व्यसीषहत् । स्तभ्भुसिवुसहां चङि उपसर्गादिति वक्तव्यम् । उपसर्गाद्या प्राप्तिस्तस्याः प्रैषेधो यथा स्यात् । अभ्यासाद्या प्राप्तिस्तस्य मा भूदिति । तथा चैवोदाहृतम् ॥

### ३९१६. सुनोतेः स्यसनोः ॥ ११७ ॥

सुनोतेः सकारस्य मूर्द्धन्यादेशो न भवति स्ये सनि च परतः । अभिसोष्यति । परिसोष्यति । अभ्यसोष्यत् । पर्यसोष्यत् । साने किमुदाहरणम्? सुसूषति । नैतदस्ति प्रयोजनं, तत्र स्तौतिण्योरेव षण्यभ्यासादिति नियमात् न भविष्यति । इदं तर्हि–अभिसुसूषते? एतदपि नास्ति, स्थादिष्वभ्यासेन चाभ्यासस्येति नियमात् । इदं तर्ह्यभिसुसूषएरप्रययः अभिसुसूरियुदाहरणमिति । अत्र हि सन् षभूतो न भवतीत्यभ्यासात् प्राप्तिरसि । स्यसनोरिति किम्? सुषाव ॥

### ३९१७. सदिष्वञ्चोः परस्य लिटि ॥ ११८ ॥

सदि ष्वञ्ज इत्येतयोर्द्धात्वोर्लिटि परतः सकारस्य परस्य मूर्द्धन्यो न भवति। अभिषसाद । परिषसाद । निषसाद । विषसाद । परिषस्वजे । अस्विस्वजाते । परिषस्वजिते । अभिषस्वजे । स्वञ्जेः संयोगान्तादपि विभाषा लिटः कित्त्वभिच्छन्तीति पक्षेऽनुषङ्गलोपः ॥

### ३९१८. निव्यभिभ्योड्व्यवाये वा छन्दसि ॥ ११९ ॥

नि वि अभि इत्येतेभ्य उपसर्गेभ्य उत्तरस्य सकारस्याड्व्यवाये छन्दसि विषये मूर्द्धन्यादेशो न भवति वा । न्यषीदत्पिता नः । न्यसीदत् । व्यषीदत्पिता नः । व्यसीदत् । अभ्यषीदत् । अभ्यसीदत् । सदिस्वञ्जोरिति तदिह नानुवर्त्तते । सामान्येनैव तद्वचनम् । व्यष्टौत् । व्यस्तौत् । अभ्यष्टौत् । अभ्यस्तौत् । इत्येतदपि सिद्धं भवति ॥

# अथ अष्टमाध्यायस्य चतुर्थः पादः ॥

### ३९१९. रषाभ्यां नो णः समानपदे ॥ १ ॥

रेफषकाराभ्यामुत्तरस्य नकारस्य णकारादेशो भवति समानपदस्थौ चेन्निमित्तनिमित्तिनौ भवतः । आस्तीर्णम् । षकारात्–कुष्णाति । पुष्णाति । मुष्णाति । षग्रहणमुत्तरार्थम्, ष्टुत्वेनैव हि सिद्धमेतत् । समानपद इति किम्? अग्निर्नयति । वायुर्नयति । ऋवर्णाच्चेति वक्तव्यम् । तिसृणाम् । चतसृणाम् । मातृणाम् । पितृणाम् । रश्रुति सामन्यनिर्द्देशात् सिद्धम् । वर्णभक्त्या च व्यवधानेऽपि णत्वं भवतीति क्षुभ्नादिषु नृनमनतृप्नोतिग्रहणं ज्ञापकम् । अथवा ऋवर्णादपि णत्वं भवतीत्येतदेवानेन ज्ञाप्यते ॥

### ३९२०. अट्कुप्वाङ्नुम्व्यवायेऽपि ॥ २ ॥

अट् कु पु आङ् नुम् इत्येतैर्व्यवायेऽपि रेफषकाराभ्यामुत्तरस्य नकारस्य णकार आदेशो भवति । अड्व्यवाये तावत्–करणम् । हरणम् । किरिणा । गिरिणा । कुरुणा । गुरुणा । कवर्गव्यवाये–अर्केण । मूर्खेण । गर्गेण । अर्घेण । पवर्गव्यवाये–

दर्पेण । रेफेण । गर्भेण । चर्म्मणा । वर्म्मणा । आङ्व्यवाये–पर्याणद्धम् । निराणद्धम् । अड्व्यवाय इति सिद्धे आङ्ग्रहणं पदव्यवाय इत्यस्य प्रतिषेधस्य वाधनार्थम् । नुम्व्यवाये–बृंहणम् । बृंहणीयम् । नुम्ग्रहणमनुस्वारोपलक्षणार्थ द्रष्टव्यम् । तेन तृहणीयमित्यत्रानुम्वारव्यवाये नुमभावेऽपि णत्वं । व्यवायोपलक्षणार्थंत्वादडादीनामिह व्यस्तैः समस्तैर्व्यवायेऽपि णत्वं भवति ॥

## ३९२१. पूर्वपदात् संज्ञायामगः ॥ ३ ॥

पूर्वपदस्थान्निमित्तादुत्तरस्य गकारवर्जितात् नकारस्य णकार आदेशो भवति संज्ञायां विषये । द्रुणसा । वार्घ्रीणसः । खरणसः (१) । शूर्पणखा । संज्ञायमिति किम्? चर्मनासिकः । अग इति किम्? ऋगयनम् । केचिदेतन्नियमार्थ वर्णयन्ति । पूर्वपदात् संज्ञायामेव णत्वं नान्यत्रेति । समासेऽपि हि समानपदे निमित्तनिमित्तिनोर्भावादस्ति पूर्वेण प्राप्तिरिति च । नियमः पूर्वपदसंबन्धादुत्तरपदस्थस्यैव णत्वं निवर्त्तयति चर्म्मनासिक इति, न तद्धितपूर्वपदस्थस्य–खारपायणः, मातृभोगीणः, करणप्रिय इति । अग इति योगविभागेन णत्वप्रतिषेधो न नियमप्रतिषेध इति । अपरे तु पूर्वसूत्रे समानमेव यत् नित्यं पदं तत्समानपदमित्याश्रयन्ति समानग्रहणात्। तेषाम प्रप्रमेवणत्वमनेन विधीयते समासे हि पूर्वपदोत्तरपदविभागाद–समानपदत्वमप्यस्तीति ॥

## ३९२२. वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः ॥ ४ ॥

पूर्वपदात् संज्ञायामिति वर्त्तते । पुरगा मिश्रका सिध्रका शारिका कोटरा अग्रे इत्येतेभ्यः पूर्वपदेभ्य उत्तरस्य वननकारस्य णकारादेशो भवति संज्ञायां विषये । पुरगावणम् । मिश्रकावणम् । सिध्रकावणम् । शारिकावणम् । कोटरावणम् । अग्रेवणम् । सिद्धे सत्यारम्भो नियमार्थः–एतेभ्य एव परस्य वननकारस्य णकारादेशो भवति, नान्येभ्य इति । कुबेरवनम् । शतधारवनम् । असिपत्रवनम् ॥

## ३९२३. प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि ॥ ५ ॥

प्र निर अन्तर शर इक्षु प्लक्ष आम्र कार्ष्य खदिर पीयूडा इत्येतेभ्य उत्तरस्य वननकारस्य संज्ञायामसंज्ञायामपि णकारादेशो भवति । प्र–प्रवणे यष्टवम् । निरनिर्वणे

प्रतिधीयते। अन्तर–अन्तर्वणे। शर–शरवणम्। इक्षु–इक्षुवणम्। प्लक्षप्लक्षवणम्। आम्र–आम्रवणम् । कार्ष्यवणम् । खदिर–खदिरवणम् । पीयूक्षा–पीयूक्षावणम् ॥

### ३९२४. विभाषौषधिवनस्पतिभ्यः ॥ ६ ॥

वनमित्येव। ओषधिवाचि यत्पूर्वपदं वनस्पतिवाचि च तत्स्थान्निमित्तादुत्तरस्य वननकारस्य णकार आदेशो भवति विभाषा । ओषधिवाचिभ्यस्तावत्–दूर्वावणम् । दूर्वावनम्। मूर्धावणम्। मूर्धावनम्। वनस्पतिभ्यः – शिरीषवणम्। शीरिषवनम्। बदरीवणम् । बदरी–वनम् । द्व्यक्षरत्र्यक्षरेभ्य इति वक्तव्यम् । इह मा भूत्– देवदारुवनम् । भद्रदारुवनम् । इरिकादिभ्यः प्रतिषेधो वक्तव्यः । इरिकावनम् । मिरिकावनम् । सत्यपि भेदे वृक्षवनस्पत्योरिहाभेदेन ग्रहणं द्रष्टव्यम् ।

फली वनस्पतिर्ज्ञेयो वृक्षाः पुष्पफलोपगाः ।
ओषध्यः फलपाकान्ता लता गुल्माश्च वीरुधः ॥

### ३९२५. अह्नोऽदन्तात् ॥ ७ ॥

अदन्तं यतपूर्वपदं तत्स्थान्निमित्तादुत्तरस्याह्नो नकारस्य णकार आदेशो भवति। पूर्वाह्णः । अपराह्णः । अदन्तादिति किम्? निरह्नः । दुरह्नः । अह्नोऽह्न एतेभ्य इत्यह्नादेशः । अह्नं इत्यकारान्तग्रहणाद् दीर्घह्नी शरदित्यत्र न भवति ॥

### ३९२६. वाहनमाहितात् ॥ ८ ॥

आहितवाचि यत्पूर्वपदं तत्स्थान्निमित्तादुत्तरस्य वाहननकारस्य णकार आदेशो भवति । इक्षुवाहणम् । शरवाहणम् । दर्भवाहणम । वाहने यद् आरोपितमुह्यते तदाहितमध्यते। आहितादिति किम्? दाक्षिवहनम्। दाक्षिस्वामिकं वाहनमित्यर्थः॥

### ३९२७. पानं देशे ॥ ९ ॥

पाननकारस्य पूर्वपदस्थान्निमित्तादुत्तरस्य देशाभिधाने णकार आदेशो भवति। पीषत इति पानम्, कृत्यल्युटो बहुलमिति कर्म्मणि ल्युट् । क्षीरं पानं येषां ते क्षीरपाणा उशीनराः। मनुष्याभिधानेऽपि देशाभिधानं गम्यते। सुरापाणाः प्राच्याः। सौवीरपाणा वाह्लीकाः । कषायपाणा गन्धाराः । देश इति किम्? दाक्षीणां पानं दाक्षिपानम् ॥

## ३९२८. वा भावकरणयोः ॥ १० ॥

भावे करणे च यः पानशब्दस्तदीयस्य नकारस्य णकार आदेशो भवति वा पूर्वपदस्यान्निमित्तादुत्तरस्य। क्षीरपाणं वर्त्तते। क्षीरपानम्। कषायपाणम्। कषायपानम्। नद्यादीनामुपसंख्यानम्। गिरिणदी। गिरिनदी। चक्रणदी। चक्रनदी। चक्रणितम्बा। चक्रनितम्बा ॥

## ३९२९. प्रातिषदिकान्तनुम्विभक्तिषु च ॥ ११ ॥

वेति वर्त्तते। प्रतिपदिकान्ते नुमि विभक्तौ च यो नकारस्तस्य पूर्वपदस्थान्निमित्तादुत्तरस्य वा णकार आदेशो भवति। प्रातिपदिकान्ते तावत्– माषवापिणौ। माषवापिनौ। व्रीहिवापिणौ। व्रीहिवापिनौ। नुमि–माशवापाणि। माषवापानि। व्रीहिवापाणि। व्रीहिवापानि। विभक्तौ – माषवापेण। माषवापेन। व्रीहिवापेण। व्रीहिवापेण। व्रीहिवापेन। पूर्वपदाधिकारादुत्तरपदस्य प्रातिपदिकस्थो योऽन्त्यो नकारस्तस्येदं णत्वमिष्यते। इह हि न भवति गर्गाणां भगिनी गर्गभगिनी। यदा त्वेवं भवति गर्गाणां भगो गर्गभगः, गर्गभगोऽस्या अस्तीति गर्गभगिणीति– तदा मातृभोगीणमित्र्यादिवन्नित्यं णत्वमेवेति वेदितव्यम्। माषवापिणी, माषवापिनीत्यत्र तु गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुवुत्पत्तेरिति कृदन्तेनैव साअसे सति प्रातिपदिकस्योत्तरपदस्यव सतो नकारो भवति (१)। तथा नुम्ग्रहणं कृतम्। स हि समुदायभक्तत्वादुत्तरपदस्यान्तो न भवति। युवादीनां (१) प्रति षेधो वक्तव्यः। आर्ययूना। क्षत्त्रिययूना। प्रपक्वानि (२)। दीर्घाह्नी शरत् ॥

## ३९३०. एकाजुत्तरपदे णः ॥ १२ ॥

एकाजुत्तरपदं यस्य स एकाजुत्तरपदः। तस्मिन्नेकाजुत्तरपदसमासे प्रातिपदिकान्तनुम्विभक्तिषु पूर्वपदस्थान्निमित्तादुत्तरस्य नकारस्य णकार आदेशो भवति। वृत्रहणौ। वृत्रहणः। नुमि–क्षीरपाणि। सुरापाणि। विभक्तौ–क्षीरपेण। सुरापेण। ण इति वर्त्तमाने पुनर्णग्रहणं विकल्पाधिकारनिवृत्तेर्विस्पष्टीकरणार्थम् ॥

## ३९३१. कुमति च ॥ १३ ॥

कवर्गवति चोत्तरपदे प्रातिपदिकान्तनुम्विभक्तिषु पूर्वपदस्थान्निमित्तादुत्तरस्य

नकारस्य णकारादेशो भवति । वस्त्रयुगिणौ । वस्रयुगिणः । स्वर्गकामिणौ । वृषगामिणौ । नुमिवस्रयुगाणि । खरयुगाणि । विभक्तौ–वस्रयुगेण । खरयुगेण ॥

## ३९३२. उपसर्गादसमासेऽपि णोपदेशस्य ॥ १४ ॥

ण उपदेशो यस्यासौ णोपदेशः । णोपदेशस्य धातोर्योनकारः तस्य उपसर्गस्थान्निमितादुत्तरस्य णकारादेशो भवति असमासेऽपि । प्रणमति । परिणमै (३) प्रणायकः । परिणायकः । उपसर्गादिति किम्? प्रगता नायका अस्माद्देशात् प्रनायको देशः । असमासेऽपीति किम्? पूर्वपदाधिकारात् समास एव स्यादिति तदधिकारनिवृत्तिद्योतनर्थम् । णोपदेशस्येति किम्? प्रनर्दति । प्रनर्दकः ॥

## ३९३३. हिनुमीना ॥ १५ ॥

हिनु मीना इत्येतयोरुपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति। प्रहिणोति । प्रहिणुतः । प्रमीणाति । प्रमीणितः । हीनुमीनाग्रहणे विकृतस्यापि भवति, अजादेशस्य स्थानिवत्त्वात् ॥

## ३९३४. आनि लोट् ॥ १६ ॥

आनीत्येतस्य लोडादेशस्योपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति । प्रवपाणि । परिवपाणि । प्रयाणि । परियाणि । लोडिति किम्? प्रक्पानि मांसानि ॥

## ३९३५. नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपति–वहैशाम्यतिचिनोतिदेग्धिषु च ॥ १७ ॥

नेरित्येतस्योपसर्गस्थान्निमित्तादुत्तरस्य नकारस्थ णकारादेशो भवति गद नद पत पद घ मा स्यति हनि याति वाति द्राति प्साति वपति वहति शाम्यति चिनोति देग्धि इत्येतेषु परतः । गद–प्रणिगदति । परिणिगदति । नद–प्रणिनदति । परिणिनदति। पत–प्रणिपतति । परिणिपतति । पद–प्रणिपद्यते । परिणिपद्यते । घ–प्रणिददाति । परिणिददाति । प्रणिदधाति । परिणिदधाति । माङ्–प्रणिमिमीते । परिणिमिमीते । मेङ्–प्रणिमयते । परिणिमयते । परिणिमयते । मा इति माङ्मेङोर्ग्रहणमिष्यते । स्यति–प्रणिष्यति । परिणिष्यति । हन्ति–प्रणिहन्ति । परिणिहन्ति । योति–प्रणियाति।

परिणियाति । वाति–प्रणिवाति । परिणिवति । प्साति प्रणिप्साति । परिणिपसाति । वपतिप्रणिवपति । परिणिवपति । वहति – प्रनिवहति । परिणिवहति । शाम्यति – प्रणिशाम्यति । परिणिशाम्यति । चिनोति–प्रणिचिनोति । परिणिचिनोति । देग्धि=प्रणिदेग्धि । परिणिदेग्धि । अड्व्यवायेऽपि नेर्गदादिषु णत्वमिष्यते–प्रण्यगदत् ॥

## ३९३६. शेषे विभाषाऽकखादावषान्त उपदेशे ॥ १८ ॥

नेरिति वर्त्तते उपसर्गादिति च । अककारखकारादिरषकारान्तश्च उपदेशे यो धातुः शेषमस्मिन् परत उपसर्गस्थान्निमित्तादृत्तरस्य नेर्नकारस्य विभाषा णकर आदेशो भवति । प्रणिपचति । प्रनिपचति । प्रनिमिनत्ति । प्रनिभिनत्ति । अकखादाविति किम्? प्रनिकरोति । प्रनिखादति । अषान्त इति किम्? प्रनिपिनष्टि । उपदेशग्रहणं किम्? इह च प्रतिषेधो यथा स्यात् – प्रनिचकार । प्रनिचखाद । प्रनिपेक्ष्यतीति । इह च मा भूत्–विशेः – प्रणिवेष्टा । प्रणिवेक्ष्यति ॥

## ३९३७. अनितेः ॥ १९ ॥

अनितेर्नकरस्योपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति । प्राणिति । पराणिति ॥

## ३९३८. अन्तः ॥ २० ॥

अनितेरिति वर्त्तते । उपसर्गस्थान्निमित्तादुत्तरस्यानितिनकारस्य पदान्ते वर्त्तमानस्य णकारादेशो भवति । हे प्राण् । हे पराण् । पदान्तस्येति प्रतिषेधस्यापवादोऽयम् । अन्तश्च पदापेक्षो गृह्यते । केचित् पूर्वसूत्र एवैतदन्तग्रहणं सामीप्यार्थममिसंवध्नन्ति, निमित्तसमीपत्थास्यैकवर्णव्यवहितस्थानितिनकारस्य पदान्ते वर्त्तमानस्य णकारादेशो यथ स्यात् । इह मा भूत्–पर्यनितीति । तैद्वितीयमपि पदान्तस्य णत्त्वार्यमन्तग्रहणमा–श्रयितव्यमेव । येषां तु पर्यणितीति भवितव्यमिति दर्शनम् तेषां पूर्वसूरे नार्थोऽन्तग्रहणेन ॥

## ३९३९. उभौ साभ्यासस्य ॥ २१ ॥

सभ्यासशानितेरुपसर्गस्थान्निमित्तादुत्तरस्योभयोर्नकारओर्णकार आदेशो भवति । प्राणिणिषति । प्राणिणत् । पराणिणिषति । पराणिणत् । पूर्वत्रासिद्धीयमद्विर्वचन इत्येतस्मिन्त्सति पूर्वेणैव कृतणत्वस्य द्विर्वचने कृते सिद्धमेतदन्तरेणापि वचनम्,

तत्तु नाश्रयितव्यमिति सूत्रमिदमारभ्यते । तेन औजढदिति सिद्धं भवति (१) ॥

## ३९४०. हन्तेरत्पूर्वस्य ॥ २२ ॥

अकारपूर्वस्य हन्तिनकारस्य उपसर्गस्थान्निमित्तादुत्तरस्य णकार आदेशो भवति । प्रहण्यते । परिहण्यते । प्रहणनम् । परिहणनम् । अत्पूर्वस्येति किम्? पघ्नन्ति । तपरकरणं किम्? क्षिणि–प्राघनि । पर्यघानि ॥

## ३९४१. वमोर्वा ॥ २३ ॥

हन्तेरिति वर्त्तते । वकारमकारयोः परतो हन्तिनकारस्योपसर्गस्थान्निमित्तादुत्तरस्य वा ण कारादेशो भवति । प्रहण्वः । प्रहन्वः । परिहन्वः । प्रहण्मः । परिहण्मः । प्रहन्मः । परिहन्मः (२) ॥

## ३९४२. अन्तरदेशे ॥ २४ ॥

अन्तःशब्दादुत्तरस्य हन्तिनकारस्यात्पूर्वस्य णकारादेशो भवति अदेशाभिधाने। अन्तर्हण्यते । अन्तर्हणनं वर्त्तते । अदेश इति किम्? अन्तर्हननो देशः । अत्पूर्वस्येत्येव। अन्तर्घ्नन्ति । तपरकरणं किम्? अन्तरघानि ॥

## ३९४३. अयनं च ॥ २५ ॥

अन्तरदेश इति वर्त्तते । अयननकारस्यचान्तःशब्दादुत्तरस्य णकारादेशो भवति अदेशाभिधाने । अन्तरयणं वर्त्तते । अन्तरयणं शोभनम् । अदेश इत्येव । अन्तरयनो देशः ॥

## ३९४४. छन्दस्यृदवग्रहात् ॥ २६ ॥

पूर्वपदादिति वर्त्तते । ऋकारान्तादवग्रहात् । पूर्वपदादुत्तरस्य णकारादेशो भवति छन्दसि विषये । नृमणाः । पितृयाणम् । अत्र हि नृमणाः पितृयाणमिति ऋकारोऽवगृह्यते । अवग्रहग्रहणं किमर्थेमुच्यते । यावता संहिताधिकार आध्ययषरिसमाप्तेरित्युक्तम्? विषयोपलक्षणार्थमवग्रहग्रहणमवगृह्यमाणाद्यया स्यादनवगृह्यमणान्मा भूत् । अपदान्ते चावग्रहो नास्ति ॥

## ३९४५. नश्च धातुस्थोरुषुभ्यः ॥ २७ ॥

नस् इत्येतस्थ नकारस्य णकारादेशो भवति धात्तुस्थान्निमितादुत्तरस्योरुशब्दात् तुशब्दाच छन्दसि विषये । धातुस्थात्तावत् – अग्ने रक्षा णः । शिक्षा णो अस्मिन् । उरुशब्दात् – उरुणस्कृधि । षुशब्दात्–अभीषु णः सखीनाम् । ऊर्ध्व ऊषु ण ऊतये । अस्मदादेशोऽयं नसशब्दो बहुवचनस्य वस्नसाविति ॥

## ३९४६. उपसर्गाद् बहुलम् ॥ २८ ॥

उपसर्गस्यान्निमित्तदुरत्तस्य नसो नकारस्य णकारादेशो भवति बहुलम् । प्रणः शूद्रः । प्रणसः । प्रणो राजा । न च भवति–प्र नो मुखतम् । बहुलग्रहणा–द्भाषायामपि भवति–प्रणसं मुखम्(१) । उपसर्गाच्चेति नासिकाया णसादेशः ॥

## ३९४७. कृत्यचः ॥ २९ ॥

कृत्स्थो यो नकारोऽच उत्तरस्तस्योपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति । अन मान अनीय अनि इति निष्ठादेश् एते णत्वं प्रयोजयन्ति । अन – प्रयाणम् । परियाणम् । प्रमाणम् । परिमाणम् । मान–प्रयायमाणम् । परियायमाणम् । अनीय–प्रयाणीयम् । परियाणीयम् । अनिः – अप्रयाणिः । अपरियाणिः । इनि – प्राअयिणौ । परियायिणौ । निष्ठादेशः – प्रहीणः । परिहीणः । प्रहीणवान् । परिहीणवान् । अच इति किम्? प्रभुग्नः । (२) भुजो कौटिल्ये । अस्य निष्ठाप्रत्ययः । ओदितश्चेति निष्ठानत्वम् । चोः कुरिति कृत्वे सिद्धं परिभुग्न इति कृत्स्थस्य णत्वे निर्विण्णास्योपसख्यानं कर्त्तव्यम् । निर्विण्णोऽहमत्रवासेन ॥

## ३९४८. णेर्विभाषा ॥ ३० ॥

ण्यन्ताद्यो विहितः कृत्प्रत्ययः तत्स्थस्य नकारस्योपसर्गस्थान्निमित्तादुत्तरस्थ विभाषा णकारादेशो भवति । प्रयापणम् । प्रयापनम् । परियापणम् । परियापनम् । प्रयाप्यमाणम् । प्रयाप्यमानम् । प्रयापणीयम् । प्रयापनीयम् । अप्रयापणिः । अप्रयापनिः । प्रयापिणौ । प्रयापिनौ । विहितविशेषणं किम्? प्रयाप्यमाणमित्यत्र यका व्यवधानिऽपि यथा स्यादिति ॥

## ३९४९. हलश्चेजुपधात् ॥ ३१ ॥

कृत्यच इति वर्त्तते । हलादिर्यो धातुरिजुपधस्तस्मात्परो यः कृत्प्रत्ययः तत्स्थस्य नकारस्याच उत्तरस्योपसर्गस्थान्निमित्तादुत्तरस्य विभाषा णकारादेशो भवति। प्रकोपणम् । परिकोपणम् । प्रकोपनम् । परिकोपनम् । हल इति किम्? प्रेहणम्। प्रोहणम् । इजुपधादिति किम्? प्रवपणम् । परिवपणम् । कृत्यच इति नित्ये प्राप्ते विकल्पः । अच इत्येव । परिभुग्नः । इजुपधस्य सर्वस्य हलन्तत्वादिह हल्ग्रहणमादिविशेषणम् ॥

## ३९५०. इजादेः सनुमः ॥ ३२ ॥

हल इति वर्त्तते । तेनेह सामर्थ्यात्तदन्तविधिः । इजादेः सनुमो हलन्ताद्धातोर्विहितो यः कृत्तस्थस्य नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य णकारो भवति । प्रङ्खणम् । परेङ्खणम् । प्रेङ्गणम् । परेङ्गणम् । प्रोम्भणम् । परोम्भणम् । सिद्धे सत्यारम्भोनियमार्थः –इजादेरेव सनुमो नान्यस्मादिति । प्रसङ्गनम् । हल इत्यधिकारदण्यन्ते नित्यं विद्ध्यर्थमेतन्न भवति ॥

## ३९५१. वा निंसनिक्षनिन्दम् ॥ ३३ ॥

उपसर्गादिति वर्त्तते । निंस निक्ष निन्द इत्येषां नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य वा णकारादेशो भवति । प्रणिसनम् । प्रनिसनम् । प्रणिक्षणम् । प्रनिक्षणम् । प्रणिन्दनम् । प्रनिन्दनम् । णोपदेशत्वादेतेषां नित्ये प्राप्ते विकल्पः ॥

## ३९५२. न भाभूपूकमिगमिप्यायीवेपाम् ॥ ३४ ॥

भा भू पू कमि गमि प्यायी वेप इत्येतेषामुपसर्गस्थान्निमित्तादुत्तरस्य कृत्स्थस्य नकारादेशो न भवति । भा–प्रभानम् । परिभानम् । भू–प्रभवनम् । परिभवनम् । पू–प्रपवनम् । परिपवनम् । पूञ्ग्रहणं द्रष्टव्यम् । पूङो इहि भवत्येव णत्वम् । प्यायी–प्राप्यानम् । परिप्यानम् । वेप–प्रवेपनम् । परिवेपनम् । ण्यन्तानां भादीनामुपसंख्यानं कर्त्तव्यम् । प्रभापनम् । परिभापनम् ॥

## ३९५३. षात्पदान्तात् ॥ ३५ ॥

षकारात्पदान्तादुत्तरस्य णकारादेशो न भवति । निष्पानम् । दुष्पानम् । सर्पिष्पानम्। यजुष्पानम् । षादिति किम्? निर्णयः । पदान्तादिति किम्? कुष्णाति । पुष्णाति । पदे अन्तः पदान्त इति सप्तमीसमासोऽयम् । तेनेह न भवति–

सुसपिष्केण । सुयजुष्केण । शेषाद्विभाषेति कप् ॥

### ३९५४. नशेः षान्तस्य ॥ ३६ ॥

नेति वर्त्तते । नशेः षकारान्तस्य णकारादेशो न भवति । प्रनष्टः । षान्तस्येति किम्? प्रणश्यति । परिणश्यति । षान्तग्रहणं षान्तभूतपूर्वमात्रस्यापि यथा स्यात्– प्रनङ्क्ष्यति? परिनङ्च्यति ॥

### ३९५५. पदान्तस्य ॥ ३७ ॥

पदान्तस्य नकारस्य णकारादेशो न भवति । वृक्षान् । प्लक्षान् । अरीन् । गिरीन् ।

### ३९५६. पदव्यवायेऽपि ॥ ३८ ॥

पदेन व्यवायः – पदव्यवधानम् । पदे व्यवयेऽपि सति निमित्तनिमित्तिनोर्नकारस्य णकारादेशो न भवति । माषकुम्भवापेन । चतुरङ्गयोगेन । प्रावनद्धम् । पर्यवनद्धम् । प्रगान्नयामः । परिगान्नयामः । पदव्यवायेऽतद्धित इति वक्तव्यम् । इह मा भूत्– आर्द्धगोमयेण । शुष्कगोमयेण । गोश्च पुरीष इति मयट् । स्वादौ पूर्व पदमिति गोशब्दः पूर्वपदं, तेन व्यवायः ॥

### ३९५७. क्षुभ्नादिषु च ॥ ३९ ॥

नेति वर्तते । क्षुभ्ना इत्येवमादिषु शब्देषु नकारस्य णकारादेशो न भवति । क्षुभ्नाति । अजादेशभ्य स्थानिवद्धावादिहापि प्रतिषेधो भवति । क्षुभ्नीतः । क्षुभ्नन्ति । नृनमनः । पूर्वपदात्संज्ञायामिति प्राप्तिः । छन्दस्यदवग्रहादिति च प्राप्नोति । नन्दिन् । नन्दय । नगर । एतान्युत्तरपदानि संज्ञायां प्रयोजयन्ति – हरिनन्दी । हरिनन्दनः । गिरिनगरम् । नृतिर्यङि प्रयोजयति – नरीनृत्यते । नृप्नुनृप्नोति । नर्तन । गहन । नन्दन । निवेश । निवास । अग्नि । अनूप । एतान्युत्तरपदानि प्रयोजयन्ति । परिनर्त्तनम् । परिगहनमिति संज्ञायां पूर्वपदात्संज्ञायामिति प्रप्नोति । परिनन्दनमित्यत्रोपसर्गादसमासेऽपीति प्राप्नोति । शरनिवेशः । शरनिवासः । शराग्निः । दर्भानूपः । इत्येताः संज्ञाः । आचार्यादणत्वं च । आचार्यभोगीनः । आचार्यानी(१) इरिकादिभ्यो वनोत्तरपदेभ्यः संज्ञायाम् । इरिका । तिभिर । समीर । कुर्वेर । हरि । कर्म्मार । इत्युत्तरपदवनशब्दस्य संज्ञायाम् । क्षुम्नादिराकृतिगणः । अविहितलक्षणा णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्यः ॥

## ३९५८. स्तोः श्चुना श्चुः ॥ ४० ॥

सकारतवर्गयोः शकारचवर्गाभ्यां सन्निपाते शकारचवर्गावादेशौ भवतः । स्तोः श्चुनेति यथासंख्यमत्र नेष्यते । सकारस्य शकारेण चवर्गेण द्वाभ्यामपि संनिपाते शकारो भवति । तवर्गस्यापि च शकारेण चवर्गेण च सनिपाते चवर्गो भवति । आदेशे तु यथासंख्यमिष्यते । सकारस्य शकारस्तवर्गस्य च चर्वग इति। सकारस्य शकारेण सन्निपातेवृक्षश्शेते । प्लक्षश्शेते । तस्यैव चवर्गेण – वृक्षश्चिनोति। प्लक्षश्चिनोति । वृक्षश्छादयति । प्लक्षश्छादयति । तवर्गस्य शकारेण – अग्निचिच्छेते। सोमसुच्छेते । सोमसुच्छेते । तस्यैव चवर्गेण–अग्निचिचिनोति । सोमसुच्चिनोति। अग्निचिच्छादयति । सोमसुच्छादयति । अग्निचिज्जयति । सोमसुज्जयति । अग्निचिज्प्तकारम् । सोमसुज्प्तकारम् । अग्निचिञ्जकारः । सोममुञ्जकारः । मस्जेः – मज्जति । भ्रस्जेः–भृज्जति । व्रश्रेः – वृश्रति । यजेः –यज्ञः । याचेः – याच्ञा । शादिति प्रतिषेधो ज्ञापकः संख्यातानुदेशाभावस्य स्तोः श्राविति सप्तमीनिर्दशो न कृतः, पूर्वेण परेण च श्चुत्वं यथा स्यादेति ॥

## ३९५९. ष्टुना ष्टुः ॥ ४१ ॥

स्तोरिति वर्त्तते । सकारतवर्गयोः षकारटवर्गाभ्यां संनिपाते षकारटवर्गावादेशौ भवतः । अत्रापि तथैव संख्यातानुदेशाभावः । षकरेण सकारस्य – वृक्षष्षण्डे । प्लक्षष्षण्डे । तस्यैव टवर्गेण–वृक्षष्टीकते । प्लक्षष्टीकते । वृक्षष्ठकारः । प्लक्षष्ठकारः। तवर्गस्य चकारेण–षेष्टा । पेष्टुम् । कृषीष्ट । कृषीष्थाः । तस्यैव टवर्गण–अग्निचिट्टीकते। सोमसुट्टीकते । अग्निचिट्टकारः । सोमसुट्टकारः । अग्निचिड्डोनः । सोमसुड्डीनः । अग्निचिड्ढौकते । अग्निचिण्णकारः । अत्ट्–अट्टति । अट्ड् अड्डति ॥

## ३९६०. न पदान्ताट्टोरनाम् ॥ ४२ ॥

पदान्ताट्टवर्गादुत्तरस्य स्तोः ष्टत्वं न भवति नामित्येतद्वर्जयित्वा । श्वलिटसांये। मधुलिट्तरति । पदान्तादिति किम्? ईड स्तुतौ–ईट्टे । टोरिति किम्? सर्पिष्टमम् । अनामिति शय्यय । अदितेरपत्यमादित्य्य इत्यत्र तकारात्पर एको यकारो यणो यम इति क्रमजो द्वितीयः । तत्र मध्यमस्य वा लोपो भवति – आदित्यः । आदित्य्यः । आदित्यो देवता अस्य किम्? षष्णाम् । अत्यल्पमिदमुच्यते । अनाम्नवतिनगरीणामिति

वक्तव्यम् । षष्णाम् । षष्णवतिः । षष्णगर्यः ॥

### ३९६१. तोः षि ॥ ४३ ॥

नेति वर्त्तते । तवर्गस्य षकारे यदुक्तं तन्न भवति । अग्निचित्षण्डे । भवान्षण्डे । महान्षण्डे ॥

### ३९६२. शात् ॥ ४४ ॥

तोरिति वर्त्तते । शकारादुत्तरस्य तवर्गस्य यदुक्तं तन्न भवति । प्रश्नः । विश्नः ॥

### ३९६३. यरोऽनुनासिकेऽनुनासिको वा ॥ ४५ ॥

पदान्तग्रहणमनुवर्त्तते । यरः पदान्तस्यानुनासिके परतो वाऽनुनासिकादेशो भवति । वाङ्नयति । वाग्नयति । श्वलिण्नयति । श्वलिड्नयति । अग्निचिन्नयति । अग्निचिनद्यति । त्रिष्टुम्नयति । विष्टुब्नयति । पदान्तस्येत्येव । वेद्मि । क्षुभ्नाति । यतोऽनुनासिके प्रत्यये भाषायां नित्यवचनं कर्त्तव्यम् । वाङ्प्तात्रम् । कियन्मात्रम् । व्यवस्थितविभाषाविज्ञानात् सिद्धम् ॥

### ३९६४. अचो रहाभ्यां द्वे ॥ ४६ ॥

यर इति वर्त्तते । अच उत्तरौ यौ रेफहकारौ ताभ्यामुत्तरस्य यरो द्वे भवतः । अर्क्कः । मर्क्कः । ब्रह्म्मा । उपहन्नुते । अच इति किम्? हनुते । ह्मलयति ॥

### ३९६५. अनचि च ॥ ४७ ॥

अच इति वर्त्तते यर इति च । अच उत्तरस्य यरो द्वे वा (१) भवतोऽनचि परतः । दद्ध्यत्र । मदध्वत्र । अच इत्येव । स्मितम् । ध्मातम् । यणो मयो द्वे भवत इति वक्तव्यम् । केचिदत्र यण इति पञ्चमी मय इति षष्ठीति व्याचक्षते । तेषामुल्क्का, वाल्म्मीक इत्यदाहरणम् । अपरे तु यण इति षष्ठी मय इति पञ्चमीति तेषां दध्य्यत्र, मध्व्वत्रेत्युदाहरणम् । शरः खयो द्वे भवत इति वक्तव्यम् । अत्रापि यदि शर इति पञ्चमी खय इति षष्ठी तदा स्त्थातः स्त्थातेत्युदाहरणम् । अथवा खय उत्तरस्थ शरो द्वे भवतः । वत्स्सराः । अप्स्सरा । अवसाने च यरो द्वे भवत इति

वक्तव्यम् । वाक्क् । वाक् । त्वक्क् । त्वक् । षट्ट् । षट् । तत्त् । तत् ॥

### ३९६६. नादिन्याक्रोशे पुत्रस्य ॥ ४८ ॥

आदिनी शब्दे परत आक्रोशे गम्यमाने पुत्रशब्दस्य न द्वे भवतः । अनचिचेति प्राप्तिः प्रतिषिध्यते । पुत्रादिनी त्वमसि पापे । आक्रोश इति किम्? तत्त्वकथने द्विर्वचनं भवत्येव । पुत्रानत्तीति पुत्त्रादिनी–शिशुमारी व्याघ्री । तत्परे चेति वक्तव्यम् । पुत्रपुत्रादिनी त्वमसि पापे । वा हतजग्धपर इति वक्तव्यम् । पुत्तहती । पुत्रहती । पुत्तजग्धी । पुत्रजग्धी । चयो द्वितीयाः शरि पौष्करसादेः । चयो द्वितीया भवन्ति शति परतः पौष्करसादेराच्चर्यस्य मतेन तकारस्य थकारः – वथसः । ककारस्य खकारः – अक्षरम् । पकारस्य । फकारः – अफसराः ॥

### ३९६७. शरोऽचि ॥ ४९ ॥

नेति वर्त्तते । शरोऽचि परतो न द्वे भवतः । अचो रहाभ्यामिति प्राप्तिः प्रतिषिद्ध्यते । कर्षति । वर्षति । आकर्षः । अक्षदर्शः । अचीति किम्? दश्श्र्यते ॥

### ३९६८. त्रिप्रभृतिषु शाकटायनस्य ॥ ५० ॥

त्रिप्रभृतिषु वर्णेषु संयुक्तेषु शाकटायनस्याचार्यस्य मतेन द्वित्वं न भवति । इन्द्रः । चन्द्रः । उष्ट्रः । राष्ट्रम् । भ्राश्ट्रम् ॥

### ३९६९. सर्वत्र शाकल्यस्य ॥ ५१ ॥

शाकल्याचार्यस्य मतेन सर्वत्र द्विर्वचनं न भवति । अर्कः । मर्कः । ब्रह्मा । अपहनुते ॥

### ३९७०. दीर्घादाचार्याणाम् ॥ ५२ ॥

दीर्घादुत्तरस्थाचार्याणां मतेन न द्वित्वं भवति । दात्रम् । पात्रम् । मूत्रम् । सूत्रम् ॥

### ३९७१. झलां जश् झशि ॥ ५३ ॥

झलां स्थाने जशादेशो भवति झशि परतः । लब्धा । लब्धुम् । लब्धव्यम् । दोग्धा । दोग्धुम् । दोग्धव्यम् । बोद्धा । बोद्धुम् । बोद्धव्यम् । झशीति किम्?

दत्तः । दत्थः । दष्कः ॥

### ३९७२. अभ्यासे चर्च्च ॥ ५४ ॥

अभ्यासे वर्त्तमानावां झलां चरादेशो भवति चकाराज्जश्च । चिखनिषति । चिच्छित्सति । टिठकारयिषति । तिष्ठासति । पिफकारयिषति । बुभूषति । जिघत्सति । डुढौकिषते । प्रकृतिचरां प्रकृतिचरो भवन्ति । चिचीषति । टिटीकिषते । तितनिषति । प्रकृतिजशां प्रकृतिदशो भवन्ति । जिजनिषते । बुबुधे । ददौ । डिड्ढ ॥

### ३९७३. खरि च ॥ ५५ ॥

खरि च परतो झलां चरादेशो भषति । झलग्रहणं नानुवर्त्तते पूर्वसूत्रे चानुकृष्टत्वात् । भेत्ता । भेत्तुम् । भेत्तव्यम् । युयुत्सते । आरिप्सते । आलिप्सते ॥

### ३९७४. वाऽवसाने ॥ ५६ ॥

झलां चरिति वत्तते । अवसाने वर्त्तमानानां झलां वा चरादेशो भवति । वाक। वाग् । त्वक् । त्वग । श्वलिट् । श्वलिड् । त्रिष्टुप् । त्रिष्टुब् ॥

### ३९७५. अणोऽप्रगृह्यस्यानुनासिकः ॥ ५७ ॥

अणः प्रग्रुह्यसंज्ञस्यावसाने वर्त्तमानस्य वानुनासिकादेशो भवति । दधिँ दधि। मधुँ मधु । कुमारीँ कुमारी । अण इति किम्? कर्तृ । हर्तृ । अप्रगृह्यस्येति किम्? अग्नी । वायू ॥

### ३९७६. अनुस्वारस्य ययि परसवर्णः ॥ ५८ ॥

अनुस्वारस्य ययि परतः परसवर्ण आदेशो भवति । शाङ्किता । शङ्कितुम् । शङ्कितव्यम् । उञ्छिता । उञ्छितव्यम् । कुण्डिता । कुण्डितुम् । कुण्डितव्यम् । नन्दिता । नन्दितुम् । नन्दितव्यम् । कम्पिता । कम्पितुम् । कम्पितव्यम् । इह कुर्वन्ति वृषन्ति इत्यत्र णत्वस्यासिद्धत्वात्पूर्व नकारस्यानुस्वारः क्रियते । तस्यापि परसवर्नेन पुनर्नकार एव भवति । तस्याप्यसिद्धत्वत्पुनर्णत्वं न भवति । एवमनुस्वारीभूतो णत्वमतिक्रामतीति । ययीति किम्? आक्रंस्यते । आचिक्रंस्यते ॥

**३९७७. वा पदान्तस्य ॥ ५९ ॥**

पदान्तस्यानुस्वारस्य ययि परतो वा परसर्वणादेशो भवति । तङ्कथञ्चित्रपक्षण्डयमानन्नभः स्थम्पुरुषोऽवधीत् । तं कथं चित्रपक्षं डयमानं न भास्यं पुरुषोऽवधीत् ॥

**३९७८. तोर्लि ॥ ६० ॥**

तवर्गस्य लकारे परसवर्ण्णादेशो भवति । अग्निचिल्लुनाति । सोमसुखनाति । भवाँल्लुनाति । महाल्लुनाति ॥

**३९७९. उदः स्थास्तम्भोः पूर्वस्य ॥ ६१ ॥**

सवर्ण इति वर्त्तते । उद उत्तरयोः स्था स्तम्भ इत्येतयोः पूर्वसवर्णादेशो भवति । उत्थिता । उत्यातुम् । उत्थातव्यम् । स्तम्भेः खल्वपि–उत्तम्मिता । उत्तम्मितुम् । उत्तम्मितव्यम् । स्थास्तम्भोरितिकिम्? उत्खनिः । उदः पूर्वसवर्णत्वे स्कन्देश्छन्दस्युपसंख्यानम् । अग्ने दूरमुत्कन्दः । रोगे चेति वक्तव्यम् । उत्कन्दको रोगः । कन्दतेर्वा धात्वन्तरस्यतद्रूपम् ।

**३९८०. झयो होऽन्यतरस्याम् ॥ ६२ ॥**

झय उत्तरस्य हकारस्थ पूर्वसवर्णादेशो भवति अन्यतरस्याम् । वाग्वसति । वागहसति । श्वलिड्ढसति । स्वलिड्हसति । अग्निचिद्धसति । अग्निचिद्हसति । सोमसुद्धसति । सोममुद् हसति । त्रिष्टुब्भसति । त्रिष्टुब् हसति । झय इति किम्? प्राङ्हसति । भवान् हसति ॥

**३९८१. शश्छोटि ॥ ६३ ॥**

झय इति वर्त्तते अन्यतरस्यामिति च्च । झय उत्तरस्य शकारस्याटि परतश्छकारादेशो भवति अन्यतरस्याम् । वाक्छेते । वाक्शेते । अग्निचिच्छेते । अग्निचित् शेते । सोमसुच्छेते । सोमसुत् शेते । श्वलिट् छेते । श्वलिट् शेते । त्रिष्टुप्छेते । त्रिष्टुप् शेते । छत्वममीति वक्तव्यम् । किं प्रयोजनम् ? तच्छलोकेन, तच्छमश्रणेत्येवमर्थम् ॥

### ३९८२. हलो यमां यमि लोपः ॥ ६४ ॥

अन्यतरस्थामिति वर्त्तते । हल उत्तरेषां यमां यमि परतो लोपो भवति अन्यतरस्याम्। शय्या इत्यत्र द्वौ यकारौ क्रमजस्तृतीयस्तत्र मध्यमरयात्र वा लोपो भवति । शय्या ।शय्यया । अदितेरपत्यमादित्य्य इुत्यत्र तकारात्पर एको यकारो यणो मय इति क्रमजो द्वितीयः । तत्र मध्ययस्य वा लोपो भवति–आदित्यः । आदित्य्यः । आदित्यो देवता अस्य स्थालीपकर्यति आदित्य्यः । आदित्य्य इत्यत्रापि द्वौ यकारौ क्रमजस्तृतीयः । तत्र मध्यमस्य मध्यमयोर्वा लोपो भवति । हल इति किम्? अन्नम् । यमामिति किम्? अग्ग्निः । अर्य्यम् । ममीति किम्? शार्ङ्गम् ॥

### ३९८३. झरो झरि सवर्णे ॥ ६५ ॥

हल इति वर्त्तते अन्यतरस्थामिति च । हल उत्तरस्य झरो झरि सवर्णे परतो लोपो भवति अन्यतरव्याम् । प्रतत्तमवतत्तमित्यत्र त्रयस्तकाराः । क्रमजश्चतुर्थः । तत्र मध्यमस्य मध्यमयोर्वा लोपो भवति । मरुतत्त इत्यत्र चत्वारस्तकाराः क्रमजः पञ्चमस्तत्र मध्यमस्य मध्यमयोर्मध्याप्रानां वा लोपो भवति । मरुच्छब्दस्य ह्यपसंख्यानसामर्ष्यादच उपसर्गात्त इति तत्त्वं भवति । झर इति किम्? शार्ङ्गम् । झरीति किम्? प्रियपञ्च्ञः । अल्लोपस्य चपूर्वत्रासिद्धे न स्थानिवदिति स्थानिव्द्भावप्रतिषेधादत्र चकारस्य अकारे लोपः स्यात् । सवर्ण इति किम्? तर्प्तुम् । तर्प्तव्यम् । सवर्णग्रहणसामर्थ्यासंख्यातानुदेशो न भवति । सवर्णमात्रे लोपो विज्ञायते । तेन शिष्ढ, पिण्ढ इति ढकारे डकारस्य लोपो भवति ॥

### ३९८४. उदात्तादनुदात्तस्य स्वरितः ॥ ६६ ॥

उदान्तादुत्तरस्यानुदात्तस्य स्वरितादेशो भवति । गार्म्यः । वात्स्यः । पचति । पठति । अस्य स्वरितस्थासिद्धत्वादनुदात्तं पदमेकवर्जमित्येतन्न प्रवर्त्तते । तेनोदात्तस्वरितावुभावपि श्रूयेते ॥

### ३९८५. नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् ॥ ६७ ॥

उदात्तोदयस्य स्वरितोदयस्य चानुदात्तस्य स्वरितो न भवति, पूर्वेण प्राप्तः प्रतिषिद्ध्यते, आगार्म्यकाश्यपगालवानां मतेन । उदात्त उदयो यरमात्स उदात्तोदय उदात्तपर इत्यर्थः । एवं स्वरितोदयः । टदात्तोदयस्तावत्–गार्ग्यस्तत्र । वात्स्यस्तत्र।

तत्र शब्द आद्युदात्तः तस्मिन्नुदात्ते परतो गार्ग्यशब्दः स्वरितो न भवति। स्वरितोदयः – गार्ग्यः क्व। वात्स्यः क्व। क्वशब्दः स्वरितः तस्मिन् परतोऽनुदात्तः स्वरितो न भवति। अगार्ग्यकाश्यपगालवानमिति किम्? गार्ग्यस्तत्र। गार्ग्यः क्व। तेषां हि मतेन स्वरितो भवत्येव। उदात्तपरस्येति वक्तव्ये उदयग्रहणं मङ्गलार्थम्। अनेकाचार्यसंकीर्तनं पूजार्थम्॥

### ३९८६. अ अ इति॥ ६८॥

एकोऽत्र विवृतोऽन्यः संवृतस्तत्र विवृतस्य संवृतः क्रियते। अकारो विवृतः संवृतो भवति। वृक्षः। प्लक्षः इह शास्त्रे कार्यार्थमकारो विवृतः प्रतिज्ञातस्तस्य तथाभूरस्यैव प्रयागो मा भूदिति संवृतप्रत्यापत्तिरियं क्रियते। दीर्घप्लुतयोश्चानेन विगृतेनाकारेण ग्रहणं नेष्यत्र्। तेन तयोः संवृतो न भवति। संवृतेन च सर्वगुणस्य मात्रिकस्य ग्रहणमिष्यते। तेन सर्वगुणः प्रत्यापद्यते॥

[इष्ठद्यपसंख्यानवती शुद्धगणा (१) विवृतगूढसूत्रार्था॥
व्युत्पन्नरूपसिद्धिर्वृत्तिरियं काशिका नाम॥ १॥
व्याकरणस्य शरीरम् परिनिष्ठितशास्त्रकार्यमेतावत्॥
शिष्टः परिकरबन्धः क्रियतेऽस्य ग्रन्थकारेण॥ २॥]

**इति श्रीवामनकृतायां काशिकावृत्तावष्टमाध्यायस्य तुरीयः पादः॥**
**समाप्तश्चायमध्यायो ग्रन्थश्च॥ ८॥ ४॥**